THE

PRINCESS OF WALES

Sarasvati Bhavana Texts

EDITED BY

GOPI NATHA KAVIRAJA

No. 40

( PART II )

THE

# KĀLATATTVAVIVECHANA,

PRINTED BY

B. C. BANERJEE

AT THE

Ramkrishna Printing Works,

BENARES CITY.

1933.

सम्राट्स्थपतिश्रीरघुनाथभट्टप्रणीतं

# कालतत्त्वविवेचनम्

( द्वितीयो भागः )

जयपुरराजगुरुकथाभट्टवंशावतंसेन
कथाभट्टश्रीजयचन्द्रजनुषा वेदान्तभूषणोपाधिभूषितेन
वाराणसेयहिन्दूविश्वविद्यालयीयपाठ्यनिर्धारकसमितिसदस्येन
श्रीनन्दकिशोरशर्मणा साहित्याचार्येण
टिप्पण्यादिना समलङ्कृत्य सम्पादितम् ।






THE

# KĀLATATTVAVIVECHANA

BY

RAGHUNATHA BHATTA,



Edited with Introduction, Notes, etc.

*By*

**NANDA KISHORE SHARMA,**

*Sāhityāchārya, Vedāntabhūshana. Research Scholar,*
*Government Sanskrit Library,*
*BENARES.*

**1933.**

# Note by the editor

In the Foreword prefixed to the first part of the book it was noted that the historical and critical Introduction to the work would find a place in the second part when the text is finished. But as the full text could not be completed in this part it is hereby announced for the information of the readers that the Introduction is reserved for the third part.

NANDA KISHORE SHARMA.

# अथ नानातिथिसाध्यव्रतविवेचनम्।

अथ नानातिथिसाध्यव्रतेषु तन्निर्णयः क्रियते। तेषु च ये सोपपदाः सावित्रीत्रिरात्रगोत्रिरात्रबिल्वत्रिरात्रदुर्गानवरात्रादयः शब्दास्त एव तत्तद्देवतादिसम्बन्धस्य तत्तत्कालसम्बन्धस्य च प्रमाणान्तरेणावगतत्वेन प्रवृत्तिसद्भावान्नामधेयानि। ये तु निरुपपदास्त्रिरात्रं पञ्चरात्रं नवरात्रमित्यादयः शब्दा उत्पत्तिविधिष्वन्यत्र वा श्रुतास्तेषामत्यन्तसंयोगवाचिद्वितीयान्तानां समासान्तदर्शनादावश्यकसमाहारसमासत्वाच्चा निरूढप्रायाणां श्रुत्या गुणविधित्वमेव न तु लक्षणया कर्मनामत्वम्। त्रयोदश्यादिवाक्यानि चाग्रिमाणि प्राप्ते त्रिरात्रादिसामान्ये विशेषविधयः। तद्वशादेव च त्रिरात्रादिशब्दान्तर्गतस्य रात्रिशब्दस्य तिथिपरत्वम्। एवं नानातिथिसाध्यत्वेनावगतेषु व्रतेषु विधाद्वयम्। प्रायस्तावद्भेदे प्रमाणाभावादेकमप्युपवासपूजाद्यात्मकं प्रधानम्। अन्यथाऽसंभवत्समुच्चयकालवशादाग्नेयवन्नानातिथिष्वावर्त्तते। तेन तावत्तिथीनां प्रधानकालत्वमेव। केषुचिदन्तिमतिथिकृत्यमेव प्रधानम्। पूर्वतिथिकृत्यं त्वङ्गम्। साङ्गप्रधानप्रयोगस्य तावत्कालव्यापित्वाच्च तेषु त्रिरात्रादिव्यवहारः। "षट्त्रिंशदहो वा एष यद्द्वादशाह" इतिवत्। एकादशीव्रतादावेवंरूपेऽपि न तथा व्यवहारः। अनादेस्तस्यापर्यनुयोज्यत्वात्। तत्र पूर्वविधाक्रान्तेष्वपि येष्वन्तिमतिथेर्निर्णयोपजीव्यत्वरूपप्राधान्यद्योतकं किञ्चिदस्ति। यथा वटसावित्रीव्रतादिषु वटपूर्णिमावटपैतृकीत्यादिसमाख्याः।

"अशक्ता च त्रयोदश्यां नक्तं कुर्याज्जितेन्द्रिया।
अयाचितं चतुर्दश्यां पौर्णमास्यामुपोषणम्" ॥ इति

त्रयोदशीचतुर्दश्युपवासयोरनुकल्पविधानं विशेषतः पौर्णमास्यां "स्नानं सर्षपमृज्जलै" रित्याद्युक्तिरित्येवंजातीयकम्।

तत्र स्वातन्त्र्येण कालव्याप्त्या दिनान्तिमतिथिनिर्णीयैकदेशवर्त्तिनीनामपि तदव्यवहितपूर्वतिथीनामेव यावदपेक्षं ग्रहणं न तु तासां स्वातन्त्र्येण निर्णयः कर्त्तव्यः। यथा पूर्वेद्युरन्वष्टकाश्राद्धयोः सत्यप्यष्टमीश्राद्धतुल्यकक्षत्वे पूर्वेद्युरपरेद्युःशब्दयोश्च सप्तमीनवमीपरत्वेन व्याख्यानात्सत्यपि तिथिप्रयुक्तत्वे तयोस्तिथ्योः पूर्वेद्युरपरेद्युःशब्दाभ्यामष्टम्युपजीवनेनोक्तिवशात्। अन्यथा तथोक्तेर्निरभिप्रायत्वापत्तेः। कालव्याप्तिप्रयुक्तं स्वातन्त्र्येण निर्णयमनादृत्यैकदेशवर्त्तिन्योरप्यष्टमीं स्वातन्त्र्येण निर्णीय तदव्यवहितयोरेव सप्तमीनवम्योः पूर्वेद्युरन्वष्टक्ययोर्ग्रहणं तथा।

यत्र तु न तादृशं किञ्चिदस्ति। तत्र स्वातन्त्र्येणैव तत्तत्कर्मयोग्यतावत्तिथिनिर्णयः कर्त्तव्यः। तस्मिंश्च क्रियमाणे तिथिद्वयप्रयुक्तस्य कर्मणस्तन्त्रादिनानुष्ठानादावृत्त्या वानुष्ठानान्न्यूनसावनदिनव्यापिताऽधिकसावनदिनव्यापिता वा सकलव्रतप्रयोगस्य भवतु न कापि क्षतिः। अत एवोक्तं भविष्योत्तरे—

"व्रती प्रपूजयेद्देवीं सप्तम्यादिदिनत्रये।
द्वाभ्यां चतुर्भिर्वा ह्रासवृद्धिवशात्तिथेः" ॥ इति ॥

एवं सति यत्केषांचिदीदृशेऽपि विषये यथानियमेन सावनदिनत्रयादिव्यापिता भवति। तथोपवासादेरनुष्ठानं तत्पूर्वव्रततुल्यत्वभ्रान्त्या। अन्यथा नवरात्रादिव्रतेष्वपि तथानुष्ठानापत्तेः। न हि तत्रोपवासादिकर्मगता त्रित्वादिसंख्या। येन यथैकदिने क्रियमाणेषु षोडशप्रेतश्राद्धेषु ब्राह्मणभोजनपिण्डदानरूपाणां प्रधानानामप्येकदेशकालकर्तृकत्वादङ्गवत्प्रसक्तं तन्त्रेणानुष्ठानं बाधित्वा संख्याबुद्धिसिद्ध्यर्थं भेदेनानुष्ठानं भवति तथेहापि निर्णयप्राप्ततिथिबाधेनोदयास्तमयसत्त्वप्रयुक्तसाकल्याङ्गीकारेण प्रधानसंख्याबुद्धिसिद्ध्यर्थम्। मुख्यतिथ्यन्तराये तु तिथिशेषोऽपि गृह्यतामितिवन्निर्णयाप्राप्ततिथ्येकदेशेऽप्यनुष्ठानं स्यात्।

# अथ दुर्गापूजाख्यव्रतविवेचनम् ।

एवं नानातिथिसाध्यव्रतानां द्वैविध्ये स्थिते एतदनुसारेणैवाश्विनशुक्लप्रतिपदमारभ्य तद्गतनवमीपर्यन्तं प्रायः सर्वदेशेषु क्रियमाणं यद्दुर्गापूजनात्मकमुत्तरविधाक्रान्तव्रतं तत्र प्रतिपदादिनिर्णयः क्रियते तत्र व्रतस्वरूपं तावद्भविष्योत्तरे—

"एवं च विन्ध्यवासिन्यां नवरात्रोपवासतः ।
एकभक्तेन नक्तेन स्वशक्त्याऽयाचितेन वा ॥
पूजनीया जनैर्देवी स्थाने स्थाने पुरे पुरे ।
गृहे गृहे भक्तिपरैर्ग्रामे ग्रामे वने वने ॥
स्नातैः प्रमुदितैर्हृष्टैर्ब्राह्मणैः क्षत्रियैर्नृपैः ।
वैश्यैः शूद्रैर्भक्तियुक्तैर्म्लेच्छैरन्यैश्च मानवैः ॥
स्त्रीभिश्च कुरुशार्दूल तद्विधानमिदं शृणु" इति ।

विन्ध्यवासिन्यामधिष्ठाने देवी पूजनीयेति संभवाभिप्रायेण । न तु नियतम् । स्थाने स्थाने पुरे पुरे गृहे गृहे तदसंभवात् ।

देवीपुराणेऽपि—

"कन्यासंस्थे रवौ शुक्लामाश्विने प्राप्य नन्दिकाम् ।
अयाची ह्यथवैकाशी नक्ताशी वाथ वाग्वदः ॥
भूमौ शयीत चामन्त्र्य कुमारीर्भोजयेन्मुदा ।
वस्त्रालंकारदानैश्च संतोष्याः प्रतिवासरम् ॥
बलिं च प्रत्यहं दद्यादोदनं मांसमाषवत् ।
त्रिकालं पूजयेद्देवीं जपस्तोत्रपरायणः" ॥ इति ॥

"कन्यासंस्थे रवा"विति प्रायिकाभिप्रायम् । एवं कल्पान्तरप्रतिपादकदेवीपुराणवाक्येऽपि—

"इषे मास्यसिते पक्षे कन्याराशिगते रवौ ।
नवम्यां बोधयेद्देवीं क्रीडाकौतुकमङ्गलैः ॥
ज्येष्ठानक्षत्रयुक्तायां षष्ठ्यां बिल्वाभिमन्त्रणम् ।
सप्तम्यां मूलयुक्तायां पत्रिकायाः प्रवेशनम् ॥
पूर्वाषाढायुताष्टम्यां पूजाहोमाद्युपोषणम् ।
उत्तरेण नवम्यां तु बलिभिः पूजयेच्छिवाम् ॥
श्रवणेन दशम्यां तु प्रणिपत्य विसर्जयेत्" इति ।

इष इति पौर्णमास्यन्तमासाभिप्रायेण । अत्र चोपवासादिदेवीपूजाकुमारिकापूजादिबहुकर्माभिधानेऽपि प्रधानं देवीपूजनमेव । भविष्योत्तरे युधिष्ठिरकृष्णप्रश्नोत्तररूपेतिहासार्थवादे पूजाया एव प्रशंसनात् । तत्र तत्र पूजाया एव फलसम्बन्धश्रुतेश्च ।

तथा च कालिकापुराणे—

"कृत्वैवं परमामापुर्निर्वृतिं त्रिदिवौकसः ।
एवमन्यैरपि सदा देव्याः कार्यं प्रपूजनम् ॥
विभूतिमतुलां लब्धुं चतुर्वर्गप्रदायकम्" इति ॥

पूजयेदित्यधिकृत्य भविष्योत्तरेऽपि—

भवानीतुष्टये पार्थ सम्वत्सरसुखाय च ।
भूतप्रेतपिशाचानां नाशार्थं चोत्सवाय च ॥ इति ।

अन्यत्रापि—

"पूजयित्वाश्विने मासि विशोको जायते नरः" इति ।

"वर्षे वर्षे विधातव्यं स्थापनं च विसर्जनम्" इति देवीपुराणे वीप्साश्रवणात् ।

"यो मोहादथवालस्याद्देवीं दुर्गां महोत्सवे ।
न पूजयति दुष्टात्मा द्वेषाद्वाप्यथ भैरव ॥
क्रुद्धा भगवती तस्य कामानिष्टान्निहन्ति वा ।

इतिकालिकापुराणेऽकरणे प्रत्यवायश्रवणाच्च पूजाया एव नित्यत्वावगमाच्च। "शरत्काले महापूजा क्रियते या च वार्षिकी" इति-मार्कण्डेयपुराणेऽपि पूजाया एव नित्यत्वमवगम्यते। प्रतिवर्षकर्त्तव्यत्वार्थमेव हि वर्षे वर्षे भवा वार्षिकीति व्युत्पत्त्या वार्षिकीपदम्। अन्यथा तद्व्यर्थमेव स्यात्। देवीपुराणे चोपसंहारोक्तदेवीपूजनेनैवायाच्यादिपदानामन्वयेनायाचितादीनां कर्तृविशेषणानां क्रतुयुक्तपुरुषसंस्कारद्वाराङ्गत्वावगमात्।

अत एव निर्णयामृते "पूजयेत्प्रयतो देवीं नरो नियममास्थितः" इति भविष्योत्तरमुपन्यस्य नियमाश्च देवीपुराण एवोक्ता इत्युक्त्वा "कन्यासंस्थे" इत्यादिदेवीपुराणमुपन्यस्तम्।

भागवतेऽप्यर्चनस्यैव व्रतत्वमुक्तम्—"चेरुर्हविष्यं भुञ्जानाः कात्यायन्यर्चनव्रतम्" इति। देवीपुराणेऽपि शारदीपूजामुपक्रम्य तस्या एव व्रतत्वमुक्तम्।

महाव्रतं महापुण्यं शङ्कराद्यैरनुष्ठितम्।
कर्त्तव्यं सुरराजेन्द्र देवीभक्तिसमन्वितैः" ॥ इति ॥

तस्या एव च तत्रैवान्यद्वारापि कर्त्तव्यत्वाभिधानेनावश्यकता प्रतीयते—"स्वयं वाप्यन्यतो वापि पूजयेत्पूजयेत वा" इति। पूजाया एव च त्रिविधत्वमुक्तं स्कन्दभविष्यपुराणयोः—

"शारदी चण्डिकापूजा त्रिविधा परिगीयते।
सात्त्विकी जपयज्ञाद्यैर्नैवेद्यैश्च निरामिषैः ॥
माहात्म्यं भगवत्याश्च पुराणादिषु कीर्त्तितम्।
पाठस्तस्य जपः प्रोक्तः पठेद्देवीमनास्तथा ॥

राजसी बलिदानेन नैवेद्यैः सामिषैस्तथा।
सुरामांसाद्युपहारैर्जपयज्ञैर्विना तु या॥
विना मन्त्रैस्तामसी स्यात्किरातानां तु संमता।
ब्राह्मणैः क्षत्रियैर्वैश्यैः शूद्रैरन्यैश्च मानवैः॥
एवं नाना म्लेच्छगणैः पूज्यते सर्वदस्युभिः” इति।

अत एव होमादेरपि पूजात्वमेवोक्तं लिङ्गपुराणे—

“शारदी या महापूजा चतुःकर्ममयी शुभा।
तां तिथित्रयमासाद्य कुर्याद्भक्त्या विधानतः” ॥ इति॥

स्नपनपूजनबलिदानहोमरूपाणि चत्वारि कर्माणि। तिथित्रयं सप्तम्यादि। अनेन त्रिरात्रकल्प उक्तः।

इदं च व्रतमाश्विनशुक्लप्रतिपदमारभ्य तदग्रिमनवमीपर्यन्तं कार्यमिति मुख्यः कल्पः।

“कन्यासंस्थे रवौ शक्र शुक्लामारभ्य नन्दिकाम्” इत्यारभ्य

“महानवम्यां पूजेयं स्वर्गमोक्षप्रदायिनी” इत्यन्ताद्देवीपुराणात्।

“मासि चाश्वयुजे शुक्ले नवरात्रे विशेषतः।
संपूज्य नवदुर्गां च नक्तं कुर्यात्समाहितः” ॥ इत्यादिवाक्याच्च।

अत्र हि नवरात्रशब्दो रात्रिशब्दस्याहोरात्रपरस्य तिथिविषयपूर्ववाक्यैकवाक्यतया औत्सर्गिकसंपूर्णतिथेरेव प्रायो व्यवहारविषयत्वेन संप्रतिपत्त्या च तिथिलक्षकत्वात्सप्तम्यन्तः कालरूपगुणविधिः। द्वितीयान्तोऽपि क्वचिच्छ्रुतः “कालाध्वनोरत्यन्तसंयोगे” इति वचनात्तादृश एव। न तु नामधेयम्। तत्रैव ग्रन्थे वाक्यान्तरेण प्रवृत्तिनिमित्तभूतकालसम्बन्धस्याविधानेन तत्प्रख्यन्यायाभावात्। श्रुत्या गुणविधाने संभवति बहुव्रीहौ समासान्तानुपपत्त्या समाहारद्विगुत्वेन

रात्रिसमुदायवचनतया निरूढप्रायस्य लक्षणया नामधेयत्वानौचित्यात्। "नवरात्रोपवासतः" इत्यत्र कथंचिदुपवाससामानाधिकरण्यसंभवेऽपि प्रधानेन पूजनेन वैकल्पिकैकभक्तादिनित्यदेवीपूजनादिघटितसमुदायेन वा सामानाधिकरण्याभावाच्च।

यत्तु—

"आश्विने मासि शुक्ले तु कर्त्तव्यं नवरात्रकम्।
प्रतिपदादिक्रमेणैव यावच्च नवमी भवेत्॥
त्रिरात्रं वापि कर्त्तव्यं सप्तम्यादि यथाक्रमम्"।

इति वचने प्रतिपदादिनवमीपर्यन्तं नवरात्राख्यं व्रतं कर्त्तव्यमिति वाक्यार्थं बुद्ध्वोत्तरार्द्धे प्रतिपदादिनवतिथिविधानात्तत्प्रख्यन्यायेन नवरात्रशब्दस्य नामधेयत्वमुक्तं केनचित्। तद्वाक्यार्थापरिज्ञानात्। न ह्यत्र पूर्वोक्तो वाक्यार्थः। किन्तु प्रतिपदादिनवमीपर्यन्तं यन्नवरात्रं नवतिथयः। तत्र सप्तम्यादि यत्त्रिरात्रम्। तत्र चात्यन्तसंयोगेन प्रकृतं देवीपूजनं कर्त्तव्यमिति। निरूढप्रायस्य श्रुत्या स्वतो निश्चितगुणविधित्वत्रिरात्रपदसमभिव्याहारेण च संभवद्गुणविधित्वस्यात्यन्तसंयोगाधिकरणत्ववाचिद्वितीयान्तस्याग्निहोत्रमित्यादिवद्द्वितीयान्तत्वाङ्गीकारेण लक्षणया नामधेयत्वानौचित्यात्। मीमांसारहस्यानभिज्ञतया तु तस्य तादृशवाक्यार्थभ्रमेण तथाभिधानम्। नवरात्रसम्बन्धिव्रतं नवरात्रमिति षष्ठीतत्पुरुषरूपे नवरात्रव्रतशब्दे तस्य सामानाधिकरण्याभिधानमपि भ्रमेणैव। कर्मधारयत्वे कालवाचिनः पूर्वपदस्य लक्षणाप्रसङ्गात्।

न च तिथिह्रासवृद्ध्योर्गुणविध्यसंभवान्नित्यवच्छ्रवणविरोधः। नामधेयत्वं तु यदा कदाचित्प्रवृत्तिनिमित्तसद्भावेनाप्युपपन्नम्। वैश्वदेवशब्दस्येवैकदेशगतदेवतासम्बन्धेनेतिवाच्यम्। रात्रिशब्दस्य तिथिपरत्वेन ह्रासवृद्ध्योरपि तद्गुणविधिसंभवेनाविरोधात्।

ह्रासे तिथिद्वयप्रयुक्तस्य पूजादेस्तन्त्रानुष्ठानेन वृद्धौ चैकतिथिप्रयुक्तस्य प्रक्रान्तनियमभङ्गभयादावृत्त्यानुष्ठानेन सर्वदा नवतिथिप्रयुक्तकर्मसत्त्वात्। यद्यपि—

"वृद्धौ समाप्तिरष्टम्यां ह्रासेऽमाप्रतिपन्निशि।
प्रारम्भो नवचण्ड्यास्तु नवरात्रमतोऽर्थवत्"॥

इति वदद्भिः कैश्चिद्वृद्धिह्रासयोरपि नवाहोरात्रसद्भाव एवोपपादितः। तथाऽप्यमावास्यारात्रौ प्रतिपत्प्रवेशाभावेऽपि प्रतिपत्प्रभृत्येवात्यन्तापचयेनाष्टरात्रोपजनेऽतिवृद्ध्या वाष्टम्यहोरात्रास्पर्शिनवमीं गृहीत्वा दशरात्रोपजने पूर्वप्रकारस्यावश्यकत्वादत्रार्थे मूलाभावाच्चोपेक्षितः स प्रकारः। "तिथिवृद्धौ तिथिह्रासे नवरात्रमपार्थकम्"इति तेषामेवोक्तिस्तु "नवरात्रमतोऽर्थवत्" इत्यभिधानाच्छङ्कान्तर्गतेति प्रतीयते। तस्माद्गुणविधिरेव नवरात्रशब्दो न नामधेयम्।

यस्तु क्वचित् "नवरात्राभिधं कर्म नक्तव्रतमिति स्मृतम्। प्रारम्भो नवरात्रस्य" इत्यादौ कर्मणि नवरात्रशब्दप्रयोगः स लक्षणया। "यदि रथन्तरसामा सोमः स्यात्" "चातुर्मास्यानि पशुः सोमः" इत्यादाविव सोमादिशब्दस्याभिधात्वोक्तिरपि प्रतिपादकत्वमात्राभिप्राया। "सुरा वै वाजिनं सुरा सोम" इत्यत्र नामातिदेशोक्तिवत्। संज्ञासंज्ञिसम्बन्धस्य शास्त्रप्रमेयत्वाभावात्तद्गमकस्य च सामानाधिकरण्यादेरभावस्योक्तत्वात्। तस्मान्नवरात्रादिशब्दैः प्रतिपदादिनवतिथिरूपगुणविधानादत्र व्रते स मुख्यः कालः। अत एव प्रतिपदमारभ्य नवमीपर्यन्तं वृद्ध्या पूजाजपकुमारीपूजनादिकं क्वचिद्विहितम्।

"यदाद्ये दिवसे कुर्याच्चण्डिकापूजनादिकम्।
द्विगुणं तद्द्वितीयेऽह्नि त्रिगुणं तत्परेऽहनि॥
नवमीतिथिपर्यन्तं वृद्ध्या पूजाजपादिकम्" इत्यादिना षष्ठ्यादिपक्षोऽप्युक्तः कालिकापुराणे, कल्पान्तरे—

"कन्यासंस्थे रवौ वत्स शुक्लामारभ्य नन्दिकाम् ।
अयाची त्वथ नक्ताशी एकाशी त्वथ वाग्यवः ॥
प्रातःस्नायी जितद्वन्द्वस्त्रिकालं शिवपूजकः ।
जपहोमसमायुक्तो भोजयेद्वै कुमारिकाः ॥
बोधयेद्बिल्वशाखायां षष्ठ्यां देवीं फलेषु च ।
सप्तम्यां बिल्वशाखां तामाहृत्य प्रतिपूजयेत् ॥
पुनः पूजां तथाष्टम्यां विशेषेण समाचरेत् ।
जागरं च स्वयं कुर्याद्बलिदानं महानिशि ॥
प्रभूतबलिदानं च नवम्यां विधिवच्चरेत् ।
ध्यायेद्दशभुजां देवीं दुर्गातन्त्रेण पूजयेत् ॥
विसर्जनं दशम्यां तु कुर्याद्वै शारदोत्सवैः ।
धूलिकर्दमनिक्षेपैः क्रीडाकौतुकमङ्गलैः ॥
भगलिङ्गाभिधानैश्च भगप्रगीतकैरपि"इति ।

देवीपुराणे तु पूर्वकृष्णनवम्यां देवीबोधनमुक्तम् ।

इषे मास्यसिते पक्षे कन्याराशिगते रवौ ।
नवम्यां बोधयेद्देवीं क्रीडाकौतुकमङ्गलैः ॥
ज्येष्ठानक्षत्रयुक्तायां षष्ठ्यां बिल्वाभिमन्त्रणम् ।
सप्तम्यां मूलयुक्तायां पत्रिकायाः प्रवेशनम् ॥
पूर्वाषाढायुताष्टम्यां पूजाहोमाद्युपोषणम् ।
उत्तरेण नवम्यां तु बलिभिः पूजयेच्छिवाम् ॥
श्रवणेन दशम्यां तु प्रणिपत्य विसर्जयेत् ।
यावद्भूर्वायुराकाशं जलं वह्निशशिग्रहाः ॥
तावच्च चण्डिकापूजा भविष्यति सदा भुवि" इति ।

इष इति पौर्णमास्यन्तमासाभिप्रायेण । कन्याराशिगत इति फलातिशयार्थम् । न तु तन्त्रम् । तथात्वे उपसंहारोक्तनित्यत्वोक्ति-

विरोधापत्तेः। अत एव तत्तत्तिथीनां तत्तन्नक्षत्रयोगोऽपि संभवे फलातिशयार्थ एव। स्पष्टमेतदुक्तं लिङ्गपुराणे—

"मूलाभावेऽपि सप्तम्यां केवलायां प्रवेशयेत्।
तथा तिथ्यन्तरेष्वेवमृक्षे वृत्ते फलोच्चयः"॥

देवलेनापि—

"तिथिनक्षत्रयोर्योगे द्वयोरेवानुपालनम्।
योगाभावे तिथिर्ग्राह्या देव्याः पूजनकर्मणि"॥इति॥

सप्तम्यादिपक्षो भविष्यत्पुराणे—

"व्रती प्रपूजयेद्देवीं सप्तम्यादिदिनत्रये" इति। भविष्योत्तरेऽपि—

"आश्विने मासि शुक्ले तु कर्त्तव्यं नवरात्रिकम्।
प्रतिपदादिक्रमेणैव यावच्च नवमी भवेत्॥
त्रिरात्रं वापि कर्त्तव्यं सप्तम्यादि यथाक्रमम्" इति।

अष्टमीनवम्योरेव वा देवीपूजनं कर्त्तव्यम्।

"अष्टम्यां च नवम्यां च जन्ममोक्षप्रदां शिवाम्।
पूजयित्वाश्विने मासि विशोको जायते नरः"॥

इति वचनात्।

"प्रावृट्काले विशेषेण आश्विने ह्यष्टमीषु च।
महाशब्दो नवम्यां च लोके ख्यातिं गमिष्यति॥

इति देवीपुराणाच्च। केवलाष्टमीकेवलनवमीकल्पावुक्तौ कालिकापुराणे—"यस्त्वेकस्यामथाष्टम्यां नवम्यां वाथ साधकः। पूजयेद्वरदां देवीम्" इति।

ब्रह्मपुराणेऽपि केवलाष्टमीपूजोक्ता—

"तत्राष्टम्यां भद्रकाली दक्षयज्ञविनाशिनी ।
प्रादुर्भूता महाघोरा योगिनीकोटिभिः सह ॥
अतोऽर्थं पूजनीया सा तस्मिन्नहनि मानवैः ।
उपोषितैर्धूपदीपवस्त्रैर्माल्यानुलेपनैः" ॥

अयं चोपवासः पुत्रवतो निषिद्धः—

"उपवासं महाष्टम्यां पुत्रवान्न समाचरेत् ।
यथा तथैव पूतात्मा व्रती देवीं विसर्ज्जयेत्" ॥

इति कालिकापुराणात् ।

केवलनवमीपूजा भविष्यपुराणेऽप्युक्ता ॥

"लब्धाभिषेका वरदा शुक्ले चाश्वयुजस्य च ।
तस्मात्सा तत्र संपूज्या नवम्यां चण्डिका बुधैः" ॥

भविष्योत्तरेऽपि—

'नवम्यां तु नवम्यां तु देवदानवराक्षसैः ।
गन्धर्वैरुरगैर्यक्षैः पूज्यते किंनरैर्नरैः" ॥

उपवासोऽप्यस्यामुक्तः—

"तस्मादियं महापुण्या नवमी पापनाशिनी ।
उपोष्या तु प्रयत्नेन सततं सर्वपार्थिवैः'॥

बलिदानं चास्यां विशेषतः कर्त्तव्यम् । "प्रभूतबलिदानं च नवम्यां विधिवच्चरेत्' इतिकालिकापुराणात् ।

एवं प्रतिपदादिषष्ठ्यादिसप्तम्याद्यष्टम्यादिनवम्यन्तकेवलाष्टमी-केवलनवमीरूपाः कालविकल्पाः संभवासंभवव्यवस्थिता नवरात्रे सिद्धाः । तत्र सर्वेष्वपि पक्षेषु प्रारम्भतिथेः खण्डत्वे पूर्वविद्धाया-

मुत्तरविद्धायां वा देवीपूजनरूपं व्रतं प्रारब्धव्यमिति संशये कालव्याप्त्या निर्णयार्थं तस्य कालो निर्णेतव्यः। तत्र गौड़निबन्धेषु तावत्पूर्वाह्णस्तत्कालत्वेनोक्तस्तद्व्याप्त्यैव च तिथिनिर्णयः कृतः। तथाहि भविष्योत्तरे—

"प्रातरावाहयेद्देवीं प्रातरेव प्रवेशयेत्।
प्रातः प्रातश्च संपूज्य प्रातरेव विसर्जयेत्" ॥

अत्र प्रातःशब्दः पूर्वाह्णपरः।

पूर्वाह्णे नवपत्रिका शुभकरी सर्वार्थसिद्धिप्रदा
आरोग्यं धनदा करोति विजयं चण्डी प्रवेशे शुभा।
मध्याह्ने जनपीडनक्षयकरी संग्रामघोरावहा
सायाह्ने वधबन्धनादिकलहं सर्वक्षतं सर्वदा ॥
सप्तम्यामस्तगायां यदि विशति गृहं पत्रिका श्रीफलाख्या
राज्ञः सप्ताङ्गराज्यं जनसुखमखिलं हन्ति मूलानुरोधात् ॥
तस्मात्सूर्योदयस्थां नरपतिशुभदां सप्तमीं प्राप्य देवीं
भूपालो वेशयेत्तां सकलजनहितां राक्षसर्क्षं विहाय" ॥

इतिज्यौतिषवचनानुरोधात्। देवीपुराणेऽपि—

"युगाद्या वर्षवृद्धिश्च सप्तमी पार्वतीप्रिया।
रवेरुदयमीक्षन्ते न तत्र तिथियुग्मता" ॥ इति ॥
"भगवत्याः प्रवेशादिविसर्गान्ताश्च याः क्रियाः।
तिथावुदयगामिन्यां सर्वास्ताः कारयेद्बुधः" ॥ इति च ॥

यद्यप्येतानि वचनानि सप्तम्यादिदशम्यन्तकर्तव्यप्रवेशादि-विसर्जनान्तपत्रिकापूजाविषयाणि तथापि तैर्विशेषवचनालिङ्गनेन

प्रतिपदादिपूजाया अपि "पूर्वाह्णे दैविकं कर्म"ति सामान्यवचनेन पूर्वाह्ण एव कर्त्तव्यत्वात्प्रतिपदोऽपि सप्तमीवदेव निर्णयस्तेषां संमतः॥ सामान्यविषयाण्यपि—

"शरत्काले महापूजा क्रियते या च वार्षिकी।
सा कार्योदयगामिन्यां न तत्र तिथियुग्मता" ॥

इत्यादीनि नन्दिकेश्वरपुराणादिवचनानि गौडनिबन्धेषु लिखितानि। "कारयेत्"इति स्वयमशक्तावन्यद्वारापि कर्त्तव्यतोक्ता। अत एव देवीपुराणम्—"स्वयं चाप्यन्यतो वापि पूजयेत्पूजयेत वा" इति। उदयकालीनातिथेः सविस्तरपूजाऽपर्याप्तत्वे च संक्षेपपूजायां कालिकापुराणं लिखितम्।

"सम्यक्कल्पोदितां पूजां यदि कर्तुं न शक्नुयात्।
उपचारांस्तथादातुं पञ्चैतान्वितरेत्तदा॥
गन्धं पुष्पं च धूपं च दीपं नैवेद्यमेव च।
अभावे तोयपुष्पाभ्यां तदभावे तु भक्तितः॥
संक्षेपपूजा कथिता तथा वस्त्रादिकं पुनः" इति।

या तु षष्टिदण्डा भूत्वा वृद्धया परदिने त्रिमुहूर्त्तापि सा पूर्वैव ग्राह्या पूर्णत्वात्।

"आदित्योदयवेलाया आरभ्य षष्टिनाडिकाः।
तिथिस्तु सा हि शुद्धा स्यात्सार्वतिथ्यो ह्ययं विधिः"॥

इति नारदीयात्। "अकर्मण्यं तिथिमलम्" इत्युक्तत्वाच्चेति। दाक्षिणात्यपाश्चात्यादिनिबन्धेष्वप्याधुनिकेषु "पूर्वाह्णे दैविकं कर्म" इत्यादिसामान्यवचनेभ्यः।

"आश्विनस्य सिते पक्षे प्रतिपत्सु यथाक्रमम्।
सुस्नातस्तिलतैलेन पूर्वाह्णे पूजयेच्छिवाम्" ॥

इत्यादिविशेषवचनेभ्यश्च पूजारूपस्य प्रधानस्य पूर्वाह्नकालत्व-मङ्गीकृत्य खण्डा प्रतिपद् द्वितीयाविद्धैव ग्राह्येत्युक्तम्। "कर्मणो यस्य यः कालः" इत्यादिसामान्यवचनात्। विशेषवचनानि चोत्तरविद्धा-विधायकानि पूर्वविद्धानिषेधकानि च स्पष्टानि बहूनि लिखितानि।

"या चाश्वयुजमासे स्यात्प्रतिपद्धस्तयान्विता।
शुद्धा ममार्चनं तस्यां शतयज्ञफलप्रदम्॥
देशभङ्गो भवेत्तत्र दुर्भिक्षं चोपजायते।
नन्दायां दर्शयुक्तायां यत्र स्यान्मम पूजनम्॥
तस्माद्भद्रान्विता नन्दा नवरात्रे प्रशस्यते।
आश्विने मासि मे भक्तैः कर्त्तव्या शुक्लपक्षगा॥
प्रतिपत्त्रिमुहूर्त्तापि पुत्रपौत्रप्रवर्द्धिनी।
धनवृद्धिकरी पुंसां सर्वसौख्यकरी तथा॥
अतोऽन्यथा न कर्त्तव्या नवरात्रे व्रते मम।
योऽन्यथा कुरुते मोहाद्राजा पूजाविधौ मम॥
तस्य राष्ट्रे प्रजानाशं करिष्यामि न संशयः।
सामया सहिता ग्राह्या न कदाचिद्विचक्षणैः॥
सर्वक्षयकरी यस्मात्तस्मात्तां परिवर्जयेत्।
अमावास्यायुतां कुर्याद्यदि कश्चित्कदाचन॥
राज्यनाशमवाप्नोति पञ्चत्वं चाधिगच्छति।
पूर्वविद्धा तु या शुक्ला भवेत्प्रतिपदाश्विनी॥
नवरात्रव्रतं तस्यां न कार्यं शुभमिच्छता" इत्यादीनि।
यथा द्वादशभिर्मासैर्मासो वृद्धो मलिम्लुचः।
तथा तिथिस्त्वहोरात्रवृद्धा प्रोक्ता मलिम्लुचा॥
यथा मलिम्लुचः पूर्वो मासो दैवस्तथोत्तरः।
त्याज्या तिथिस्तथा पूर्वा ग्राह्या दैवे तथोत्तरे॥

इत्यादीनि च सामान्यवाक्यान्युपोद्बलकत्वेनोपन्यस्तानि।

माधवहेमाद्रिप्रभृतिभिस्तु प्रामाणिकैर्महद्भिर्निबन्धृभिर्नवरात्रव्रतस्य नक्तव्रतत्वमुक्तम्। तच्च न नक्तभोजनरूपत्वात्। तस्य पाक्षिकत्वादङ्गत्वाच्च। किन्तु रात्रिपर्यायनक्तकालसाध्यत्वात्। तच्च "निशि भ्रमन्ति भूतानि शक्तयः शूलभृद् यतः" इत्यादिसामान्यवचनैः।

"आश्विने मासि मेघान्ते महिषासुरमर्दिनीम्।
निशासु पूजयेद्भक्त्या सोपवासादिकः क्रमात्"॥

तथा—

"आश्विने मासि मेघान्ते प्रतिपच्चा तिथिर्भवेत्।
तस्यां नक्तं प्रकुर्वीत रात्रौ देवीं च पूजयेत्"॥

तथा—

"मासि चाश्वयुजे शुक्ले नवरात्रे विशेषतः।
संपूज्य नवदुर्गां च नक्तं कुर्यात्समाहितः"॥

नक्तं नक्तभोजनमिति पाक्षिकनक्तभोजनपरामर्शः। तथा—

"रात्रिव्रतमिदं देवि सर्वपापप्रणाशनम्।
सर्वकामप्रदं नृणां सर्वशत्रुनिबर्हणम्"

तथा—"रात्रिव्रतमिदं तथा रात्रौ कर्तव्यतेष्यते" इत्यादिदेवीपुराणादिवचनेभ्यश्चावगम्यते।

यद्यपि चैतानि वचनानि न माधवादिभिर्लिखितानि। तथापि "आश्विनस्ये"त्यादिपूर्वाह्णकालवचनस्य तदुपजीविनां च द्वितीयाविद्धग्राह्यत्ववचनानामपि तैरलिखितत्वादेतेषामेव तु तदीयनक्तव्रतत्वोक्तिसंवादित्वादेतानि तैर्दृष्टानीति गम्यते। अन्यथा तेषां तदुक्तेर्निर्मूलत्वापत्तेः। अत्यन्तोपयोगाभावात्तु तेषामलिखनं देवीपूजाप्रकारविशेषकुमारीपूजाबलिदानादिवचनवत्। रात्रिशब्देन लक्षणया

तिथ्युपादानस्यापीदमेव प्रयोजनं यद्रात्रिकालत्वसिद्धिः। अत एवाष्टमीपूजा रात्रावेव विहिता—

"निशायां पूजिता देवी वैष्णवी पापनाशिनी।
तस्मात्सर्वप्रयत्नेन अष्टम्यां निशि पूजयेत्"॥ इति।
"कन्यासंस्थे रवाविषे या शुक्ला तिथिरष्टमी।
तस्यां रात्रौ पूजितव्या महाविभवविस्तरैः॥ इति च।

यत्तु—अतोऽर्थं पूजनीया सा तस्मिन्नहनि मानवै"रिति तत्राहःपदं न सूर्योदयास्तमयान्तर्वर्त्तिकालरूपदिवसपरम्। किन्तु तिथिरूपचान्द्रदिनपरम्। तस्मिन्निति प्रकृताष्टमीपरामर्शात्।

यद्यपि च देवीपुराणे कालत्रये पूजनमुक्तम्।
"त्रिकालं पूजयेद्देवीं जपस्तोत्रपरायणः"॥ इति।

तथापि प्रातर्मध्याह्नयोः संक्षेपपूजनमङ्गम्। विस्तरपूजनं तु प्रधानभूतं रात्रावेवेति द्रष्टव्यम्। एवं सति यत् प्रातरेव कलशस्थापनादिपूर्वकं देवीस्थापनं शिष्टानाम्, "पूर्वाह्णे पूजयेच्छिवा"मित्याधुनिकलिखितं वचनं च तत्सर्वं प्रथमकालपूजार्हमुपपन्नमेव। तिथिनिर्णयस्तु प्रामाणिकोक्तनक्तव्रतत्वबलेन प्रधानपूजनस्य प्रदोषकालत्वमङ्गीकृत्यैव च कर्त्तव्य इति मम मतिः।

यद्यपि च सर्वा रात्रिः पूजाकालत्वेन श्रुता तथापि प्रथमातिक्रमकारणाभावात्समभिव्याहृतनक्तभोजनानुरोधाच्च "प्रदोषव्यापिनी ग्राह्या तिथिर्नक्तव्रते सदा"इति वचनस्य च भोजनात्मकनक्तव्रत इवात्रापि प्रवृत्तेश्च प्रदोष एव तत्कालः। तत्र यदा प्रतिपदः खण्डत्वं तदा षट्सु कर्मकालसम्बंधपक्षेषु दिनद्वये कृत्स्नकर्मकालव्याप्तौ द्वितीयदिन एव व्याप्त्यैकदेशेन वा तत्सम्बन्धे दिनद्वयेऽपि साम्येन वैषम्येण वा तदेकदेशस्पर्शे च संकल्पप्रभृतित्रिकालपूजाकालव्याप्तिलाभात् त्रिसंध्यव्यापित्वाच्चोत्तरग्राह्यत्वस्य नक्तन्यायेनासंदि-

न्थत्वात्पूर्वदिन एव कर्मकालसम्बन्धः, दिनद्वयेऽपि तदस्पर्श इत्यनयोः पक्षयोः कस्यचिद्विशेषस्य वक्तव्यत्वादग्राह्यप्रतिपन्निर्णयः क्रियते।

तत्र द्वितीयदिनेऽस्तमयात्पूर्वं समाप्त्या पूर्वदिन एव व्याप्त्यैकदेशेन वा कालयोगे पूर्वैव ग्राह्या। "कर्मणो यस्य यः कालः" इत्यादिवचनात् "नक्तव्रतेषु सर्वेषु रात्रियोगः प्रशस्यते" इत्यादिवचनात् "प्रतिपदाप्यमावास्या" इति युग्मवाक्याच्च। एवं च पूर्वदिनेऽपि सत्त्वे सुतरां पूर्वा। एतद्विषयाण्येव "अमायुक्तैव कर्त्तव्या प्रतिपच्चण्डिकार्चने" इत्यादीन्याधुनिकनिबन्धलिखितानि वाक्यानि।

न च पूर्वदिनकर्त्तव्यतायाम्—

"आद्यास्तु नाडिकास्त्याज्याः षोडश द्वादशापि वा।
अपराह्णे च कर्त्तव्यं शुद्धसंततिकाङ्क्षिभिः" ॥

इत्येतद्वाक्यविहितनाड़ीत्यागानुपपत्तिः।

"रात्रिरूपा यतो देवी दिवारूपो महेश्वरः। अतः संधौ तयोः पूजा" इति प्रदोष एव पूजोपक्रमविधानादिति वाच्यम्। आधुनिककिंचिद्ग्रन्थलिखितस्यास्य वचनस्य तद्ग्रन्थलिखितेनैव—

"आद्याः षोडश नाडीस्तु लब्ध्वा यः कुरुते नरः।
कलशस्थापनं तत्र अरिष्टं जायते ध्रुवम्" ॥

इति वचनेनैकवाक्यतयापराह्णसमभिव्याहारेण च कुलाचारप्राप्तापराह्णिककलशस्थापनविषयत्वात्। अत एव पूर्वदिने चित्रावैधृतिसत्त्वेऽपि न दोषः। "आरभ्यं नवरात्रं स्याद्धित्वा चित्रां च वैधृतिम्" इत्यस्यापि क्वचिल्लिखितस्य वचनस्य—

"त्वाष्ट्रवैधृतियुक्ता चेत्प्रतिपच्चण्डिकार्चने।
तयोरन्ते विधातव्यं कलशारोपणं गृहे" ॥

इति तत्रत्यवाक्यान्तरवशात्पूर्वोक्तविषयत्वात्। तिथिरात्र्योः प्राधान्यात्संभवविषयत्वाद्वा। पूर्वदिने प्रदोषादूर्ध्वं प्रवृत्त्या द्वितीयदिने चास्तमयपर्यन्तसत्त्वेन दिनद्वये प्रदोषास्पर्शेऽपि पूर्वैव ग्राह्या। गौणकालव्यापित्वात्। "स्वकालादुत्तरः कालो गौणः पूर्वस्य कर्मणः" इति प्रदोषोत्तरकालस्य गौणत्वात्। "नक्तव्रतेषु सर्वेषु रात्रियोगः प्रशस्यते" इति वचनाच्च।

यद्यपि प्रदोषभोजनात्मकनक्तव्रते प्रदोषपूर्वभाविनः सायाह्नस्य तद्गौणकालत्वं तद्व्यापिन्याश्चोत्तरस्या एवैवंविधे विषये तत्र ग्राह्यत्वमुक्तम्। तथापि यथा तत्रैतदर्थप्रतिपादकम्—

"प्रदोषव्यापिनी न स्याद् दिवा नक्तं विधीयते।
आत्मनो द्विगुणा छाया मन्दीभवति भास्करे॥
तन्नक्तं नक्तमित्याहुर्न नक्तं निशि भोजनम्।
एवं ज्ञात्वा ततो विद्वान् सायाह्ने तु भूजिक्रियाम्॥
कुर्यान्नक्तव्रती नक्तफलं भवति निश्चितम्"।

इतिवचनमस्ति। नैवंविधमत्रेति। "रात्रौ देवीं च पूजयेत्" इतिवचनान्मुख्यतयैव नक्ताद्यनुरोधेन वा प्रदोषस्य कर्मकालत्वे गौणतया प्रदोषोत्तरकाल एवात्र कालः। पूजाद्यनुष्ठानोपक्रमस्तु तत्रापि प्रदोष एव तिथेः प्रदोषास्पर्शेऽपि। एकभक्तादेरिव तिथेर्दिनद्वयेऽपि मध्याह्नाद्यस्पर्शित्वे मध्याह्नादौ।

यद्यपि च तद्वदत्र सूर्योदयास्तमयवर्तित्वप्रयुक्ततिथिसाकल्यापादिते तत्काले तिथेः सत्त्वं नास्ति। उदयवाक्येन तदुत्तरभाव्यस्तमयपर्यन्तसत्त्वरूपस्यास्तमयवाक्येन च तत्पूर्वभाव्युदयपर्यन्तसत्त्वरूपस्यैव साकल्यस्य बोधनात्। तथापि "तिथ्यादिषु भवेद्यावान्" इति वचनबोधितपूर्वतिथ्यधिकरणकोत्तरतिथिक्षयप्रक्षेपप्रयुक्तं तत्संभवत्येव। कर्मसमापने तु मुख्यतिथिसत्त्वां प्रतीक्ष्यापि क्रियमाणे न दोषः। प्राशिकनक्तभोजनरूपस्याङ्गस्य प्रधानानुरोधेन

गौणकालेऽप्यनुष्ठानात् । सर्वदाप्यत्र तन्मुख्यकालस्य प्रधानेनानुरोधेन तस्य तथवानुष्ठानाच्च ।

एवमनेन न्यायेनोभयेद्युः प्रदोषास्पर्शित्वे पर्वेति यद्यपि प्रतिभाति । तथापि माधवादिभिर्नक्तव्रतत्वमात्राभिधानाद्विशेषानभिधानाच्चात्यन्त-भोजनात्मकनक्तव्रतसाम्यप्रतीतेर्नवरात्रव्रतेऽप्येतादृशी उत्तरैव ग्राह्या । अत्रापि सायाह्नस्यैव गौणकालत्वात् ।

"प्रदोषव्यापिनी यत्र त्रिमुहूर्त्ता दिवा तथा ।
तदा नक्तव्रतं कुर्यात्स्वाध्यायस्य निषेधवत्" ॥

इत्यस्य यथाक्रमं मुख्यगौणकालावेदकस्य भोजनात्मकनक्तव्रत इवात्रापि प्रवृत्तेरुपपत्तेः ।

समापनं त्वत्र प्रधानपूजायाः सायाह्नस्यापि तत्कालत्वोक्तिबला-त्तद्वृत्तितिथावुपक्रमस्य प्रदोष एव कर्तव्यम् । तस्या रात्रिसंबन्धस्या-वश्यकर्तव्यत्वात् । "सायाह्ने तु भुजिक्रियाम्" इतिवदत्र वचनाभावाच्च । तिथ्यभावेऽपि तत्तिथिकृत्यसमापनस्य च—

"यो यस्य विहितः कालः कर्मणस्तदुपक्रमे ।
विद्यमाना भवेदङ्गं नोज्झितोपक्रमेण तु" ॥

इत्येतत्प्रयुक्तनिर्णयविषये दृष्टत्वात् । उदयवाक्यस्योदयत्व-सामान्योपस्थितद्वितीयसूर्योदयपर्यन्तसाकल्यबोधकत्वेन तत्प्रयुक्त-तत्कालीनतत्तिथिसत्त्वस्यापि वक्तुं शक्यत्वाच्च । संकल्पपूर्वाह्ण-मध्याह्नपूजाकालव्याप्तिलाभादयश्च बहवो गुणा उत्तरस्यामिति सैव युक्ता ।

एवं प्रामाणिकनिबन्धकारोक्तनक्तव्रतत्वानुरोधेन पूर्वेद्युरेव प्रदोष-व्याप्तौ दिनेऽसत्त्वेऽपि तत्र सत्त्वे सुतरां दर्शयुक्ताया यत्र प्रतिपदो

नवरात्रव्रतग्राह्यत्वे न्याय्ये यद्दिदानीन्तनानां केषांचिद्दाक्षिणात्यानां नक्तव्रतत्वापह्नवेन—

"अमायुक्ता न कर्त्तव्या प्रतिपत्पूजने मम।
मुहूर्त्तमात्रा कर्त्तव्या द्वितीयादिगुणान्विता" ॥

इत्यादिकाप्यदृष्टवचनपुरस्कारेण त्रिमुहूर्त्तदर्शयुक्तामहोरात्रव्यापिनीमपि प्रतिपदमुल्लङ्घ्य मुहूर्त्तमात्रापि द्वितीयायुक्तैव सा ग्राह्येति निर्णयकरणं तादृशमेव चानुष्ठानप्रवर्त्तनं तत्साहसमात्रम्।

## अथ दुर्गापूजानुष्ठानपद्धतिः।

एवं निर्णीतायां प्रतिपदि पूर्वाह्णे कृतमङ्गलस्नानो यजमानो नित्यक्रियां कृत्वा अद्यप्रभृतिनवमीपर्यन्तमुपवासाद्यन्यतरनियमोपेतो दुर्गापूजनमहममुकफलकामः करिष्य इति संकल्प्य शुभदारुमये देवीपूजार्थमेव निर्मिते कदलीस्तम्भादिमण्डिते गृह उत्तमवस्त्रादिभूषिते पूर्वगृह एव वा चतुरस्रचतुर्हस्तवेदिकोपरिसर्वतोभद्रादिमण्डलं विधाय मृण्मय्यादिप्रतिमां तन्मध्यस्थापिते आसने तदग्रे च कलशं विधिना स्थापयित्वा सौवर्णादिप्रतिमां तु मण्डलमध्यस्थापितकलशोपर्येव स्थापयित्वा पूजयेत्। "पूज्या मण्डलकुम्भस्था" इति देवीपुराणात्। प्रतिमा च हेमादिमयी भवति—

"तस्मिन् देवी प्रकर्त्तव्या हैमी वा राजती तथा।
मृद्दार्क्षी लक्षणोपेता खड्गे शूलेऽथ पूजयेत्" ॥

तथा—"हेमराजतमृद्धातुशैलचित्रार्पितापि वा।
खड्गे शूलेऽर्चिता देवी सर्वकामफलप्रदा" ॥

तथा—"मृण्मयीं प्रतिमां कृत्वा बिल्वे वा यस्तु पूजयेत्।
आत्मवित्तानुसारेण स लभेन्मौलिकं फलम्" ॥

इत्यादिदेवीपुराणादिवचनात् । प्रतिमालक्षणं च मत्स्यपुराणे—

"जटाजूटसमायुक्तामर्द्धेन्दुकृतलक्षणाम् ।
लोचनत्रयसंयुक्तां पद्मेन्दुसदृशाननाम्" ॥
अतसीपुष्पवर्णाभां सुप्रतिष्ठां सुलोचनाम् ।
नवयौवनसंपन्नां सर्वाभरणभूषिताम् ॥
सुचारुवदनां तद्वत्पीनोन्नतपयोधराम् ।
त्रिभङ्गस्थानसंस्थानां महिषासुरमर्दिनीम् ॥
त्रिशूलं दक्षिणे दद्यात् खड्गं चक्रं क्रमादधः ।
तीक्ष्णं बाणं तथा शक्तिं वामतोऽपि निबोधत ॥
खेटकं पूर्णचापं च पाशमङ्कुशमूर्द्धजम् ।
घण्टां वा परशुं वापि वामतः सन्निवेशयेत् ॥
अधस्तान्महिषं तद्वद्विशिरस्कं प्रदर्शयेत् ।
शिरश्छेदोद्भवं तद्वद्दानवं खड्गपाणिनाम् ॥
हृदि शूलेन निर्भिन्नं निर्यदन्त्रविभूषितम् ।
रक्तरक्तीकृताङ्गं च रक्तविस्फारितेक्षणम् ॥
वेष्टितं नागपाशेन भ्रुकुटीभीषणाननम् ।
सपाशवामहस्तेन धृतकेशं च दुर्गया ॥
वमद्रुधिरवक्त्रं च देव्याः सिंहं प्रदर्शयेत् ।
देव्यास्तु दक्षिणं पादं समं सिंहोपरिस्थितम् ॥
किञ्चिदूर्ध्वं तथा वाममङ्गुष्ठं महिषोपरि ।
स्तूयमानं च तद्रूपममरैः संनिवेशयेत्" ॥ इति ॥

आवाहनपूर्वभावि ध्यानमप्येवमेव कार्यम् । आवाहनमन्त्रश्च—

"एहि दुर्गे महाभागे रक्षार्थं मम सर्वदा ।
आवाहयाम्यहं देवि सर्वकामार्थसिद्धये ॥
अस्यां भूमौ समागच्छ स्थितिं मत्कृपया कुरु ।
रक्षां कुरु सदा भद्रे विश्वेश्वरि नमोऽस्तु ते" ॥ इति ॥

एतन्मन्त्रपाठानन्तरं भगवति दुर्गे इहागच्छ इह तिष्ठ इह संनिधेहि इह स्थिरा भव सुप्रसन्ना भवेत्यपि पठन्ति। पूजाङ्ग-प्रतिमाप्रतिष्ठाप्रकारश्च जन्माष्टमीप्रकरणोक्तो द्रष्टव्यः। वेदिकोणेषु च चत्वारः कलशा विधिना स्थाप्याः।

"चतुरः कलशान्यस्तु दद्याद्देवगृहे नरः।
चतुःसमुद्रवेलायां स तु भुङ्क्ते वसुन्धराम्" ॥

इति विष्णुधर्मोत्तरात्। पूजामन्त्रश्च "जयन्ती" इत्यादिः। कुर्या-द्देव्यास्तु मन्त्रेणेत्यभिधाय—

"जयन्ती मङ्गला काली भद्रकाली कपालिनी।
दुर्गा क्षमा शिवा धात्री स्वाहा स्वधा नमोऽस्तु ते॥
अनेनैव तु मन्त्रेण जपहोमादि कारयेत्"।

इति देवीपुराणात्।

दुर्गालिङ्गको वैदिक आगमिको वा। "तल्लिङ्गैः पूजयेन्मन्त्रैः सर्वदेवान्समाहितः" इत्यग्निपुराणात्। प्रणवादिचतुर्थ्यन्तं नमोऽन्तं नाम वा। "नाम्ना सर्वं समापयेत्" इति साधारणवाक्यात्।

पूजा च षोडशोपचारैः पञ्चोपचारैर्वान्यैश्च राजोपचारैश्छत्र-चामरादिभिः। सा च त्रिकालम्। प्रदोषे विशेषेण। पूजोपकरणानि च गन्धपुष्पधूपदीपनैवेद्यफलादीनि देवीपुराणादिषूक्तानि। पूजा-नन्तरं च मार्कण्डेयपुराणादिगतं देवीमहात्म्यं पठेच्छृणुयाद्वा।

"माहात्म्यं भगवत्यास्तु पुराणादिषु कीर्त्तितम्।
पठेच्च शृणुयाद्वापि सर्वकामसमृद्धये" ॥

इति वचनात्। पाठादिकं च न सकृदेव। किन्तु फलभूमार्थि-नोऽसकृदपि। अन्यत्र तथा दर्शनात्। "संकल्पितस्तोत्रपाठे संख्या

कृत्वा पठेत्सुधीः” इति ताराहीतन्त्रवचनाच्च। आवृत्तिसंख्याभेदेन फलभेदश्च तत्रैवोक्तः।

“चण्डीपाठफलं देवि शृणुष्व गदतो मम।
एकावृत्त्यादिपाठानां यथावत्कथयामि ते॥
संकल्प्य पूर्वं संपूज्य न्यस्याङ्गेषु मनून्सकृत्।
पाठाद्बलिप्रदानाच्च सिद्धिमाप्नोति मानवः॥
उपसर्गोपशान्त्यर्थं त्रिरावृत्तं पठेन्नरः।
ग्रहोपशान्तौ कर्त्तव्यं पञ्चावृत्तं वरानने॥
महाभये समुत्पन्ने सप्तावृत्तं समुच्चरेत्।
नवावृत्त्या भवेच्छान्तिर्वाजपेयफलं लभेत्॥
राजवश्याय भूत्यै च रुद्रावृत्तमुदीरयेत्।
सौख्यं पञ्चदशाद्वृद्धिर्वैरिहानिश्च जायते॥
मन्वावृत्त्याद्रिपुर्वश्यस्तथा स्त्रीवश्यतामियात्।
सौख्यं पञ्चदशावृत्त्या श्रियमाप्नोति मानवः॥
कलावृत्त्या पुत्रपौत्रधनधान्यागमं विदुः।
राज्ञां भीतिविमोक्षाय वैरस्योच्चाटनाय च॥
कुर्यात्सप्तदशावृत्तं तथाष्टादशकं प्रिये।
महारणविमोक्षाय विंशावृत्तं पठेत्सुधीः॥
पञ्चविंशावर्त्तनात्तु भवेद्बन्धविमोक्षणम्।
संकटे समनुप्राप्ते दुश्चिकित्सामये तथा॥
जातिध्वंसे कुलोच्छेदे आयुषो नाश आगते।
वैरिवृद्धौ व्याधिवृद्धौ धननाशे तथा क्षये॥
तथैव त्रिविधोत्पाते तथा चैवातिपातके।
कुर्याद्यत्नाच्छतावृत्तं ततः संपद्यते शुभम्॥
श्रेयोवृद्धिः शतावृत्ताद्राज्यवृद्धिस्तथा परा।
मनसा चिन्तितं देवि सिद्ध्येदष्टोत्तरावृतात्॥

शताश्वमेधयज्ञानां फलमाप्नोति सुव्रते ।
सहस्रावर्त्तनाल्लक्ष्मीरावृणोति स्वयं स्थिरा ॥
भुक्त्वा मनोरथान् कामान्नरो मोक्षमवाप्नुयात् ।
यथाश्वमेधः क्रतुराड् देवानां च यथा हरिः ॥
स्तवानामपि सर्वेषां तथा सप्तशतीस्तवः ।
अथवा बहुनोक्तेन किमेतेन वरानने ॥
चण्ड्याः शतावृत्तपाठात्सर्वाः सिद्ध्यन्ति सिद्धयः” इति ।

श्रवणं च ब्राह्मणादेव कर्त्तव्यम्—

“ब्राह्मणं वाचकं विद्यान्नान्यवर्णजमादरात् ।
श्रुत्वान्यवर्णजाद्राजन्वाचकान्नरकं व्रजेत् ॥

इतिभविष्यत्पुराणात् । स चैवंगुणयुक्तः—

“विस्पष्टमद्रुतं शान्तं स्पष्टाक्षरपदं तथा ।
कलस्वरसमायुक्तं रसभावसमन्वितम् ॥
बुध्यमानः सदा ह्यर्थं ग्रन्थार्थं कृत्स्नशो नृप ।
ब्राह्मणादिषु सर्वेषु ग्रन्थार्थं चार्पयेन्नृप ॥
य एवं वाचयेद् ब्रह्मन् स विप्रो व्यास उच्यते” इति ।

पौराणस्तोत्रपाठश्च स्वार्थं परार्थं वा नारायणादीन्नमस्कृत्य कर्त्तव्यः—

“नारायणं नमस्कृत्य नरं चैव नरोत्तमम् ।
देवीं सरस्वतीं व्यासं ततो जयमुदीरयेत्” ॥

इतिवचनात् । जयशब्दार्थश्च भविष्यत्पुराणे—

“अष्टादश पुराणानि रामस्य चरितं तथा ।
विष्णुधर्मादिशास्त्राणि शिवधर्माश्च भारत ॥
कार्त्स्न्यं च पञ्चमो वेदो यन्महाभारतं स्मृतम् ।
शैवाश्च धर्मा राजेन्द्र मानवोक्ता महीपते ॥
जयेति नाम एतेषां प्रवदन्ति मनीषिणः” ।

पाठप्रकारश्च मत्स्यसूक्ते—

"प्रणवं चादौ जप्त्वा च स्तोत्रं वा संहितां पठेत् ।
अन्ते च प्रणवं दद्यादित्युवाचादिपूरुषः ॥
सर्वत्र पाठे विज्ञेयो ह्यन्यथा विफलं भवेत् ।
शुद्धेनानन्यचित्तेन पठितव्यं प्रयत्नतः ॥
न कार्यासक्तमनसा कार्यं स्तोत्रस्य वाचनम् ।
आधारे स्थापयित्वा तु पुस्तकं प्रजपेत्सुधीः ॥
हस्तसंस्थापनादेव यस्मादल्पफलं लभेत् ।
स्वयं च लिखितं यत्तु कृतिनाऽलिखितं च यत् ॥
अब्राह्मणेन लिखितं तच्चापि विफलं भवेत् ।
ऋषिछन्दादिकं (१) न्यस्य पठेत्स्तोत्रं विचक्षणः ॥
स्तोत्रे न दृश्यते यत्र प्रणवन्यासमाचरेत् ।
संकल्पिते स्तोत्रपाठे संख्यां कृत्वा पठेत्सुधीः ॥
अध्यायं प्राप्य विरमेन्न तु मध्ये कदाचन ।
कृते विरामे मध्ये तु अध्यायादिं पठेत्पुनः" ॥ इति ॥

दुर्गामन्त्रं वा वैदिकमागमिकं वा जपेज्जापयेद्वा । "दुर्गाग्रतो जपेन्मन्त्रमेकचित्तः समाहितः" इति देवीपुराणात् ।

कुमारीपूजनं च प्रत्यहं यथाशक्ति एकद्व्यादिक्रमेण कर्त्तव्यम् । तत्प्रकारश्च देवीपुराणे—ब्रह्मोवाच—

"न तथा तुष्यते शक्र होमदानजपेन तु ।
कुमारीभोजनेनात्र यथा देवी प्रसीदति ॥
पितरो वसवो रुद्रा आदित्या गणलोकपाः ।
सर्वे ते पूजितास्तेन कुमार्यो येन पूजिताः ॥

(१) छन्दादिकमित्यार्षः प्रयोगः ।

शुक्लाष्टमीचतुर्दश्योर्नवम्यां च विशेषतः ।
कृष्णपक्षे विशेषेण भोजयेत्तु कुमारिकाः" ॥ इति । अत्र नवरात्रे ।
प्रसङ्गादन्यत्रापि तद्विधानम्—

"प्रक्षाल्य पादौ सर्वासां कुमारीणां च वासव ।
सुलिप्ते भूतले रम्ये तत्र ता आसने स्थिताः ॥
पूजयेद्गन्धपुष्पैश्च स्रग्भिश्चापि मनोरमैः।
पूजयित्वा विधानेन भोजनं तासु दापयेत् ॥
खण्डलड्डुगुडं सर्पिर्दधि क्षीरं समाक्षिकम् ।
तासां देयं कुमारीणां शनैर्भुञ्जापयेत्तु ताः ॥
पानीयं याचितं देयमन्नं वाऽयाचितं शुभम् ।
तास्तृप्तास्तु यदा सर्वास्तदासां चमनं ददेत् ॥
आचम्य चाक्षतान् दत्वा त्वया क्षन्तव्यमित्युत ।
दातुः शिरसि दातव्याः कन्यकाभिरथाक्षताः ॥
तेनापि प्रणिपातस्तु कर्त्तव्यो भक्तिपूर्वकः ।
अनेन विधिना शक्र देवी क्षिप्रं प्रसीदति ॥
ददाति विविधान् कामान् मनोऽभीष्टान् सुराधिप ।
राज्यं कृत्वा ततः पश्चाद्देवलोकं च गच्छति" ॥ इति ।

पूजान्ते च प्रणम्य देवीं प्रार्थयेदनेन मन्त्रेण—

"महिषघ्नि महामाये चामुण्डे मुण्डमालिनि ।
द्रव्यमारोग्यविजयं देहि देवि नमः सदा ॥
भूतप्रेतपिशाचेभ्यो रक्षोभ्यश्च महेश्वरि ।
देवेभ्यो मानुषेभ्यश्च भयेभ्यो रक्ष मां सदा ॥
सर्वमङ्गलमाङ्गल्ये शिवे सर्वार्थसाधिके ।
शरण्ये त्र्यम्बके गौरि नारायणि नमोऽस्तु ते ॥
रूपं देहि यशो देहि भगं भगवति देहि मे ।
पुत्रान्देहि धनं देहि सर्वान्कामान्प्रदेहि मे" ॥ इति ।

देवीगृहे च घृतपूरितास्तिलतैलपूरिता वा दीपा अहोरात्र प्रज्वालनीयाः। वाद्यादिवादनं च कारणीयम्।

"गीतवादित्रनिर्घोषं देवस्याग्रे च कारयेत्।
घण्टा भवेदशक्तस्य सर्ववाद्यमयी यतः" ॥

इतिमत्स्यपुराणात्। यद्यपि च—

"कन्यासंस्थे रवौ शक्र शुक्लामारभ्य नन्दिकाम्।
अयाची त्वथवैकाशी नक्ताशी वाथ वाग्यदः ॥
प्रातःस्नायी जितद्वन्द्वस्त्रिकालं शिवपूजकः।
जपहोमसमायुक्तः कन्यका भोजयेत् सदा"

इति देवीपुराणे प्रतिपदाद्युपक्रमास्तद्देतिवचनाच्च पूजाजपादिवद्धोमोऽपि प्रत्यहं कर्त्तव्यत्वेनोक्तस्तथापि ब्रह्मपुराणे "तत्राष्टम्यां भद्रकाली" इत्युपक्रम्य "होमैर्ब्राह्मणतर्पणैः" इत्यष्टमीकृत्यमध्येऽभिधानात्,

"नवम्यां बलिदानं च कर्त्तव्यं वै यथाविधि।
जपं होमं च विधिवत्कुर्यात्तत्र विभूतये" ॥

इति कालिकापुराणे च नवमीकृत्यमध्येऽभिधानाच्छिष्टसमाचाराच्चोभयतिथिसम्बन्धेन नवम्यामेव वा होमः कर्त्तव्यः। शिवश्च शिवा च शिवौ तयोः पूजकः। देवीपूजात्मकत्वाद् व्रतस्य। अत्र च देवीपुराणे नन्दा प्रतिपदेव। प्रथमोपस्थितत्वात्। अयाचित्वादीनां नियमानां वाशब्दश्रवणाद्यथासंख्यासंभवाच्च सर्वदा विकल्पः। पूर्वलिखितकालिकापुराणे तु पत्रिकापूजायाः षष्ठ्यादित्वात् षष्ठ्येव नन्दा। अयाचित्वादीनां च यथासंख्यमन्वयः। अथशब्दश्रवणात् संभवाच्च। बलिदानं त्वष्टमीनवम्योरेव।

"पुनः पूजां तथाष्टम्यां विशेषेण समाचरेत् ।
जागरं च स्वयं कुर्याद्बलिदानं महानिशि ॥
प्रभूतबलिदानं च नवम्यां विधिवच्चरेत् ।

इति कालिकापुराणात् ।

यद्यपि च देवीपूजायां ब्राह्मणानामप्यधिकारः ।

"कर्त्तव्यं ब्राह्मणाद्यैस्तु क्षत्रियैर्लोकपालकैः ।
गोधनार्थं तथा वैश्यैः शूद्रैः पुत्रसुखार्थिभिः ॥
सौभाग्यार्थं तथा स्त्रीभिरन्यैश्च धनकाङ्क्षिभिः ।
महाव्रतं महापुण्यं शङ्कराद्यैरनुष्ठितम् ॥
कर्त्तव्यं सुरराजेन्द्र देवीभक्तिसमन्वितैः" इति देवीपुराणात् ।
"स्नातैः प्रमुदितैर्हृष्टैर्ब्राह्मणैः क्षत्रियै नृपैः ।
वैश्यैः शूद्रैर्भक्तियुक्तैर्म्लेच्छैरन्यैश्च मानवैः ॥ इति भविष्योत्तराच्च ।

तथापि यथा सुरया स्वगात्ररुधिरेण च पूजा ब्राह्मणस्य न भवति ।

"स्वगात्ररुधिरं दत्त्वा ब्रह्महत्यामवाप्नुयात् ।
मद्यं दत्वा ब्राह्मणस्तु ब्राह्मण्यादेव हीयते" ॥

इति कालिकापुराणात् । "मद्यमपेयमदेयमनिग्राह्यम्" इत्युशनोवचनाच्च । तथा पशुबलिदानमांसनैवेद्यपूजापि तस्य न भवति । तस्याः "राजसी बलिदानेन नैवेद्यैः सामिषैस्तथा" इति राजसत्वात् । ब्राह्मणस्य च सात्त्विककर्मस्वेवाधिकारस्य भगवद्गीतादिषु प्रसिद्धत्वात् । तेन "सात्त्विकी जपयज्ञाद्यैर्नैवेद्यैश्च निरामिषा" इतीयमेव भवति । स्पष्टमेव च "कन्यासंस्थे रवौ शक्र" इत्यादिना ।

"दुर्गाग्रतो जपेन्मन्त्रमेकचित्तः समाहितः" इत्यन्तेन सर्वसाधारणपूजाप्रकारमभिधाय—

"तदर्द्धयामिनीशेषे विजयार्थं नृपोत्तमः ।
पश्वाब्दं लक्षणोपेतं गन्धधूपस्रगर्चितम् ।
विधिवत्कालि कालीति जप्त्वा खड्गेन घातयेत्" ॥

इति पशुबलिदानादि राजकृत्यत्वेनैव देवीपुराणेऽभिहितम् । एवं च—

"पशुघातः प्रकर्त्तव्यो (१) गवलाजवधस्तथा ।
तथा देवीं पूजयित्वा येऽर्द्धरात्रेऽष्टमीषु च ॥
घातयन्ति पशून् भक्त्या ते भवन्ति महाबलाः ।
बलिं च ये प्रयच्छन्ति सर्वभूतविनाशनम् ॥
तेषां तु तुष्यते देवी यावत्कल्पं तु शाङ्करम्" ।

इत्यादि । यावत्किञ्चिन्नानापशुघाततद्बलिदानविधानं शिष्टपरिगृहीतकालिकादेवीपुराणादिगतं तदग्नीषोमीयादिपशुहिंसान्यायेन धर्म्यमपि क्षत्रियादिविषयमेवेति तत्प्रकारो न लिख्यते । अत एव विस्तरभिया चाश्वादिपूजाविधिरपि न लिख्यते । माषभक्तादिना तु बलिदानं ब्राह्मणस्य भवति ।

"माष (२) कुलमाषमांसाद्यैर्देयो दिक्षु बलिर्निशि ।
कूष्माण्डमिक्षुदण्डश्च मद्यमासव एव च ॥
एते बलिसमा ज्ञेयास्तृप्तौ छागसमा मताः" ।

इतिकालिकापुराणात् । होममन्त्रश्च "जयन्ती" इत्यादिः । "अनेनैव तु मन्त्रेण जपहोमादि कारयेत्" इति प्राग्लिखितदेवीपुराणात् । होमद्रव्ये चाज्यतिलादि । "पूजयेत्तिलहोमैश्च दधिक्षीरघृतादिभिः" इतिदेवीपुराणात् ।

---

(१) गवलो महिषः ।

(२) "कुल्माषं काञ्जिके यावके पुमान्" इति मूर्द्धन्यान्ते मेदिनी । कुल्माषो माषादिमिश्रमर्धस्विन्नमोदनमिति मुकुन्दः ।

केचित्तु मार्कण्डेयपुराणागतसप्तशतीस्तवेन प्रतिश्लोकं स्वाहाकारान्ते तिलसर्पिर्मिश्रपायसेन होमं कुर्वन्ति। प्रतिश्लोकं च "जुहुयात्पायसं तिलसर्पिषा" इति रहस्याख्यग्रन्थवचनं च तत्र प्रमाणमुपन्यस्यन्ति।

एवं नवम्यां होमं समाप्य प्रत्यहवन्नियमयुक्तो देवीपूजाकुमारीपूजनब्राह्मणभोजनादि कृत्वा दक्षिणामाचार्याय दद्यात्।

"नवम्यां पूर्ववत्पूजा कर्त्तव्या भूतिमिच्छता।
दक्षिणां वस्त्रयुग्मं च आचार्याय निवेदयेत्" ॥

इति मत्स्यसूक्तात्।

"आश्विने मासि शुक्ले तु कर्त्तव्यं नवरात्रकम्।
प्रतिपदादिक्रमेणैव यावच्च नवमी भवेत्॥
त्रिरात्रं वापि कर्त्तव्यं सप्तम्यादि यथाक्रमम्"।

इति भविष्योत्तरवचनात्।

"लब्धाभिषेका वरदा शुक्ले चाश्वयुजस्य च।
तस्मात्सा तत्र संपूज्या नवम्यां चण्डिका बुधैः" ॥

इति भविष्यवचनाच्च नवम्यां प्रतिपदादिवत्पूजा आवश्यकी। अथ दशम्यां देवीविसर्जनं नियमत्यागश्च।

अत एव भविष्यपुराणोक्ते प्रतिपदादिविशेषपूजाप्रकारेऽपि नवमीपर्यन्तं पूजामुक्त्वा दशम्यामेव विसर्जनमुक्तम्।

"केशसंस्कारद्रव्यादि प्रदद्यात्प्रतिपद्दिने।
पट्टडोरं द्वितीयायां केशसंयमहेतवे॥
दर्पणं च तृतीयायां सिन्दूरालक्तकं तथा।
मधुपर्कं चतुर्थ्यां तु तिलकं नेत्रमण्डनम्॥

पञ्चम्यामङ्गरागं च शकथालङ्करणानि च ।
षष्ठ्यां बिल्वतरौ बोधं सायंसंध्यासु कारयेत् ॥
सप्तम्यां प्रातरानीय गृहमध्ये प्रवेशयेत् ।
उपोषणमथाष्टम्यामात्मशक्त्या च पूजनम् ॥
नवम्यामुग्रचण्डायास्तद्वदेवार्चनं दिवा ।
पूजा च बलिदानं च तत्त्वमातॄः प्रपूजयेत् ॥
कुमारी पूजनीया च भूषणीया च भूषणैः ।
संपूज्य प्रेषणं कुर्याद्दशम्यां शाबरोत्सवैः ॥
अनेन विधिना यस्तु देवीं पूजयते नरः ।
स्कन्दवत्पालयेत्तं तु देवी सर्वापदि स्थितम् ॥
पुत्रदारधनर्द्धीणां संख्या तस्य न विद्यते ।
भुक्त्वेह परमान् भोगान् प्रेत्य देवगणो भवेत्" ॥

इति कालिकापुराणेऽपि कल्पान्तरे रामरावणयोर्जयपराजयार्थं प्रतिपदि देव्याः प्रबोधनं द्वितीयाप्रभृत्यष्टमीपर्यन्तं रामरावणयुद्धदर्शनपूर्वकं नवम्यां कृतस्य रावणवधस्य दर्शनं चोक्त्वा—

"निहते रावणे वीरे नवम्यां सकलैः सुरैः ।
विशेषपूजां दुर्गायाश्चक्रे लोकपितामहः" ॥

इति नवम्यां देव्या विशेषपूजामुक्त्वा तेनैव च प्रतिपत्प्रभृतिपूजां सूचयित्वा "ततः संप्रेषिता देवी दशम्यां शाबरोत्सवैः" इति दशम्यामेव विसर्जनमुक्तम् ।

एवं सति यत्केषांचिद् भ्रान्तानां नवमीपारणाचरणं तन्मूलभूतवचनकल्पनं च तत्सर्वं शिष्टैः कदाचिदष्टमीयुक्तनवम्यां नवमीकृत्ये जाते द्वितीयनवम्यां क्रियमाणां पारणामुपलभ्य । तत्र नवमीप्रयुक्तत्वभ्रान्त्या प्रवृत्तः शक्तिभ्रान्त्यैवासाधुशब्दप्रयोग इत्युपेक्षणीयम् ।

प्रतिपदादिदेवीपूजाशक्तौ सप्तम्यादिदिनत्रये यथाक्रमं मूलादिनक्षत्रत्रययुक्ते केवले वा महाष्टम्यादिदिनत्रये नवम्यामेव वा संपूज्य

श्रवणोपेतायां केवलायां वा दशम्यां देव्या नियमानां च विसर्जनम्। अष्टम्यामेव वा सम्पूज्य नवम्यामित्युक्तम्। षष्ठ्यादिपक्षस्तु पत्रिकापूजायाम्। सा च वक्ष्यते।

इयं चाष्टमी नवमीविद्धा ग्राह्या। "वसुरन्ध्रयोः" इति युग्मवचनात्।

"अष्टम्यामुदिते सूर्ये दिनान्ते नवमी भवेत्।
कुजवारो भवेत्तत्र पूजनीया प्रयत्नतः" ॥

इति विशेषवचनाच्च।

"नाष्टमी सप्तमीयुक्ता सप्तमी नाष्टमीयुता" इत्यादीनि चाष्टमीनवमीनिर्णयप्रकरणलिखितानि वचनान्यत्रोपोद्वलकानि। तेन नवरात्रव्रतस्य नक्तव्रतत्वेन प्रतिपदादिक्रमेण विशेषवचनाच्चाष्टम्यामपि रात्रावेव पूजेति कर्मकालव्यापित्वात्सप्तमीविद्धैव रात्रियोगिन्यष्टमी तत्र ग्राह्येति यद्यपि प्रतिभाति। अत एव दुर्गाभक्तितरङ्गिण्यामपि— "रात्रिपूजायामष्टमी रात्रियोगिनी पूर्वैव ग्राह्या। कालव्याप्तिशास्त्रात्। युग्मादिवचनं तु दिवापूजाविषयम्" इत्युक्तम्। तथापि—

"अष्टम्या नवमी युक्ता नवम्या चाष्टमी युता।
अर्द्धनारीश्वरप्राया तिथिः सर्वव्रतादिषु" ॥

सर्वेषु रात्रिसाध्येष्वपि।

"नवमीसंयुता कार्या सदा दुर्गाष्टमी बुधैः।
सप्तमीसंयुता हन्ति पूर्वपुण्यफलं कृतम्" ॥

सदा रात्र्यस्पर्शेऽपि।

"नवमीसहसंयुक्तामष्टमीं कारयेद्बुधम्।
दुर्गा देवी तथा पूज्या पूर्वविद्धां न कारयेत्" ॥

इत्यादिभिर्विष्णुधर्मोत्तरदेवीपुराणस्कन्दपुराणादिगतैः सर्वसंमतैर्विशेषवचनैर्गौणीभूततृतीयादिवत्कर्मकालव्याप्तिशास्त्रं बाधित्वा

नवमीयुतायामेव रात्रावसत्यामप्यष्टम्यां नवमीपूजया सह तन्त्रेणाष्टमीपूजोचिता । अत एव कामरूपीयादिनिबन्धेषु वचनम्—

"अष्टम्याः शेषदण्डश्च नवम्याः पूर्व एव च ।
तत्र या क्रियते पूजा विज्ञेया सा महाफला" ॥ इति ॥
"अष्टमीनवमीसंधौ तृतीया खलु कथ्यते ।
तत्र पूज्या त्वहं पुत्र योगिनीगणसंयुता" ॥

इति कालिकापुराणोक्ता तृतीया सन्धिपूजाप्यष्टमीनवमीपूजाभ्यां तन्त्रेणैव सिद्ध्यति । "उपोषितो द्वितीयेऽह्नि पूजयेत्पुनरेव ताम्" इत्यष्टम्युपवासपरदिनविहिता तु नवमीपूजा प्रातर्वर्त्तमानायां नवम्यां कर्त्तुं शक्यैव । "विसर्जनात्पूर्वम्" इति न तदनुरोधेनापि सप्तमीयुतायामष्टम्यामुपवासादि । उपवासे तु विशेषतोऽपि नवमीसप्तमीविद्धाविधिनिषेधौ । गर्गः—

"एकादश्यष्टमी षष्ठी पौर्णमासी चतुर्दशी ।
अमावास्या त्रयोदशी ता उपोष्याः परान्विताः ॥" इति ।

स्कन्दपुराणे—

"षष्ठ्येकादश्यमावास्या पूर्वविद्धा तथाष्टमी ।
सप्तमी परविद्धा च नोपोष्यं तिथिपञ्चकम्" ॥ इति ।

अत्र चाष्टमी शुक्ला ।

"शुक्लपक्षेऽष्टमी चैव शुक्लपक्षे चतुर्दशी ।
पूर्वविद्धा न कर्त्तव्या कर्त्तव्या परसंयुता ॥
उपवासादिकार्येषु एष धर्मः सनातनः" इति निगमात् ।

अत एव दुर्गोत्सवप्रकरणे नवमीयुताया अष्टम्याः प्रशंसा भीमपराक्रमे ।

"न दिवा न निशापि च विष्टिहता न च सप्तमिशल्यसमोपहता।
यदि चाष्टमिशेषभवा नवमी अमरैरपि पूज्यतमा कथिता" ॥इति।

यदि तिथिद्वैधे अष्टमीशेषभवा नवमी भवेन्नवमीविद्धाष्टमी लभ्यत इति यावत्तदा सा अमरैरपि पूज्यतमा भवेत्। यतो दिवा निशायामपि विष्टिहता न भवति। विष्टिदूषितस्य तत्पूर्वदलस्य पूर्वाहोरात्रे गतत्वात्। सप्तमीशल्येन शल्यवदतिदुष्टेन सप्तमीशेषेण चोपहता न भवतीत्यस्यार्थः। यदा तु नवमीदिने सूर्योदयोत्तर-मष्टम्यास्त्रिमुहूर्त्तव्यापित्वान्नवमीविद्धत्वेऽपि परेद्युः क्षयवशान्नवमी सूर्योदयं न स्पृशति तदाष्टमी सप्तमीविद्धैव ग्राह्या।

"यदा सूर्योदये न स्यान्नवमी चापरेऽहनि।
तदाष्टमीं प्रकुर्वीत सप्तम्या सहितां नृप" ॥

इति स्मृतिसंग्रहवचनात्। तथाच—

"अहं भद्रा च भद्रा च नावयोरन्तरं क्वचित्।
तस्माद्वै सप्तमीविद्धा कार्या दुर्गाष्टमी तिथिः" ॥

इत्यादीन्यपि वचनान्येतद्विषयाण्येव।

"मूलेनापि हि संयुक्ता सदा त्याज्याष्टमी बुधैः।
लेशमात्रेण सप्तम्या अपि स्याद्यदि दूषिता" ॥

इति निषेधश्च पूर्वोक्तविषयः। अत्र यद्यपि "अष्टम्यामुदिते सूर्ये" "अर्धनारीश्वरप्राया" इत्यादिवचनेभ्यः शुद्धाया अपि पूर्वाष्टम्याः परित्यागेन नवमीयुक्ताया ग्राह्यत्वं प्रतीयते। तथापि बहुषु वचनेषु सप्तमीयुतानिषेधसाहचर्येणैवोत्तराग्राह्यत्वविधानाच्चाविद्धोत्तरदिने नवमीयुक्तापि पूर्वैव ग्राह्या। अत एव गौरीतृतीयायाश्चतुर्थीयोग-प्रशंसामात्रेण माधवेनोक्तः शुद्धात्यागो नादृतः। केवलं "वर्जनीया प्रयत्नेन सप्तमीवेधसंयुता" "पूर्वविद्धां न कारयेत्" इत्यादिवचनेभ्यः

प्रतीयमान औत्सर्गिकत्रिमुहूर्त्तवेध एवात्र निषेधप्रयोजको न चोत्तर-दिने त्रिमुहूर्त्तसत्त्वमेव ग्राह्यताप्रयोजकम् । किन्तु—

"सप्तमीशल्यसंविद्धा वर्जनीया सदाष्टमी ।
स्तोकापि सा तिथिः पुण्या यस्यां सूर्योदयो भवेत् ॥
लेशमात्रेण सप्तम्या सा कार्योदयगामिनी" ।

इत्यादिवचनाद् गौरीतृतीयावदेवाल्पेनापि सप्तमीयोगेन त्याज्यत्वं घटिशोऽप्युदयमात्रसत्त्वेनापि चोत्तरस्या ग्राह्यत्वं द्रष्टव्यम् । "व्रतोपवासनियमे घटिकैका यदा भवेत्" इत्यादिसामान्यवचनेभ्यः । नवमी तु सदाष्टमीविद्धैव ग्राह्या युग्मवाक्यात् ।

"श्रावणी दुर्गनवमी तथा दूर्वाष्टमी च या ।
पूर्वविद्धैव कर्त्तव्या शिवरात्रिर्बलेर्दिनम्" इति वचनात् ।

"अश्वयुक् शुक्ल पक्षे या अष्टमी मूलसंयुता । सा महानवमी प्रोक्ता" इत्यादिवचनाच्च । यदा तु नवम्यष्टमीविद्धा भूत्वा द्वितीय-दिनेऽपि सूर्योदये कियती भवति तदा नवमीप्रयुक्तस्य पूजादेः कृतत्वेऽपि महाबलिदानमात्रं द्वितीयदिने कर्त्तव्यम् ।

"अष्टम्यामुदिते सूर्ये दिनान्ते नवमी भवेत् ।
प्रभाते बलिदाने च कियन्मात्रापि लभ्यते ॥
नवम्यां तत्र संपूज्या दुर्गा दुर्गार्तिनाशिनी" ।

इति वचनात् । अत्र पूजा बलिदानरूपैव ।

"सूर्योदये परं रिक्ता पूर्णा स्यादपरा यदि ।
बलिदानं प्रकर्तव्यं तत्र देव्याः शुभावहम् ॥
बलिदाने कृतेऽष्टम्यां राष्ट्रभङ्गो भवेन्नृप" ।

इति देवीपुराणात् ।

अत्र बलिदानं नवमीप्रयुक्तम्। अष्टमीप्रयुक्तस्य तत्रैव कर्त्तव्यत्वात्। द्वितीयदिने नवम्या अलाभे तु पूर्वद्युरेव नवमीमध्ये कार्यम्।

"दशम्यां बलिदानं तु दीयते यत्र मानवैः।
तद्राष्ट्रं नाशमायाति मरकोपद्रवैः स्फुटम्" ॥

इति भविष्ये नवमीप्रयुक्तबलिदानस्य दशम्यां करणे दोषश्रवणात्। या तु—

"आश्विनस्य सिते पक्षे सुमुहूर्त्तेन सप्तमी।
तस्यां च पत्रिका पूजा कर्त्तव्या नवनायकैः॥
प्रशस्तां सफलां बिल्वशाखामाहृत्य पूजयेत्' ।

इति ज्योतिःशास्त्रे विहिता बिल्वशाखायां दुर्गापूजा तदङ्गभूतं बिल्वतरौ देवीबोधनमाश्विनकृष्णनवम्यामार्द्रायुक्तायां केवलायां वा कर्त्तव्यम्।

"कन्यायां कृष्णपक्षे तु पूजयित्वार्द्रभे दिवा।
नवम्यां बोधयेद्देवीं महाविभवविस्तरैः" ॥ इति लिङ्गपुराणात्।

"इषे मास्यसिते पक्षे" इति प्रागुदाहृतदेवीपुराणाच्च। नवम्यां बोधनासामर्थ्ये नवरात्रान्तरगतषष्ठ्यां तत्कर्तव्यम्।

"षष्ठ्यां बिल्वतरौ बोधं सायं संध्यासु कारयेत्" इति भविष्यवचनात्। तेन दिवेत्युक्त्वान्नवमी पूर्वाह्णव्यापिनी बोधने ग्राह्या। उभयत्र तद्व्याप्तावार्द्रायोगो विनिगमकः। षष्ठी तु सायंसंध्याव्यापिनी। आमन्त्रणं तु षष्ठ्यामेव। "ज्येष्ठानक्षत्रयुक्तायां षष्ठ्यां बिल्वाभिमन्त्रणम्" इतिप्राग्लिखितदेवीपुराणात्। बोधनादिषु

तत्तत्तिथिषु तत्तन्नक्षत्रयोगे फलाधिक्यम् । न तु स एवादरणीयो लिङ्गपुराणदेवलवचनाभ्यामित्युक्तम् ।

"तिथिः शरीरं देवस्य तिथौ नक्षत्रमाश्रितम् ।
तस्मात्तिथिं प्रशंसन्ति नक्षत्रं न तिथिं विना" ॥

इति ज्योतिःशास्त्राच्च । अत्र च

"युगाद्या वर्षवृद्धिश्च सप्तमी पार्वतीप्रिया ।
सूर्योदयमुदीक्षन्ते न तत्र तिथियुग्मता" ॥

इति वचनेन, "प्रातरावाहयेद्देवीम्" इत्यादिप्रागुल्लिखितवचनैः ।

"पत्रीविसर्जनं रात्रौ प्रवेशं वा करोति यः ।
तस्य राज्यविनाशः स्याद्राजा च विकलो भवेत् ॥
ऋक्षयोगानुरोधेन रात्रौ पत्रीप्रवेशनम् ।
विसर्गं वा चरेद्यस्तु सराष्ट्रः स विनश्यति" ॥

इति निषेधेन च पत्रीप्रवेशनस्याष्टमीविद्धायां सप्तम्यां प्रातःकर्त्तव्यत्वात्तदव्यवहितपूर्वदिन एव सायाह्ने षष्ठ्यभावेऽप्यामन्त्रणं कार्यम् । तदुक्तं ब्राह्माण्डपुराणे—

"पत्रीप्रवेशात्पूर्वेद्युः सायाह्ने बिल्ववासिनीम् ।
चण्डीमामन्त्रयेद्विद्वानत्र षष्ठीपुरस्क्रिया" ॥ इति ॥

मत्स्यसूक्ते च—

"ज्येष्ठा वाप्यथवा षष्ठी सायं काले न चेद्भवेत् ।
सायमेव तथापि स्याद्बिल्वशाखाभिमन्त्रणम् ॥
पूर्वां षष्ठीं सनक्षत्रां सायं प्राप्तामपि त्यजेत् ।
यदा तु पत्रिकापूजा न परेद्युर्भविष्यति ॥
संनिकृष्टं तु यत्पूर्वं पत्रिकादिवसस्य तु ।
तद्दिने वरणं कृत्वा परे शाखां प्रवेशयेत्" ॥ इति ।

तेन पत्रिकापूजायां सप्तम्यादितिथित्रयं प्रातःकालीनमुत्तरोत्तर-तिथिविद्धमेव ग्राह्यम्।

"प्रातरावाहयेत्" इतिवचनेन प्रातरेव तत्प्रवेशादिविधानात्।

"भगवत्याः प्रवेशादिविसर्गान्ताश्च या क्रियाः।
तिथावुदयगामिन्यां सर्वास्ताः कारयेद्बुधः"॥

इति नन्दिकेश्वरपुराणाच्च। एवं सति—

"शरत्काले महापूजा क्रियते या च वार्षिकी।
सा कार्योदयगामिन्यां न तत्र तिथियुग्मता"॥

इत्यपि वचनं पत्रिकापूजापरमेव। न तु नवरात्रत्रिरात्रादि-विहितकेवलप्रतिमापूजाविषयमिति न पूर्वोक्तद्विषयतिथिनिर्ण-यस्यानेन विरोधः।

यदा तु तिथिवृद्ध्या संपूर्णसप्तमीरूपपत्रिकाप्रवेशदिनापेक्षया चतुर्थदिने नवमी तत्प्रयुक्तपूजायोग्या पौर्वाह्णिकी लभ्यते। पूर्ववचनै-रष्टमीयुग्मतायास्तत्र तस्या बाधितत्वात्। यदा वा पत्रिकाप्रवेश-दिनोत्तरदिन एव त्रिमुहूर्त्ताष्टम्युत्तरं वर्त्तमाना नवमी क्षयवशा-दुत्तरदिने नास्ति तदा चतुरहव्यापिनी द्व्यहव्यापिनी वा पत्रिकापूजा भवति। अत एव भविष्ये—

"व्रती प्रपूजयेद्देवीं सप्तम्यादिदिनत्रये।
द्वाभ्यां चतुरहोभिर्वा ह्रासवृद्धिवशात्तिथेः॥ इति।

इदमेव लिङ्गं सर्वपक्षेषु रात्रिशब्दस्य तिथिपरत्वे। "अष्टम्या नवमीयुक्ता" इत्येतदपि वचनमेतादृशनवमीविषयमेव। पूर्वोक्तपूजा-विषयं तु वस्तुतः। संधिपूजाविषयमिति गौडाः। बलिदानं च पत्रिकापूजायामप्यष्टम्यां महानिशायां नवम्यां च दिवैव भवति।

"पुनः पूजां तथाष्टम्याम्" इत्यादिप्रागुलिखितकालिकापुराणात् । विसर्जनं दशम्यामेवेत्युक्तम् ।

पत्रिकापूजा च प्रतिपत्प्रतिष्ठापितदेवीप्रतिमासमीप एव । यदा प्रतिमापूजायामपि सप्तम्यादिपक्षस्तदा पत्रिकयैव सह प्रतिमाया अपि देव्यर्थकृतगृहे प्रवेशादिर्विसर्जनान्तं कर्त्तव्यमिति दुर्गाभक्तितरङ्गिण्याम् ।

## अयमत्र संक्षेपतः पत्रिकापूजाविधिः ।

आश्विनकृष्णनवम्यामार्द्रायुक्तायां केवलायां वा तच्छुक्लषष्ठ्यां वा ज्येष्ठायुक्तायां केवलायां सायंकाले शोभनबिल्वतरुसमीपं गत्वा ॐ बिल्ववृक्षाय नम इत्यर्घ्यगन्धपुष्पधूपदीपनैवेद्यपुष्पाञ्जलिभिर्बिल्वतरुं संपूज्य "जयन्ती" इत्यादि दुर्गे इहागच्छेह तिष्ठेति बिल्ववृक्षे दुर्गामावाह्य षोडशभिः पञ्चभिर्वोपचारैस्तां तत्रैव संपूज्य गीतवाद्यघोषपुरःसरं तत्रैव देवीं विबोधयेदनेन ।

"रावणस्य वधार्थाय रामस्यानुग्रहाय च ।
अकाले ब्रह्मणा बोधो देव्यास्त्वयि कृतः पुरा ॥
इषे मास्यसिते पक्षे नवम्यामार्द्रयोगतः ।
श्रीवृक्षे बोधयामि त्वां यावत्पूजां करोम्यहम्" ॥ इति ।

षष्ठ्यां बोधने तु "इषे" इत्यादिश्लोकस्थाने "[illegible] षष्ठ्यां सायाह्ने बोधयाम्यतः" इति । ततो बिल्वतरुमामन्त्रयेत् ।

"मेरुमन्दरकैलासहिमवच्छिखरे गिरौ ।
जातः श्रीफलवृक्ष त्वमम्बिकायाः सदा प्रियः ॥
श्रीशैलशिखरे जातः श्रीफल श्रीनिकेतन ।
नेतव्योऽसि मया वृक्ष पूज्यो दुर्गास्वरूपतः" इति ।

तत आश्विनशुक्लसप्तम्यां मूलयुक्तायां केवलायां वा पूर्वदिनामन्त्रितबिल्वतरुसमीपं गत्वा पुनस्तं संपूज्य कृताञ्जलिः प्रसादयेत् ।

"बिल्ववृक्ष महाभाग सर्वदा शङ्करप्रियः ।
गृहीत्वा तव शाखां तु दुर्गापूजां करोम्यहम् ॥
शाखाछेदोद्भवं दुःखं न च कार्यं त्वया प्रभो" इति ।

ततः फलद्वययुतां शोभनामपराजितादिग्गतामेकां शाखां छेदयेत् "वानस्य"इत्येन मन्त्रेण । क्वचित्तु छिन्धि फट् स्वाहेति मन्त्रः ।

ततस्तां शाखामानीय गृहाङ्गणे पीठेऽवस्थाप्य शुद्धोदकेन संस्नाप्य बिल्वशाखायै नम इत्यर्घ्यादिभिः पूजयित्वा बिल्वशाखायां मृण्मयप्रतिमायां च देवीमावाहनपुरःसरं तथैव पूजयित्वा माषभक्तादिबलिं च दत्त्वा दोलादिना शाखां प्रतिमां च पूजागृहद्वारदेशमानीय तत्रैव स्थापयित्वा पूजागृहस्थितानि भूतानि भूतेभ्यो नम इति गन्धादिभिः संपूज्य—

"भूताः प्रेताः पिशाचाश्च ये वसन्त्यत्र भूतले ।
ते गृह्णन्तु मया दत्तो बलिरेष प्रसाधितः ॥
पूजिता गन्धपुष्पाद्यैर्बलिभिस्तर्पितास्तथा ।
देशादस्माद्विनिःसृत्य पूजां पश्यन्तु मत्कृताम् ॥

भूतेभ्य एव माषभक्तबलिर्नम इति सपुष्पजलोत्सर्गेण बलिं तेभ्यो दत्त्वा—

"अपसर्पन्तु ते भूता ये भूता भूमिपालकाः ।
भूतानामविरोधेन पूजाकर्म करोम्यहम्" ॥

फडिति तानपसारयेत्सर्षपादींश्च विकिरेत् । तदकरणे दोषस्मरणात् । तथा च कालिकापुराणे—

"स्थितेषु तत्र भूतेषु वैमेयं मण्डलं तथा।
विलुम्पन्ति महालुब्धा न च गृह्णन्ति देवताः॥
तस्माद्यत्नेन कर्त्तव्यं भूतानामपसारणम्" ॥ इति।

शारदातिलके—

"विकिरान्विकिरेत्तत्र सप्त जप्तान् शराणुना।
लाजचन्दनसिद्धार्थफलपुष्पकुशाक्षताः॥
विकिरा इति संप्रोक्ताः सर्वविघ्नविनाशनाः" इति।

शराणुः फडित्यस्त्रमन्त्रः। स चाभिमन्त्रणे विकिरणे च। ततः पुनः शाखायां प्रतिमायां च देवीं संपूज्य "श्रीशैल" इत्यादि, "मेरुपुत्र्योऽसि ममगच्छ पूज्यो दुर्गास्वरूपतः" इति दुर्गारूपतया शाखां ध्यात्वा गीतवाद्यादिघोषेण प्रतिमासहितां तां पूजागृहं प्रवेश्य—

"आरोपितासि दुर्गे त्वं मृण्मये श्रीफलेऽपि च।
स्थिरा नितान्तं भूत्वा मे गृहे त्वं कामदा भव" ॥

इति पूजास्थाने शोभनपीठोपरि स्थिरीकृत्य पूर्वोक्तप्रकारेण प्राणप्रतिष्ठां कृत्वा प्रतिष्ठामन्त्रेण प्रतिष्ठाप्य सपुष्पानक्षतानादाय—

"आवाहयाम्यहं देवीं मृण्मये श्रीफले तथा।
कैलाशशिखराद्देवि विन्ध्याद्रेर्हिमपर्वतात्॥
आगत्य बिल्वशाखायां चण्डिके कुरु संनिधिम्"।

"भगवति दुर्गे इहागच्छ" इत्युभयोरावाह्य—

"स्थापितासि मया देवि श्रीफले मृण्मयेऽपि च।
आयुरारोग्यमैश्वर्यं देहि देवि नमोऽस्तु ते" ॥

भगवति दुर्गे इह तिष्ठेति स्थापयित्वा कृताञ्जलिः—

"दुर्गे दुर्गस्वरूपासि सुरतेजोमहाबले।
सदानन्दकरे देवि प्रसीद मम सिद्धये॥
एह्येहि भगवत्यम्ब शत्रुक्षयजयप्रदे।
भक्तितः पूजयामि त्वां दुर्गे देवि सुरार्चिते॥
पल्लवैश्च फलोपेतैः पुष्पैश्च सुमनोहरैः।
पल्लवे संस्थिते देवि पूजये त्वां प्रसीद मे॥
दुर्गे देवि इहागच्छ सांनिध्यमिह कल्पय।
यज्ञभागान् गृहाण त्वं योगिनीकोटिभिः सह"॥

इति पठेत्। ततो "जयन्ती"त्यादि।

इदं पाद्यं दुर्गायै नम इति गन्धपुष्पादियुतपाद्यं दत्त्वा, सौवर्णार्घ्यपात्रे पुष्पाक्षतकुङ्कुमदधिदूर्वाकुशतिलबिल्वपत्रसहितं जलं निधाय तेनैव मन्त्रेण इदमर्घ्यं दुर्गायै नम इत्यर्घ्यं दत्त्वा तेनैव इदमाचमनीयमित्यादिक्रमेणाचमनीयपञ्चामृतस्नानीयपुनराचमनीय—वस्त्रपुनराचमनीयानुलेपनानि दत्त्वा पुष्पाञ्जलित्रयं दद्यात् "ॐ दुर्गायै नमः" इत्यावृत्तेन। ततः—

"अमृतोद्भवं श्रीवृक्षं शंकरस्य सदा प्रियम्।
बिल्वपत्रं प्रयच्छामि पवित्रं ते सुरेश्वरि"॥

इतिबिल्वपत्रम्,

"ब्रह्मविष्णुशिवादीनां द्रोणपुष्पं सदा प्रियम्।
तत्ते दुर्गे प्रयच्छामि सर्वकामार्थसिद्धये"॥

इति द्रोणपुष्पं च निवेद्य "जयन्ती" इत्यादिनेमानि पुष्पाणि दुर्गायै नम इति जातिचम्पकादिसुगन्धिपुष्पाण्यपि दत्त्वा तथैव धूपदीपनानानैवेद्यपुनराचमनीयताम्बूलानि दत्त्वा पूजासादुण्यार्थं

किंचिद्दक्षिणां च दत्त्वा स्तुतिभिः स्तुत्वा प्रणम्य दत्ताञ्जलिः प्रार्थयेत् ।

"महिषघ्नि महामाये चामुण्डे मुण्डमालिनि ।
द्रव्यमारोग्यमैश्वर्यं देहि देवि नमोऽस्तु ते ॥
कुङ्कुमेन समालब्धे चन्दनेन विलेपिते ।
बिल्वपत्रकृतापीडे दुर्गेऽहं शरणं गतः" ॥

सर्वमङ्गलेति रूपं देहि इति च श्लोकद्वयं पठेत् । बलिं च दद्यात् । एवमेव महाष्टम्यामपि देवीपूजनम् । अर्द्धरात्रे विशेषतः । गीतवाद्यनृत्यादिना जागरणं च कार्यम् ।

राजा तु विजयकामोऽर्द्धरात्रे विशेषपूजापूर्वकं बलिं दद्यात् । ब्रह्मपुराणाद्युक्तप्रकारेण शस्त्रादिपूजां च कुर्यात् । महानवम्यामप्येवमेव पूजयित्वा प्रभूतबलिदानं कार्यम् । होमश्च पूर्वोक्तप्रकारेण । राज्ञा त्वश्वपीडाशान्तये ब्रह्मपुराणोक्तप्रकारेण (१) रेवन्तादिपूजापि कार्या । एवं प्रतिपदादिपक्षेण देवीप्रतिमां सप्तम्यादि च पत्रिकां महानवमीपर्यन्तं पूजयित्वा दशम्यां श्रवणयुतायां केवलायां वा प्रातर्देव्या विसर्जनं कार्यम् । तद्यथा पूर्ववत्पूजां विधाय प्रणम्य—

"दुर्गां शिवां शान्तिकरीं ब्रह्माणीं ब्रह्मणः प्रियाम् ।
सर्वलोकप्रणेत्रीं च प्रणमामि सदा शिवाम् ॥
मङ्गलां शोभनां शुद्धां निष्कलां परमां कलाम् ।
विश्वेश्वरीं विश्वमातां चण्डिकां प्रणमाम्यहम् ॥
सर्वदेवमयीं देवीं सर्वरोगभयापहाम् ।
ब्रह्मेशविष्णुनमितां प्रणमामि सदा उमाम् ॥

(१) रेवन्तः सूर्यपुत्रविशेषः । तत्पूजामन्त्रस्तु निर्णयसिन्धौ २ परिच्छेदे विजयादशमीप्रकरणेऽभिहितः ।

यथा—"सूर्यपुत्र महाबाहो छायाहृदयनन्दन ।
शान्तिं कुरु तुरङ्गाणां रेवन्ताय नमो नमः" इति ॥

विन्ध्यस्थां विन्ध्यनिलयां दिव्यस्थाननिवासिनीम् ।
योगिनीं योगमातां च चण्डिकां प्रणमाम्यहम् ॥
ईशानमातरं देवीमीश्वरीमीश्वरप्रियाम् ।
प्रणतोऽस्मि सदा दुर्गां संसारार्णवतारिणीम् ॥
य इदं पठति स्तोत्रं शृणुयाद्वापि यो नरः ।
स मुक्तः सर्वपापेभ्यो दुर्गया सह मोदते" ॥ इति,

अन्यैर्वा स्तोत्रैः स्तुत्वा बद्धाञ्जलिः "महर्षघ्नि" इत्यादि-श्लोकचतुष्टयेन प्रार्थ्य—

"विधिहीनं क्रियाहीनं भक्तिहीनं यदर्चितम् ।
पूर्णं भवतु तत्सर्वं त्वत्प्रसादान्महेश्वरि" ॥

इति प्रसाद्य क्षमस्वेत्युक्त्वैकं पुष्पं ॐ दुर्गायै नम इत्यैशान्यां निःक्षिपन्विसृज्य—

"उत्तिष्ठ देवि चण्डेशि शुभां पूजां प्रगृह्य च ।
कुरुष्व मम कल्याणमष्टाभिः शक्तिभिः सह ॥
गच्छ गच्छ परं स्थानं स्वस्थानं देवि चण्डिके ।
व्रज स्रोतोजले वृद्ध्यै तिष्ठ गेहे च भूतये" ॥

इत्युत्थाप्य गीतवाद्यब्रह्मघोषपुरःसरं स्रोतोजलसमीपं नीत्वा—

"दुर्गे देवि जगन्मातः स्वस्थानं गच्छपूजिते ।
सम्वत्सरे व्यतीते तु पुनरागमनाय वै ॥
इमां पूजां मया देवी यथाशक्त्या निवेदिताम् ।
रक्षणार्थं समादाय व्रज स्वस्थानमुत्तमम्" ॥

इति स्रोतसि प्रवाहयेत् ।

अथ देवीपूजास्थानमागत्य शान्तिकलशोदकेन ब्राह्मणैरभिषिक्तो यजमानः कृतशारददुर्गापूजाप्रतिष्ठासिद्ध्यर्थं ब्राह्मणेभ्यः सुवर्णादि-दक्षिणां दत्त्वा यथाशक्ति ब्राह्मणान् भोजयित्वा स्वबन्धुभिः सार्द्धं भुञ्जीतेति ।

राजा तु तस्यामेव दशम्याम् "अथातः प्रस्थानं व्याख्यास्यामः" इत्यादिना गोपथब्राह्मणेन विवाहमुद्दिश्योक्तं प्रास्थानिकविधिं कृत्वा अथापराजितादशम्यां पूर्वोक्ते विजयमुहूर्ते उक्तं प्रास्थानिक-मित्युपक्रम्य, तदप्येते श्लोकाः—

"अलंकृतो भूषितभृत्यवर्गः परिष्कृतोत्तुङ्गतुरङ्गनागः ।
वादित्रनादप्रतिनादिताशः सुमङ्गलाचारपरम्पराशीः ।
राजा निर्गत्य भवनात्पुरोहितपुरोगमः ॥
प्रास्थानिकविधिं कृत्वा प्रतिष्ठेत्पूर्वतो दिशि ।
गत्वा नगरसीमान्तं वास्तुपूजां समारभेत् ॥
संपूज्य चाथ दिक्पालान् पूजयेत्पथि देवताः ।
मन्त्रैर्वैदिकपौराणैः पूजयेच्च शमीतरुम् ॥
अमङ्गलानां शमनीं शमनीं दुष्कृतस्य च ।
दुःस्वप्नशमनीं धन्यां प्रपद्येऽहं शमीं शुभाम् ॥
ततः कृताशीः पूर्वस्यां दिशि विष्णुक्रमान् क्रमेत् ।
रिपोश्च प्रकृतिं कृत्वा ध्यात्वा च मनसाथ तम् ॥
शरेण स्वर्णपुङ्खेन विध्येद् हृदयमर्मणि ।
दिशाविजयमन्त्राश्च पठितव्याः पुरोधसा ॥
एवमेव विधिं कुर्याद्दक्षिणादिदिशास्वपि ।
पूज्यान् द्विजांश्च संपूज्य साम्वत्सरपुरोहितौ ॥
गजवाजिपदातीनां प्रे[illegible]रेत् ।
जयमङ्गलशब्देन ततः स्वभवनं विशेत् ॥
नीराज्यमाणः पुण्याभिर्गणिकाभिः समङ्गलम् ।
आयुरारोग्यमैश्वर्यं विजयं च स गच्छति ॥
नाधयो व्याधयस्तस्य भवन्ति न पराजयः ।
श्रियं पुण्यमवाप्नोति विजयं च सदा भुवि" ॥

इति गोपथब्राह्मण एवोक्तं प्रस्थानादि कुर्यात्। सर्वे च जनास्तस्यामेव "उल्लङ्घयेयुः सीमानं तद्दिनर्क्षे ततो नराः" इति कश्यपवचनाद्ग्रामसीमानमुल्लङ्घ्याश्विनशुक्लपक्षं प्रक्रम्य—

"दशम्यां च नरैः सम्यक् पूजनीयापराजिता ।
ऐशानीं दिशमाश्रित्य अपराह्णे प्रयत्नतः" ॥

इति पुराणसमुच्चयवचनाद् ग्रामादैशान्यामपराह्णेऽपराजिता-पूजां कुर्युः। सा यथा—अद्याश्विनशुक्लदशम्यां क्षेमसिद्ध्यर्थं राजा तु यात्रायां विजयसिद्ध्यर्थमपराजितापूजामहं करिष्य इति सङ्कल्प्य चन्दनादिलिखिताष्टदलकमलमध्ये अपराजितायै नम इत्यपराजितां तद्दक्षिणतः क्रियाशक्त्यै नम इति विजयां प्रतिष्ठाप्य अपराजितायै नमः जयायै नमः विजयायै नम इत्यावाहनाद्युपचारैः संपूज्य प्रणम्य—

"इमां पूजां यथा देवि यथाशक्त्या निवेदिताम् ।
रक्षार्थं तु समादाय व्रजस्व स्थानमुत्तमम्" ॥

इति विसर्जयेत्। राजा तु प्रणामानन्तरं—

"चारुणा मुखपद्मेन विचित्रकनकोज्ज्वला ।
जया देवी शिवे भक्ता सर्वकामान् ददातु मे ॥
काञ्चनेन विचित्रेण केयूरेण विभूषिता ।
जयप्रदा महामाया शिवभावितचेतसा ॥
विजया च महाभागा ददातु विजयं मम ।
हारेण सुविचित्रेण भास्वत्कनकमेखला ।
अपराजिता रुद्ररता करोतु विजयं मम" ॥

इति प्रार्थ्य हरिद्रारक्तवस्त्रे दूर्वायुक्तसिद्धार्थकान् प्रदक्षिणं वलयाकारेणाबध्य—

"सदापराजिते यस्मात्त्वं लतासूत्तमा स्मृता ।
सर्वकामार्थसिद्ध्यर्थं तस्मात्त्वां धारयाम्यहम् ॥
भवापराजिते देवि मम सर्वसमृद्धये ।
पूजितायां त्वयि श्रेयो ममास्तु दुरितं हतम्" ॥

इति तद्वलयमभिमन्त्र्य—

"जयदे वरदे देवि दशम्यामपराजिते ।
धारयामि भुजे दक्षे जयलाभाभिवृद्धये ॥
बलमाधेहि वलय मयि शत्रौ पराजयम् ।
त्वद्धारणाद्भवेयुर्मे धनधान्यसमृद्धयः" ॥

इति मन्त्रेण दक्षिणबाहौ धारयित्वा पूर्ववदपराजितां विसर्जयेदिति । सर्वे त्वाचाराद्ग्रामसीमातो बहिरीशानदिग्गतां शमीं पूजयित्वा "अमङ्गलानां शमनीम्" इति तां प्रार्थयेयुः ।

इयं च दशमी यद्युदये यदोत्तरैव श्रवणयुक्ता तदैवैकादशीयुक्ता पूर्वोक्तविधौ ग्राह्या ।

"उदये दशमी किंचित्संपूर्णैकादशी यदि ।
श्रवणर्क्षं यदा कार्या सा तिथिर्विजयाभिधा ॥
श्रवणर्क्षे तु पूर्णायां काकुत्स्थः प्रस्थितो यतः ।
उल्लङ्घयेयुः सीमानं तद्दिनर्क्षे ततो नराः" ॥

इति कश्यपवचनात् ।

"श्रवणे चापराजिता" इति पूर्वोक्तवचनाच्च । "संपूर्णैकादशी" इतिवचनाच्च । तदा कर्मकालव्याप्तिरपि नापेक्षिता । इतरथा सर्वपक्षेषु नवमीयुक्तैव ग्राह्या । अपराह्णकाललाभात् ।

"दशम्यां तु जनैः सम्यक् पूजनीयापराजिता ।
ऐशानीं दिशमाश्रित्य अपराह्णे प्रयत्नतः" ॥

इत्यपराह्णस्य कर्मकालत्वोक्तेः ।

"यापूर्णा नवमीयुक्ता तस्यां पूज्यापराजिता ।
क्षेमार्थं विजयार्थं च प्रसिद्धविधिना नरैः ॥
नवमीशेषसंयुक्तदशम्यामपराजिता ।
ददाति विजयं देवी पूजिता जयवर्द्धनी ॥
आश्विने शुक्लपक्षे तु दशम्यां पूजयेन्नरः ।
एकादश्यां न कुर्वीत पूजनं चापराजितम् ॥
दशमीं यः समुल्लङ्घ्य प्रस्थानं कुरुते नरः ।
तस्य सम्वत्सरं राज्ये न क्वापि विजयो भवेत् ॥

इत्यादिवचनेभ्यश्चेति संक्षेपः ।

तदत्र संग्रहः—

अनेकतिथिसाध्येषु कर्मस्वेकस्य कर्मणः ।
अभ्यस्तस्य प्रतिदिनं भिन्नभिन्नस्य वा पुनः ॥
यत्र सत्यपि मुख्यत्वे पूर्वापरदिनोक्तितः ।
उपजीव्यत्वमेकस्याः प्राधान्यं तद्गतस्य वा ॥
तां तिथिं तत्र निर्णीय तत्पूर्वादिदिनेषु च ।
तत्तत्तिथ्यंशसत्त्वेऽपि तत्तत्कर्मेति निर्णयः ॥
अत्र त्वशेषप्राधान्यं न चैकत्रोपजीव्यता ।
स्वातन्त्र्येण विनिर्णेयास्तत्र तास्तिथयोऽखिलाः ॥
कर्मद्वयादितिथिष्वेवं चतुरादिषु वास्तु तत् ।
एकस्या उपजीव्यत्व उदाहरणमष्टकाः ॥
सावित्र्यादिप्रधानत्वे सर्वसाम्ये बहूनि तु ।
अभ्यस्तदेवीपूजात्मप्रधाने नवरात्रके ॥
उपवासादिनियमाङ्गकेऽप्येषैव च स्थितिः ।
आद्यनन्दादि षष्ठ्यादि सप्तम्यादि जयादि वा ॥

नवम्यन्तमथाष्टम्यां नवम्यामेव वेत्यमी ।
आश्विनश्वेतपक्षस्थे पक्षा उक्ता व्रतोत्तमे ॥
तत्र देवीपूजनस्य मत्वा पूर्वाह्णकालताम् ।
मुहूर्त्तमात्रापि परा न तु दर्शेन संयुता ॥
ग्राह्या प्रतिपदित्येवं बुधाः केचित्प्रचक्षते ।
नक्तव्रतत्वमिच्छन्तो माधवाद्याः प्रदोषगाम् ॥
पूजां मुख्यतयेच्छन्ति विहितेऽपि त्रिकालगे ।
पूजने नक्तभुजिवत्तेनात्रापि विनिर्णयः ॥
प्रामाणिकानां महतां तेषामिष्टो मयाप्यतः ।
नक्तभोजन एवोक्तो निर्णयोऽत्रापि योज्यते ॥
पूर्वत्रैव प्रदोषाप्तौ पूर्वान्येषु परैव सा ।
दिनद्वये प्रदोषास्पृक् सायाह्नव्यापिनी परा ॥
या तु तत्र विशेषोऽयं तिथौ सायाह्नवर्त्तिनि ।
प्रारभ्य पूजा संस्थाप्या प्रदोषे तिथ्ययोगिनि ॥
न तु सायाह्न एवात्र भुक्तेरिव समापनम् ।
महाष्टमी तु नवमीविद्धा रात्रावसत्यपि ॥
नवम्यप्यष्टमीविद्धा बलिदानं तु तत्कृतम् ।
द्वितीयदिनवर्त्तिन्यां कार्यं सूर्योदयस्पृशि ॥
तिथिद्वयप्रयुक्तं च तन्त्रेणैवार्चनादिकम् ।
कार्यं पूर्वेऽह्नि नवमी यदि न स्यात्परेऽहनि ॥
सप्तमीयुक्तदा ग्राह्या न नवम्या युताष्टमी ।
नवमीकृतमेवेह कार्यं च नवमीदिने ॥
पूजादिबलिदानं च न दशम्यां कथञ्चन ।
मिलिते केवले वापि अष्टमीनवमीद्वये ॥
अनुकल्पतया प्रोक्ता पूजैतद्व्रतगोचरा ।
अष्टम्याश्च नवम्याश्च तत्रापीत्थं विनिर्णयः ॥

केवलाष्टमीभिन्नेषु सर्वपक्षेषु चोदिता ।
विसर्जनात्मिका पूजा समाप्तिर्दशमीतिथौ ॥
तेनात्रैवोपवासादिनियमानां समापनम् ।
उचितं तेन नवमीपारणा भ्रान्तिकल्पिता ॥
बिल्वशाखात्मिकायां च पत्रिकायामुमार्चनम् ।
विहितं यत्पुराणेषु सप्तम्यादितिथित्रये ॥
देव्या बिल्वतरौ बोधस्तदङ्गमिषकृष्णगे ।
आर्द्रायुक्ते केवले वा पूर्वाह्णे नवमीदिने ॥
कर्त्तव्यस्तेन सा ग्राह्या तत्र पूर्वाह्णगामिनी ।
उभयत्र तथात्वे तु ग्राह्यार्द्राऋक्षयोगिनी ॥
इषशुक्लगषष्ठ्यां तन्नवम्यां तदसंभवे ।
आमन्त्रणं तु तत्रैव सायं चैतद् द्वयं भवेत् ॥
तेन तद्व्यापिनी तत्र सा ग्राह्या तादृशी द्वयोः ।
ज्येष्ठायुक्ता यदा पत्रीपूजार्हा सप्तमी भवेत् ॥
प्रातः परे द्यवि तदा कार्यं पूर्वेद्युरेव तत् ।
षष्ठ्यभावेऽपि संध्यायां सप्तम्यादितिथित्रयम् ॥
मूलादिभत्रययुतं केवलं वोत्तरोत्तरम् ।
प्रातःकालीनमेवेष्टं यस्मिन् पत्रीप्रपूजने ॥
तदा च ह्रासवृद्ध्योः स्याद् द्विचतुर्दिनगामिता ।
बलिप्रदानं तत्रापि त्वष्टमीनवमीकृतम् ॥
अर्द्धरात्रे दिवा चैव कर्त्तव्यमिति निर्णयः ।
अपराजितापूजायां दशम्येकादशीयुता ॥
ग्राह्या तदैव श्रवणं यदा तस्यामतोऽन्यथा ।
सर्वपक्षेषु पूर्वैव तत्कृत्येऽखिल एव सा ॥
संग्रहो निर्णयस्येत्थं कर्त्तव्यं पूर्वमीरितम् ।

इति श्रीमीमांसकमुकुटमाणिक्यश्रीरघुनाथवाजपेययाजिकृतौ सामान्यतोऽनेकतिथिसाध्यकर्मसु तिथिनिर्णयो नवरात्रनिर्णयश्च संपूर्णः ।

## अथ कौमुदीमहोत्सवकालविवेचनम् ।

श्रीकृष्ण उवाच—

"पुरा वामनरूपेण प्रार्थयित्वा धरामिमाम् ।
ददावतिथिरिन्द्राय बलिं पातालवासिनम् ॥
कृत्वा दैत्यपतेर्दत्तमहोरात्रत्रयं नृप ।
सरहस्यं तदेतत्ते कथयामि शृणुष्व मे" ॥

इत्युपक्रम्य युधिष्ठिरप्रश्नपूर्वकम्—

"कार्त्तिके कृष्णपक्षे तु चतुर्दश्यां दिनोदये ।
अवश्यमेव कर्त्तव्यं स्नानं नरकभीरुभिः ॥
अपामार्गस्य पत्राणि भ्रामयेच्छिरसोपरि" ।

इत्यादिना भविष्योत्तरे पूर्णिमान्तकार्तिककृष्णचतुर्दश्यमावास्यातदुत्तरप्रतिपद्रूपतिथित्रये यो विहितः कौमुदीमहोत्सवस्तस्यैव अमावास्यान्तपक्षेणापि । नारदसंहितायां च—

"इषासितचतुर्दश्यामिन्दुक्षयतिथावपि ।
ऊर्जादौ स्वातिसंयुक्ते तदा दीपावली भवेत् ।
तैले लक्ष्मीर्जले गङ्गा दीपावलितिथौ वसेत् ॥
अलक्ष्मीपरिहारार्थमभ्यङ्गस्नानमाचरेत् ।
इन्दुक्षयेऽपि संक्रान्तौ वारे याते दिनक्षये ।
तत्राभ्यङ्गमदोषाय प्रातः पापापनुत्तये" इति ।

तत्र चतुर्दशी तावदभ्यङ्गस्नाने ।

"ततश्च तर्पणं कार्यं धर्मराजस्य नामभिः ।
यमाय धर्मराजाय मृत्यवे चान्तकाय च ॥
वैवस्वताय कालाय सर्वभूतक्षयाय च ।
औदुम्बराय दध्नाय नीलाय परमेष्ठिने ॥
वृकोदराय चित्राय चित्रगुप्ताय ते नमः" ।

इति भविष्योत्तर एव विहिते यमतर्पणे च "दिनोदयप्रातःशब्दयोः" समानार्थत्वात्प्रातःकालव्यापिनी पूर्वा परा वा ग्राह्या।

गौडनिबन्धेष्वपि दिनोदय इत्येव लैङ्गत्वेन तु पठितम्। "क्वचिद्दिनोदये" इति पठितं तत्पूर्वसम्वाद्येव। क्वचित्प्रायोदाक्षिणात्याचारसंवादी "विधूदये" इति पाठः। तत्र चन्द्रोदयकालीना स्नाने ग्राह्या। तत्र या पूर्वैव प्रातश्चन्द्रोदये वा वर्त्तते सा खण्डा सर्वकृत्येषु दीपदानान्तेषु समीचीनैव। या तूत्तरैव प्रातश्चन्द्रोदये वा तावत्येव च समाप्ता तस्यामेव स्नानं यमतर्पणं च कार्यम्। "ततश्च तर्पणं कार्यम्" इति स्नानानन्तरं तद्विधानात्। तस्य कालविशेषानुक्तेश्च।

दीपदानमपि यद्यपि "इति स्नात्वा प्रदातव्या दीपाः संपूज्य देवताः" इति स्नानान्तरमेव विहितास्तथापि—

"ततः प्रदोषसमये दीपान् दद्यान्मनोहरान्।
ब्रह्मविष्णुशिवादीनां भवनेषु मठेषु च"॥

इति तस्य स्वतन्त्रकालविधानात्क्रमानुरोधेन च कालबाधस्यासंभवात्। उक्थ्यपक्षमावस्य तु प्रधानधर्मत्वेन समयाध्युषितसूर्यरूपाङ्गषोडशिस्तोत्रकालबाधकत्वात्पूर्वेद्युरेव प्रदोषव्यापिन्यां तन्मात्रं कर्त्तव्यम्।

क्वचित्तु "इति स्नात्वा" इत्यस्य स्थाने "नरकाय प्रदातव्याः" इति पठितं तदा संपूर्णचतुर्दश्यामार्थिकमेव दीपदानस्य स्नानानन्तर्यमिति न तदनुरोधेन खण्डायां कालवशायातं भिन्नदिनानुष्ठेयत्वं स्नानदीपदानयोस्त्याज्यम्। नरकायेति नरकासुरोद्देशेनेति बहवः। क्वचित्तु "मशकार्थो धूमः" इतिवन्निवर्त्यप्रयोजनपरत्वेन व्याख्यातम्।

या तु दिनद्वयेऽपि तादृशी तत्र पूर्वस्यामेव सर्वं स्नानादि। संपूर्णत्वात्। भूयःकृत्यक्रमानुग्रहाच्च। यापि दिनद्वयेऽपि न तादृशी सापि पूर्वैव।

"स्वकालादुत्तरः कालो गौणः पूर्वस्य कर्मणः" इत्युक्तगौणकालव्याप्तिलाभात् ।

"पूर्वविद्धचतुर्दश्यां कार्तिकस्य सितेतरे ।
प्रत्यूषसमये स्नानं कुर्यात्तत्र प्रयत्नतः" ॥

इति पृथ्वीचन्द्रोदयधृतवचनाच्च । चन्द्रोदयस्नानपक्षे रात्रावेव वर्त्तमानया त्रयोदश्या चतुर्दशी विद्धा भवति । रात्रिकर्मत्वात् ।

स्नानं त्वसत्यामपि चतुर्दश्यां प्रातरेव चन्द्रोदय एव वा भवति । "तिथ्यादौ च भवेद्यावान्" इत्युत्तरतिथिक्षयप्रक्षेपेण शास्त्रतस्तत्र तिथेः सत्त्वात् । प्रातःपक्षे "यां तिथिं समनुप्राप्य अस्तं याति दिवाकरः" इत्यनेनापि तथात्वात् ।

अपामार्गशाखा च तुम्बीचक्रमर्दकसितालोष्ठयुक्ता स्नानमध्ये शिरस उपरि भ्रामणीया पुनः पुनः ।

"अपामार्गमथो तुम्बीं प्रपुन्नाटमथापरम् ।
भ्रामयेत्स्नानमध्ये तु नरकस्य क्षयाय वै" इति ब्रह्मपुराणात् ।
"सितालोष्ठसमायुक्त सकण्टक दलान्वित ।
हर पापमपामार्ग भ्राम्यमाणः पुनः पुनः" ॥

इति भ्रामणमन्त्रलिङ्गाच्च ।

यमतर्पणं चोपवीतेन प्राचीनावीतेन वा कार्यम् ।
"यज्ञोपवीतिना कार्यं प्राचीनावीतिनाथवा ।
देवत्वं च पितृत्वं च यमस्यास्ति द्विरूपता" ॥ इतिवचनात् ।

हेतूक्तिबलाच्छुक्लकृष्णतिलकृत्रिरावृत्त्यादिरूपदैवपित्र्यधर्मविकल्पोऽपि द्रष्टव्यः ।

अत्र च दीपदानानन्तरं यथाशक्तिशैवविप्रान् भोजयित्वा माषपत्रशाकमिश्रं नक्तं भोक्तव्यम् ।

"ततः प्रेतचतुर्दश्यां भोजयित्वा तपोधनान् ।
शैवान् विप्रान् धर्मपरान् शिवलोके महीयते ॥
माषपत्रस्य शाकेन भुक्त्वा तत्र दिने नरः ।
प्रेतचतुर्दशीकाले सर्वपापैः प्रमुच्यते ॥
नक्तं प्रेतचतुर्दश्यां यः कुर्याच्छिवतुष्टये ।
न तत्क्रतुशतेनापि प्राप्यते पुण्यमीदृशम्" ॥

इति लिङ्गपुराणवचनेभ्यः ।

अमावास्यामपि चतुर्दशीवदेव प्रातरभ्यङ्गस्नानं कर्त्तव्यम् । भविष्योत्तरे चतुर्दशीस्नानमभिधाय—

"एवं प्रभातसमये त्वमावास्यां नराधिप ।
स्नात्वा देवान् पितॄन् भक्त्या संपूज्याथ प्रणम्य च" ॥

इत्येवं स्नात्वेत्यतिदेशात् । नारदसंहितायामपि तिथित्रयं दीपावलित्वेनाभिधाय "तैले लक्ष्मीः" इत्यादिना तत्राभ्यङ्गस्नान-विधानाच्च ।

अमावास्याकर्त्तव्यदीपदानं च यद्यपि "कृत्वा तु पार्वणश्राद्धम्" इत्यभिधाय "ततोऽपराह्णसमये" इत्यादिराजकर्त्तव्याभिधानमध्ये—

"दीपमालाकुले रम्ये विध्वस्तध्वान्तसंचये ।
प्रदोषे दोषरहिते शस्ते दोषागमे शुभे" ॥

इत्यभिधानात्सर्वैरपि श्राद्धानन्तरं कर्त्तव्यमिति प्रतीयते । श्राद्धदिने प्रदोषव्यापिन्यां च तस्यां तत्संभवत्येव । तथापि यदा पूर्वेद्युरेव प्रदोषव्यापिन्यमावास्या श्राद्धयोग्या च (१) द्वितीयदिने तदा पूर्वेद्युरेव प्रदोषे लक्ष्मीं यथाविभवं पूजयित्वा दीपदानं च कृत्वा ब्राह्मणादिभ्यश्च भोजनं दत्त्वा स्वयं बान्धवैः सह भोजनं कार्यम्—

"दिवा तत्र न भोक्तव्यमृते बालातुराज्जनात् ।
प्रदोषसमये लक्ष्मीं पूजयित्वा यथाक्रमम् ॥

(१) तिथित्रयसाध्यमहोत्सवद्वितीयदिन इति भावः ।

दीपवृक्षास्तथा कार्याः शक्त्या देवगृहेषु च" इत्यभिधाय—

"ब्राह्मणान् भोजयित्वादौ संभोज्य च बुभुक्षितान् ।

अलंकृतेन भोक्तव्यं नववस्त्रोपशोभिना ॥

स्निग्धैर्मुग्धैर्विदग्धैश्च निवृ तैर्बान्धवैः सह" ।

इत्यादित्यपुराणेऽभिधानात् ।

विधेयत्वेऽपि कालविरोधे क्रमस्यानादृत्यत्वात् ।

वस्तुतस्तु स्वकालप्राप्तश्राद्धानुवादात् क्रमस्याप्यविधानमेव । औत्सर्गिकाखण्डतिथेरेव प्रायोव्यवहारविषयत्वेन तस्य प्राप्तत्वात् ।

उल्कादानमपि प्रदोष एव ज्योतिर्ग्रन्थे विहितं तत्रैव कार्यम् ।

"तुलासंस्थे सहस्रांशौ प्रदोषे भूतदर्शयोः ।

उल्काहस्ता नराः कुर्युः पितॄणां मार्गदर्शनम्" ॥ इति ।

स्पष्टं च पूर्वाग्राह्यत्वमुक्तं तत्रैव ।

"अमावास्या यदा रात्रौ दिवाभागे चतुर्दशी ।

पूजनीया तदा लक्ष्मीर्विज्ञेया सुखरात्रिका" ॥ इति ।

प्रतिपद्यपि दीपावलीत्वात्प्रातरभ्यङ्गस्नानं कृत्वा द्यूतादि कर्त्तव्यम् ।

"तस्माद् द्यूतं प्रकर्त्तव्यं प्रभाते तत्र मानवैः ।

तस्मिन् द्यूते जयो यस्य तस्य सम्वत्सरं शुभम् ।

पराजये विरुद्धं तु लब्धनाशस्ततो भवेत् ॥

श्रोतव्यं गीतवाद्यादि स्वनुलिप्तैः स्वलङ्कृतैः ।

विशेषवस्त्रै भोक्तव्यं प्रशस्तैर्बान्धवैः सह ॥

तस्यां निशायां कर्त्तव्यं शय्यास्थानं सुशोभनम् ।

गन्धैर्वस्त्रैस्तथा पुष्पैरत्नैर्माल्यैरलङ्कृतम् ॥

दीपमालापरिक्षिप्तं तथा धूपेन धूपितम् ।
दयिताभिश्च सहितैर्नेया सा च भवेन्निशा ॥
नवैर्वस्त्रैश्च संपूज्या द्विजसम्बन्धिबान्धवाः" इत्यादित्यपुराणात् ।

तथास्यां सर्वं दिनं संतोषेणावस्थानं प्रदोषे च बलिराजं संपूज्य तदुद्देशेन दीपानामन्येषां च वस्तूनां यथाविभवं दानं सर्वे कुर्युः ।

"यो यादृशेन भावेन तिष्ठत्यस्यां युधिष्ठिर ।
हर्षदैन्यादिरूपेण तस्य वर्षं प्रयाति हि ॥
रुदितो रोदते वर्षं हृष्टो वर्षं प्रहृष्यति ।
भुक्तो भोक्ता भवेद्वर्षं स्वस्थः स्वस्थो भविष्यति ॥
तस्मात्प्रहृष्टैस्तुष्टैश्च कर्त्तव्या कौमुदी नरैः ।
वैष्णवी दानवीयेयं तिथिः पैत्री युधिष्ठिर" ॥ इति ।
"लोकश्चापि गृहस्यान्तःशय्यायां शुक्लतण्डुलैः ।
संस्थाप्य बलिराजानं फलैः पुष्पैश्च पूजयेत् ॥
बलिमुद्दिश्य दीयन्ते दानानि कुरुनन्दन ।
यानि तान्यक्षयाण्याहुर्मयैतत्संप्रदर्शितम्" ॥

इति भविष्योत्तरात् ।

अत्र वचने यद्यपि बलिपूजायां कालविशेषो नोक्तस्तथाप्येतत्पूर्ववचनोक्तराजकर्त्तव्यतत्पूजायां—

"कृत्वैतत्सर्वमेवेह रात्रौ दैत्यपतेर्बलेः ।
पूजां कुर्यान्नृपः साक्षाद्भूमौ मण्डलके कृते ॥
बलिमालिख्य दैत्येन्द्रं वर्णकैः पञ्चरङ्गकैः ।
सर्वाभरणसंपूर्णं विन्ध्यावल्या समन्वितम् ॥
कूष्माण्डबाणजम्भोरुमुरुदानवसंवृतम् ।
संपूर्णहृष्टवदनं किरीटोत्कटकुण्डलम् ॥

द्विभुजं दैत्यराजानं कारयित्वा नृपः स्वयम् ।
गृहस्य मध्ये शालायां विशालायां ततोऽर्चयेत्" ॥

इति रात्रेः कालत्वाभिधानात्सर्वेषामपि तत्र स एव कालः । शुक्लतण्डुलनिर्मिता प्रतिमापि तादृश्येव ।

यद्युद्देशेन दीपदानमुक्तं वामनपुराणे वामनकर्तृकबलिवरदान-व्याजेन कार्त्तिकशुक्लपक्षमधिकृत्य—

"वीर प्रतिपदं प्राप्य तव भावी महोत्सवः ।
तत्र त्वां नरशार्दूल हृष्टाः पुष्टाः स्वलंकृताः ॥
अर्घ्यदीपप्रदानेन अर्चयिष्यन्ति मानवाः ।
बलिराज नमस्तुभ्यं विरोचनसुत प्रभो ॥
भविष्येन्द्र सुराराते पूजेयं प्रतिगृह्यताम्" इति ।

इयं च प्रतिपद्बलिपूजने पूर्वविद्धा ग्राह्या कालव्याप्तिलाभात् । "प्रतिपदाप्यमावास्या" इति युग्मवाक्यात् ।

"श्रावणी दुर्गनवमी दूर्वा चैव हुताशनी ।
पूर्वविद्धैव कर्त्तव्या शिवरात्रिर्बलेर्दिनम्" ॥ इति बृहद्यमवचनाच्च ।

यद्यपि गवां पूजनं क्रीडनं चात्रैव प्रतिपदि "नन्दोदये तु तत्रैव पूजयेत्सुरभीस्तथा" इति "स्त्रियः क्रीडन्त्यमावास्यां गावो नन्दासु कार्तिके" इति च विहितं तत्रापि सा पूर्वविद्धैव ग्राह्या ।

"प्रतिपद्दर्शसंयोगे क्रीडनं तु गवां मतम् ।
परविद्धेषु यः कुर्यात्पुत्रदारधनक्षयः ॥
या कुहूः प्रतिपन्मिश्रा तत्र गाः पूजयेन्नृप ।
पूजने त्रीणि वर्द्धन्ते प्रजा गावो महीपतिः" ॥ इति देवलवचनात् ।

नन्दा प्रतिपत्तत्सम्बन्धिन्युदये सूर्योदयोपलक्षिते प्रातःकाले ।

यद्यप्येतद्वचनात् "पूर्वाह्णे क्रीडनं गवाम्" इति वचनाच्च तत्कालव्यापिन्युत्तरा प्रतिपद्गोक्रीडनादौ प्रतिभाति।

तथापि —

"गवां क्रीडादिने यत्र रात्रौ दृश्येत चन्द्रमाः।
सोमो राजा पशून् हन्ति सुरभीपूजकं तथा" ॥

इति देवलेन निषिद्धत्वात्सा तत्र न ग्राह्या। अत एव चन्द्रदर्शनाभावे क्वचिदुत्तरापि तत्र ग्राह्यत्वेनोक्ता।

"त्रियामगा दर्शतिथिर्भवेच्चेत्सार्द्धत्रियामा प्रतिपद्विवृद्धौ।
दीपोत्सवे ते मुनिभिः प्रदिष्टे अतोऽन्यथा पूर्वयुते विधेये" ॥ इति।

पुराणसमुच्चयेऽपि—

"वर्द्धमानतिथौ नन्दा यदा सार्द्धत्रियामिका।
द्वितीया वृद्धिगामी स्यादुत्तरा तत्र चोच्यते" ॥ इति।

उत्तरा नन्दा। तत्र गोक्रीडनादौ। पूर्ववचनेऽपि दीपोत्सवपदेनेदमेव गृह्यते। तत्र कालानुग्रहलाभात्। न तु बलिपूजादिकालबाधप्रसङ्गात्। चन्द्रदर्शनाभावलाभार्थं सार्द्धत्रियामोक्तिसामर्थ्याच्च।

"कार्त्तिके शुक्लपक्षे तु विधानद्वितयं भवेत्।
नारीनीराजनं प्रातः सायं मङ्गलमालिका" ॥

इति ब्रह्मपुराणोक्तं तु कर्मद्वयं स्वल्पायामपि द्वितीयायुक्तायामेव प्रतिपदि कर्त्तव्यम्।

"लभ्येत यदि वा प्रातः प्रतिपद्घटिकाद्वयम्।
तस्यां नीराजनं कार्यं सायं मङ्गलमालिकाम् ॥
आश्विनान्ते यदादर्शे नारीनीराजनं भवेत्।
नारीणां तत्र वैधव्यं देशे दुर्भिक्षमेव च ॥

कार्त्तिके शुक्लपक्षादावमावास्याष्टमीद्वयम् ।
देशभङ्गभयान्नैव कुर्यान्मङ्गलमालिकाम्" ॥

इति देवीपुराणगतान्वयव्यतिरेकवचनाच्चेति । क्वचित्कौमुदीतिथित्रयपूर्वभाविन्त्रयोदश्यामपि यमाय दीपदानमुक्तम् ।

"अश्वयुक्कृष्णपक्षे तु त्रयोदश्यां निशामुखे ।
यमदीपं बहिर्दद्यादपमृत्युर्विनश्यति" ॥ इति ।

तत्र मन्त्रोऽप्युक्तः—

"मृत्युना पाशदण्डाभ्यां कालेनामलया सह ।
त्रयोदश्यां दीपदानात्सूर्यजः प्रीयतां नमः" ॥ इति ।

अत्र चतुर्दश्यमावास्यादिकर्त्तव्योल्कादीपदानलक्ष्मीपूजादिषु मन्त्रादिर्विशेषः प्राच्यनिबन्धे । तत्रोल्काग्रहणे मन्त्रः—

"शस्त्राशस्त्रहतानां च भूतानां भूतदर्शयोः ।
उज्ज्वलज्योतिषा देहं दहेयं व्योमवह्निना" ॥ इति ।

तद्दाने—

"अग्निदग्धाश्च ये जीवा येऽप्यदग्धाः कुले मम ।
उज्ज्वलज्योतिषा दग्धास्ते यान्तु परमां गतिम्" ॥ इति ।

तद्विसर्जने—

"यमलोकं परित्यज्य आगता ये महालये ।
उज्ज्वलज्योतिषा वर्त्म प्रपश्यन्तो व्रजन्तु ते" ॥ इति ।

लक्ष्मीपूजानन्तरं प्रार्थना—

"नमस्ते सर्वदेवानां वरदासि हरिप्रिया ।
या गतिस्त्वत्प्रपन्नानां सा मे भूयात्त्वदर्चनात्" ॥ इति ।

"सुखरात्र्यां प्रदोषे तु कुबेरं पूजयन्ति वै ।
धनदाय नमस्तुभ्यं निधिपद्माधिपाय च ॥
भवन्तु त्वत्प्रसादान्मे धनधान्यादिसम्पदः" इति ।

दीपदाने—

"अग्निर्ज्योती रविर्ज्योतिश्चन्द्रो ज्योतिस्तथैव च ।
उत्तमः सर्वज्योतीनां दीपोऽयं प्रतिगृह्यताम्" ॥ इति ।

भविष्ये—

"सुखरात्रेरुषः काले प्रदीपोज्ज्वलितालये ।
सर्वान् बन्धूनबन्धूंश्च वाचा कुशलयार्चयेत् ॥
प्रदीपवन्दनं कार्यं लक्ष्मीमङ्गलहेतवे ।
गोरोचनाक्षतं चैव दद्यादङ्गेषु सर्वतः ॥
विश्वरूपस्य भार्यासि पद्मे पद्मालये शुभे ।
महालक्ष्मि नमस्तुभ्यं सुखरात्रिं कुरुष्व मे ॥
वर्षाकाले महाघोरे यन्मया दुष्कृतं कृतम् ।
सुखरात्रिप्रभातेऽद्य तन्मे लक्ष्मीर्व्यपोहतु ॥
या रात्रिः सर्वभूतानां या च देवेष्ववस्थिता ।
सम्वत्सरप्रिया या च सा ममास्तु सुमङ्गला ॥
माता त्वं सर्वभूतानां देवानां सृष्टिसंभवा ।
आख्याता भूतले देवि सुखरात्रि नमोऽस्तु ते" ॥ इति ।

दीपावलीप्रतिपदुत्तरयमद्वितीयाख्यद्वितीयाकृत्यं लिङ्गपुराणे—

"कार्त्तिके तु द्वितीयायां शुक्लायां भ्रातृपूजनम् ।
या न कुर्याद्विनश्यन्ति भ्रातरः सप्तजन्मसु" ॥

तस्या इति शेषः । भविष्योत्तरे तु —

"प्रथमा श्रावणे मासि तथा भाद्रपदे परा ।
तृतीयाश्वयुजे मासि चतुर्थी कार्त्तिके भवेत् ॥

श्रावणे कलुषा नाम तथा भाद्रे च गीर्मला ।
आश्विने प्रेतसंचारा कार्त्तिके याम्यका मता" ॥

इति चतस्रो द्वितीया उपक्रम्य प्रथमायां किञ्चित्प्रायश्चित्तं द्वितीयायां सरस्वतीपूजां तृतीयायां श्राद्धं कर्त्तव्यत्वेन सूचयित्वा चतुर्थ्यामस्यां कर्त्तव्यमुक्तम् ।

"कार्त्तिके शुक्लपक्षे तु द्वितीयायां युधिष्ठिर ।
यमो यमुनया पूर्वं भोजितः स्वगृहे स्वयम् ॥
अतो यमद्वितीया सा प्रोक्ता लोके युधिष्ठिर ।
अस्यां निजगृहे पार्थ न भोक्तव्यमतो बुधैः ॥
यत्नेन भगिनीहस्ताद्भोक्तव्यं पुष्टिवर्द्धनम् ।
दानानि च प्रदेयानि भगिनीभ्यो विशेषतः ॥
स्वर्णालङ्कारवस्त्राणि पूजासत्कारभाजनैः ।
सर्वा भगिन्यः संपूज्या अभावे प्रतिपन्नकाः ॥
पितृव्यभगिनीहस्तात्प्रथमायां युधिष्ठिर ।
मातुलस्य सुताहस्ताद् द्वितीयायां तथा नृप ॥
पितुर्मातुः स्वसुः कन्ये तृतीयायां तयोः करात् ।
भोक्तव्यं सहजायाश्च भगिन्या हस्ततः परम् ॥
सर्वासु भगिनीहस्ताद्भोक्तव्यं बलवर्द्धनम्
यस्यां तिथौ यमुनया यमराजदेवः
संभोजितः प्रतिजगत्स्वसृसौहृदेन ॥
तस्यां स्वसृकरतलादिह यो भुनक्ति
प्राप्नोति रत्नशुभगं धनमुत्तमं सः" ॥ इति ।

अन्यत्रापि—

"यमं च चित्रगुप्तं च यमदूतांश्च पूजयेत् ।
अर्घश्चात्र प्रदातव्यो यमाय सहजद्वयैः ॥

एह्येहि मार्तण्डज पाशहस्त यमान्तकालोकधरामरेश ।
भ्रातृद्वितीयाकृतदेवपूजां गृहाण चार्घ्यं भगवन्नमस्ते ॥
धर्मराज नमस्तुभ्यं नमस्ते यमुनाग्रज ।
पाहि मां किङ्करैः सार्द्धं सूर्यपुत्र नमोऽस्तु ते ॥
यमस्वसर्नमस्तेऽस्तु यमुने लोकपूजिते ।
वरदा भव मे नित्यं सूर्यपुत्रि नमोऽस्तु ते" ॥

इति यमुनापूजानन्तरं तत्प्रणामः।

प्रतिपन्नका मित्रभगिन्य इति हेमाद्रिः । पितृव्यभगनी पितृव्यसम्बन्धेन भगिनी पितृव्यकन्येत्यर्थः । सहजद्वयैर्भ्रातृभगिनीभिः ।

प्रातश्चन्द्रोदये वास्ते येषा कृष्णचतुर्दशी ।
सैवाभ्यङ्गाप्लवे ग्राह्या पूर्वा वा यदि वोत्तरा ॥
यश्चतुर्दशसंज्ञाभिस्तदनन्तरमीरितम् ।
यमस्य तर्पणं तच्च कार्यं तत्रैव यत्पुनः ॥
दीपदानं तथैवेह विहितं रजनीमुखे ।
पूर्वैतत्कर्मयोग्यायां संभवक्रममप्यदः ॥
प्रातरेव समाप्तायां त्यक्त्वा कालबलात्क्रमम् ।
प्रदोषे वर्त्तमानायां पूर्वस्यामेव संमतम् ॥
प्रातश्चन्द्रोदये वापि यदा न स्याद्दिनद्वये ।
तदाद्यदिनगा ग्राह्या गौणकाले यतोऽस्ति सा ॥
दिनद्वये तत्र सतो पूर्णत्वात्प्रथमा मता ।
लक्ष्मीपूजादीपदानाद्यमावास्याप्रदोषगम् ॥
श्राद्धैतत्कर्मयोग्यायां संभवक्रममप्यदः ।
प्रदोषगायां पूर्वेद्युः पूर्वस्यामेव पूर्ववत् ॥
बलिपूजा प्रदोषे या शुक्लोर्जप्रतिपद्गता ।
कर्त्तव्या पूर्वविद्धायां सा कालव्याप्तितो नरैः ॥

गोक्रीडनादि तत्रैव यदुक्तं तच्च पूर्वतः ।
कार्यं पौर्वाह्णिकमपि निषेधाच्चन्द्रदर्शने ॥
अत एव यदा सार्द्धत्रियामाप्रतिपद्भवेत् ।
पूर्वत्र च त्रियामामा परत्रैव तु तत्तदा ॥
नारीनीराजनं प्रातः सायं मङ्गलमालिका ।
तत्रैवोक्तं द्वयं यत्तद्द्वितीयायुजि तत्तिथौ ॥
कार्यं मुहूर्त्तमात्रायामपि स्यादिति निर्णयः ।

## अथहोलिकाकालविवेचनम् ।

यश्चफाल्गुनपौर्णमास्यां प्रदोषे शुष्ककाष्ठकरीषसंचयस्य राक्षोघ्नैर्मन्त्रैरग्निना दीपनं किलिकिलातालशब्दपूर्वकं तस्याग्नेस्त्रिः-परिभ्रमणं निःशङ्कनानाविधभगलिङ्गनामकीर्तनमिश्रं हास्यगानादि बालानां परस्परं दारुखड्गयुद्धादीत्येवंरूपस्तदुत्तरप्रतिपदि च—

"वन्दितासि सुरेन्द्रेण ब्रह्मणा शङ्करेण च ।
अतस्त्वं पाहि नो देवि विभूते भूतिदा भव" ॥

इति मन्त्रेण प्रातःकृत्यानन्तरं होलिकाविभूतिवन्दनमित्येवं—रूपस्तिथिद्वयसाध्यो होलिकोत्सवो भविष्योत्तरेऽभिहितस्तत्र पौर्णमासीपूर्वविद्धैव ग्राह्या युग्मवाक्यात् ।

"श्रावणी दुर्गनवमी दूर्वा चैव हुताशनी ।
पूर्वविद्धैव कर्त्तव्या शिवरात्रिर्बलेर्दिनम्" ॥

इति बृहद्यमवचनाच्च । हुताशनी होलिकापूर्णिमा । "पूर्वविद्धा प्रकर्त्तव्या फाल्गुनी पूर्णिमा सदा" इति शिवरहस्यसम्वादात् ।

होलिकादीपनं च प्रदोषे कार्यम् । तथा च पृथ्वीचन्द्रोदये दुर्वासो वचनम्—"निशागमे तु पूज्येत होलिका सर्वतो मुनेः" इति । तत्र भद्रायां सत्यां तु न कर्त्तव्यम् ।

"भद्रायां दीपिता होला राष्ट्रभङ्गं करोति वै ।
नगरस्य च नैवेष्टा तस्मात्तां परिवर्जयेत्" ॥

इति पुराणसमुच्चयवचनात् ।

"भद्रायां द्वे न कर्त्तव्ये श्रावणी फाल्गुनी तथा ।
श्रावणी नृपतिं हन्ति ग्रामं दहति फल्गुनी"॥ इति स्मृत्यन्तराच्च ।

एवं सति भद्रायां विहितं कार्यं होलिकायाः प्रपूजनमित्यादि-निबन्धाभासवचनं हेयम् । तथा च सति यैव प्रदोषे वर्त्तते पूर्वा परा वा सैव ग्राह्या । तत्र पूर्वस्यां प्रदोषे भद्राया असत्त्वे सम्यगेव । यदा तु तत्र भद्रा भवति तदा "शेषः सूर्योदयः स्मृतः" इति परिभाषित-सूर्योदयात्पूर्वं भद्रान्तं प्रतीक्ष्य होलिकादीपनाय यदि कश्चिदपि कालो लभ्यते तदा प्रदोषातिक्रमेऽपि तत्रैव तत्कर्त्तव्यम् ।

"राकायामद्वयादूर्ध्वं चतुर्दश्यां यदा भवेत् ।
होलां भद्रावसाने च होलिकां तत्र दीपयेत्" ॥

इति पुराणसमुच्चयवचनाच्च। निशीथान्ते निशीथोत्तरम् । एवं सति—

"मध्यरात्रमतिक्रम्य विष्टेः पुच्छं यदा भवेत् ।
प्रदोषे ज्वालयेद्वह्निं सुखसौभाग्यदायकम् ॥
प्रदोषान्मध्यरात्रान्तं होलिकापूजनं शुभम्" ।

इत्यादिनिबन्धाभासवचनं हेयम् ।

यदा तु पूर्वत्र भद्रारहितः कालो न लभ्यते । उत्तरदिने च सूर्यास्तात्पूर्वमेव पूर्णिमा समाप्ता । तदा भद्रापुच्छे ज्यौतिषिक-प्रसिद्धे पूर्वदिन एव तत्कार्यम् ।

"पृथिव्यां यानि कार्याणि शुभानि त्वशुभानि च ।
तानि सर्वाणि सिद्ध्यन्ति विष्टिपुच्छे न संशयः" ॥

इति लल्लवचनात् ।

यदा त्वस्मिन्नेव विषये उत्तरा पौर्णमासी सार्द्धयामत्रयमिता ततोऽधिका वा प्रतिपच्चान्तरदिने वृद्धिगामिनी तदा प्रतिपत्प्रदोष एव न पौर्णमास्युत्तरभाविनी होलिका दीपनीया न तु पूर्वरात्रौ विष्टिपुच्छे। तथा च भविष्योत्तरे—

"सार्द्धयामत्रयं पूर्णा द्वितीये दिवसे यदा।
प्रतिपद्वर्धमाना तु तदा सा होलिका स्मृता" ॥ इति।

तथा च या पूर्वप्रदोषे सत्यप्युत्तरप्रदोषेऽपि तत्रैव वा कृत्स्ने तदेकदेशे वा वर्त्तते सा सुतरामुत्तरा ग्राह्या। पूर्वरात्रेर्भद्राव्याप्तत्वादुत्तरत्र प्रदोषे लाभाच्च। पूर्वोक्तं च पूर्वविद्धाग्राह्यत्वमुत्तरत्र प्रदोषास्पर्शे वृद्ध्यभावे च।

न चैवं कालव्याप्तिशास्त्रादेव तन्सिद्धेर्व्यर्थं विशेषवचनमिति वाच्यम्। पूर्वदिनेऽपि प्रदोषास्पर्शे प्रतिपद्वृद्ध्यभावे च सार्थक्यात्। तत्र पूर्वरात्रौ भद्रारहितदीपनकालालाभात्प्रदोषकृत्येषु च नक्तभोजनादितत्पूर्वभाविनः सायाह्नस्य गौणकालत्वदर्शनात्प्रतिपत्क्षयेऽप्युत्तरदिने तत्प्रसक्तेः सत्त्वात्। तत्र पूर्वरात्रावेव भद्रापुच्छे तदलाभेऽपि वा तत्कर्त्तव्यत्वार्थं पूर्वविद्धाग्राह्यत्ववचनम्। एतादृशविषयमेव च—

"दिवा भद्रा यदा रात्रौ रात्रिभद्रा यदा दिवा।
सा भद्रा भद्रदा यस्माद्भद्रा कल्याणकारिणी" ॥

इति ज्यौतिषिकवचनमिति।

न च यदा पूर्वा रात्रिः सर्वा भद्राव्याप्ता, उत्तरदिनप्रदोषश्च पौर्णमासीशेषयुक्तोऽपि ग्रस्तचन्द्रोदयाद्रात्रिप्रथमघटिकायामेव वा चन्द्रग्रासाद्ग्रहणाक्रान्तस्तदा "सर्वेषामेव वर्णानां सूतकं राहुदर्शने" इत्यशुचित्वात्कथं तत्र तदनुष्ठानमिति वाच्यम्। तदुत्तरमेव "स्नात्वा

कर्माणि कुर्वीत शृतमन्नं विवर्जयेत्'' इत्यभिधानात्स्नानोत्तरं नित्य-नैमित्तिकेष्वधिकाराविघातात्। न च तत्र ग्रहणनिमित्तकानामेव कर्मणां ग्रहणम्। "स्मार्तकर्मपरित्यागो राहोरन्यत्र सूतके" इति तत्र सर्वस्मार्तावश्यककर्मणां प्रसवात्। राहोः सूतकादिति हेमाद्रिः। अतो ग्रहणे वेधप्रभृतिभोजनं ग्रहणान्तरितपक्वोपयोगश्च निषिद्धो नान्यत्किञ्चित्। काम्यानि तु महावेधप्रभृत्येव निषिद्धानीति।

प्रदोषव्यापिनी ग्राह्या परा पूर्वोक्तफाल्गुनी।
होलिका दीपने पूर्वा प्रदोषो यदि भद्रया॥
व्याप्तस्तदा पुरा सूर्योदयतः परिभाषितात्।
तन्मुक्तो यदि लभ्येत कालस्तत्रापि दीपनम्॥
अलाभे विष्टिपुच्छे तत्पूर्णिमा यदि तूत्तरा।
सार्द्धयामत्रयमिता प्रतिपद्वृद्धिगामिनी॥
तदोत्तरा प्रदोषे तत्प्रतिपद्येव चान्यथा।
पूर्वस्यामेव भद्रान्तरपि स्यादिति निर्णयः॥

इति श्रीसम्राट्स्थपतिरघुनाथवाजपेययाजिकृतौ नानातिथि-साध्यकौमुदीहोलिकोत्सवनिर्णयः।

## अथ श्राद्धकालविवेचनम्।

अथ श्राद्धतिथिनिर्णयः। तन्निर्णयश्च वेलारूपश्राद्धकर्मकाल-ज्ञानाधीनः। वेला च तत्तच्छ्राद्धभेदेन व्यवस्थितेति श्राद्धभेदा निरूपणीयाः। तत्र पार्वणैकोद्दिष्टरूपेण द्विविधे श्राद्धे। पार्वणभेदा-स्तावत्। तत्र याज्ञवल्क्यः—

"अमावास्याष्टका वृद्धिः कृष्णपक्षोऽयनद्वयम्।
द्रव्यं ब्राह्मणसंपत्तिर्विषुवत्सूर्यसंक्रमः॥

व्यतीपातो गजच्छाया ग्रहणं चन्द्रसूर्ययोः ।
श्राद्धं प्रति रुचिश्चैव श्राद्धकालाः प्रकीर्त्तिताः" ॥ इति ॥

अष्टकाशब्दः कर्मनामधेयमप्यत्र तदधिकरणकालपरः पूर्वोत्तरतिथ्योरुपलक्षणं च । तेनामावास्याष्टकाकृष्णपक्षव्यतीपातगजच्छायानां मुख्यमेव कालत्वम् । वृद्धिसंक्रमद्रव्यादिसंपद्ग्रहणरुचीनां तु साक्षान्निमित्तभूतानां तदुपलक्षणत्वेन । अत्र च वचनेन क्वचिद्विहितस्य श्राद्धकर्मणः कालमात्रसम्बन्धः क्रियते । "य इष्ट्या" इत्यादिवचनेनेवेष्ट्यादीनाम् । अस्यां स्मृतौ कालानालिङ्गितस्य श्राद्धकर्मण इष्ट्यादेरिव क्वचिदविधानात् । तथात्वे च सायं च प्रातश्च जुहोतीतिवत्सकृत्प्रयोगासंभवन्निवेशानेककालसमुच्चयवशेनाभ्यासमात्रापत्तेः । स्मृत्यन्तरगतांस्तत्तच्छ्राद्धविधीनपेक्ष्य तत्करणस्य च तत्तत्कालविशिष्टानामेव तेषां तत्र विधानेनासंभवात् । अनुवादमात्रस्य च संभवति विधावन्याय्यत्वात्तदभावे चेति कर्त्तव्यतानाकाङ्क्षणेनोत्तरतद्विधानानुपपत्तेः ।

तेनानया वाचोयुक्त्या विशिष्टविधिरेवायम् । एते श्राद्धकाला एतेषु कालेषु श्राद्धं कुर्यादित्यर्थः । तत्र च विध्येकत्वेऽपि एककर्मासंभवन्निवेशानेककालवशेन संख्यान्यायेन न्यायसुधाकरमते सिद्धयेदपि यावत्कालं श्राद्धभेदो "यदाग्नेयः" इत्यत्राग्नेयभेदवत् । मुख्यमते तु न सिध्यतीति वस्तुतोऽत्र वाक्यतन्त्रतामात्रम् । पर्यवसानगत्या तु विधिभेद एव यावत्कालम् । कालानां विधेयत्वेन गुणभावेन चैकविध्यनुप्रवेशसंभवेऽपि निमित्तानामतथात्वेन तदसंभवात्तदंशे विधिभेदस्यावश्यकत्वात्तन्मिश्रत्वाच्च कालानां तत्रापि तदौचित्यात् । तद्भेदे च विहितस्य विधानायोगात्प्रति विधिभेद एव श्राद्धानाम् ।

स्मृत्यन्तरेषु च भिन्नभिन्नप्रकरणगतैः कालादियुक्तविधिभिः स्पष्ट एव भेद इत्यत्रापि तदेकवाक्यतालाभाय तथैव युक्तम् । एवमेवंजातीयकेष्वन्येष्वपि वचनेषु द्रष्टव्यम् ।

गौतमीयेऽपि—"अमावास्यायां पितृभ्यो दद्यात्, पञ्चमीप्रभृति वापरपक्षस्य, यथाश्रद्धं सर्वस्मिन्वा, द्रव्यदेशब्राह्मणसंनिधाने वा कालनियमः" इति त्रिभिः सूत्रैर्विधास्यमानानां त्रयाणां श्राद्धानां तदुपलक्षितानां चान्येषामपि सहोपक्रममात्रम्। "अथ श्राद्धम्"इति, "साहस्राः साद्यस्क्राः, "अथेष्ट्ययनानि"इत्यादिवत्। अतएव हरदत्तेन तद्व्याख्यावसर एव पञ्चविधं श्राद्धं प्रपञ्चेन दर्शितम्। न तु विधिः। अत एव नैकफलत्वं नाप्येकप्रयोगत्वं वक्ष्यमाणश्राद्धानाम्। सहोपक्रमप्रयोजनम् च। "अथैतन्मनुः श्राद्धशब्दं कर्म प्रोवाच प्रजानिःश्रेयसाय" इत्यापस्तम्बीयवन्नार्थवादत्वं स्तुत्यप्रतीतेः। किन्तु "शक्तितः प्रकर्षेद् गुणसंस्कारविधीनन्नस्य" इत्यादिवक्ष्यमाणधर्माणां साधारण्यम्।

न च गौतमोक्तानां ब्राह्मणविशेषविधिप्रतिषेधादिभिर्धर्माणां साधारण्येऽपि काचित् क्षतिः। ऊहबाधविषयभूतानामसंभवत्सामानविषयानां होमपिण्डदानां तेनानुक्तेरेव।

यद्वा (१) निकायित्वसिद्ध्या साद्यस्क्रादिवच्छ्राद्धशब्दवत्वाद्वा पूर्वदर्शश्राद्धविध्यन्तस्योत्तरेऽप्यपरपक्षश्राद्धादिष्वतिदेशसिद्धिरेव प्रयोजनमस्तु। दृश्यते हि मनुयाज्ञवल्क्यादिस्मृतिषु मत्स्यमार्कण्डेयादिपुराणेषु च बहुषु धर्मनिबन्धनेषु श्राद्धशब्दवत्त्वरूपात्क्वचिद्देवतादिसामान्यरूपादपि चोदनासामान्यात्सर्वश्राद्धेषु दर्शश्राद्धविध्यन्तातिदेशः।

---

(१)—"साहस्राः साद्यस्क्राः" इत्येवमेकसंज्ञायोगिनो यागास्ते संघातरूपनिकाययोगान्निकायिन उच्यन्ते। तेषां य एवैको धर्मवान् तस्याधर्मकेषु प्रवृत्तिः। एकसंज्ञायोगित्वसादृश्यात्" इति भाट्टदीपिकायां खण्डदेवेनोक्तम्।

शाबरभाष्ये च निकायिनामतिदेशस्य विवरणं विशिष्य विहितम्। यथा—'निकाय इति संघात औत्तराधर्येणावस्थित उच्यते

केषुचिदेव तु कात्यायनीयापस्तम्बीयादिसूत्रेष्वपरपक्षश्राद्धविध्यन्तातिदेशोऽभिमतः। तेषु तत्रैव धर्मोपदेशात्।

यत्तु मेधातिथिना "श्राद्धशब्दोऽमावास्यायां विहित एव पिण्डदानब्राह्मणभोजनादिरूपे कर्मणि मुख्योऽन्यत्र तु नित्यश्राद्धादौ मासाग्निहोत्रे तच्छब्दद्वारेण धर्मातिदेशः सर्वश्राद्धेषु" इत्युक्तम्। तच्छ्राद्धं द्विविधं पञ्चविधमष्टविधं द्वादशविधमित्यादिमुख्यतयैव

---

स एषां ते निकायिनः। यथा 'साहस्राः साद्यस्काः' तेषां पूर्वस्य केचिद्धर्मा आम्नाताः। उत्तरे त्वधर्मकाः। तत्र चिन्त्यते। किं ज्योतिष्टोमस्य विध्यन्त उत प्रथमस्य निकायिन इति। अव्यक्तचोदनाज्ज्योतिष्टोमस्य इति प्राप्ते उच्यते। निकायिनां च पूर्वस्योत्तरेषु प्रवृत्तिः स्यात्। कुतः निकायित्वसामान्यात्। साहस्राणां साहस्रसामान्यात्। साद्यस्काणां साद्यस्कसामान्यात्। एवं सर्वत्र पूर्वस्मिन् च साहस्रे सहस्रं दक्षिणामाम्नायोत्तरस्मिन् दर्शयति "यावदस्य साहस्रस्य उत्तरा गौः समाहिता भवति। तावदस्माल्लोकात् असौ लोकः" इति, तथा पूर्वस्मिन् साद्यस्के 'साण्डस्त्रिवत्सरः सोमक्रयणः स्पर्धमानाम्' इत्याम्नाय उत्तरस्मिन्नपि तमेव दर्शयति। 'स्त्री गौः सोमक्रयणी व्यावृत्ता हि एषां स्पर्धिता' इति। तस्मात्पूर्वस्योत्तरेषु धर्माः"। इति।

तत्र साहस्रा यागाश्चत्वारो ज्योतिः-विश्वज्योतिः-सर्वज्योतिः—त्रिरात्रसम्मित-नामभिरभिधीयमानाः एकाहाः सहस्रगोदक्षिणात्वेन साहस्रा इत्युच्यन्ते। अत्र तृतीयः साहस्र उक्थ्यसंस्थः, इतरेऽग्निष्टोमसंस्थाः। साद्यस्कास्तु सद्यो दीक्षादिवस एव क्रयप्रभृति अभिषवान्तं कर्म भवति येषु ते तथाम्नोच्यन्ते। ते च षडेव। तत्र प्रथमद्वितीययोर्न विशेषसंज्ञा, इतरे चत्वारः क्रमेण अनुक्री-विश्वजिच्छिल्प-श्येन-एकत्रिकसंज्ञकाः इति स्पष्टं कात्यायनश्रौतसूत्रे (२२ अध्याये २—३ काण्डके)।

सर्वत्र श्राद्धशब्दप्रयोगदर्शनान्निबन्धृभिश्च सर्वानुवृत्तश्राद्धशब्दवाच्योपाधिनिर्वचनक्लेशकरणान्नातीवादरणीयम्। श्राद्धशब्दस्त्वेकेनोपाधिना प्रवर्त्तमानः सर्वत्रेष्टिशब्दवन्मुख्य एव। स चोपाधिः श्राद्धतत्त्वविवेचने निष्कक्ष्यते।

गोभिलीयान्यपि—"अथ श्राद्धममावास्यायां पितृभ्यो दद्यात्। पञ्चमीप्रभृति वापरपक्षस्य, यदहरुपपद्येत" इति सूत्राणि गौतमीयवदेवच्छेदेन व्याख्येयानि। "पञ्चमीप्रभृति वा" इति विकल्पाभिधानं तु शास्त्रान्तरोक्तप्रतिपत्प्रभृतिपक्षाभिप्रायेण न त्वमावास्याभिप्रायेण। तस्यां पृथक् श्राद्धविधानात्। अत एव तद्भाष्यकृता तथैवोक्त्वा "प्रतिपत्प्रभृतिष्वेकां वर्जयित्वा चतुर्दशीम्" इति योगीश्वरवचनमुपन्यस्तम्।

यत्तु तेनैव श्राद्धशब्दं श्राद्धमनेन भुक्तमितिवच्छ्राद्धप्रदेयान्नपरमङ्गीकृत्योत्तरेणैकवाक्यतयैव पूर्वसूत्रं व्याख्यातं न त्वधिकारार्थत्वेन पृथक्कृत्य।

यच्च गौडैः—श्राद्धशब्दमग्निहोत्रवद्यौगिकं द्वितीयान्तं नामधेयमङ्गीकृत्य तथैव व्याख्यातं तदस्तु नाम। सर्वथा कालविशिष्टकर्मविधय एवैते।

वस्तुतस्तु पृथगेव "अथ श्राद्धम्" इति सूत्रं विध्येकवाक्यत्वेऽधिकारार्थाप्यशब्दानन्वयात्। न च पिण्डपितृयज्ञानन्तर्यं गार्हस्थ्यानन्तर्यं वाथशब्देनोच्यत इति युक्तम्। गृह्यसूत्रापेक्षयास्य ग्रन्थान्तरत्वाद्विशेषतस्तयोरेवानुपस्थितेश्च। पिण्डपितृयज्ञानन्तर्यस्य चान्वष्टक्यस्थालीपाकधर्मातिदेशेनामावास्यायां पिण्डपितृयज्ञं विधाय "तच्छ्राद्धम्" इत्युक्त्वा "इतरदन्वाहार्यम्" इति गृह्येऽभिधानादनुशब्दादेव सिद्धत्वात्। पिण्डपितृयज्ञप्रसङ्गेन तदानन्तर्यविधातुमेव हि स्वतन्त्रे ग्रन्थे विधास्यमानस्य दर्शश्राद्धस्य तत्र परामर्शः परामृष्टस्य च तस्य

"पश्चान्मासीनम्" इति सूत्रेण प्रतिमासिकत्वविधिः पिण्डपितृयज्ञ-साहित्येन । अत एव "दक्षिणाग्नौ हविषः संस्करणम्" इत्यादिना पिण्डपितृयज्ञस्यैवाग्रे इतिकर्तव्यताविशेषविधिर्न प्रसङ्ग इति न्यायेन ।

एवं सति गौतमीयादिगतस्य सामान्योपक्रमस्याप्यधिकार-मात्रार्थत्वेन कर्मविधित्वाभावात्कालसमभिव्याहृतानामेव विशिष्ट-विधिरूपेण तद्विधित्वात्प्रतिकालं श्राद्धकर्मभेदे सत्यमावास्यायाः कृष्णपक्षान्तरगतत्वेऽपि कृष्णपक्षश्राद्धाद्भिन्नमेव तच्छ्राद्धम् । अभेदे याज्ञवल्क्यादिवचनेषु पृथगमावास्याग्रहणवैयर्थ्यापत्तेः ।

न चायनविषुवतोरिव प्राशस्त्यातिशयद्योतनार्थं तद्ग्रहणम् । अत एव निगमः "अपरपक्षे यदहः संपद्यते, अमावास्यायां तु विशेषेण" इतीति वाच्यम् । (१) अवयुत्यानुवादवशेन तद्द्योतनेऽमा-वास्यापदान्वितस्य श्राद्धकालपदस्यानुवादत्वेन, इतरान्वितस्य च विधित्वेन वैरूप्यापत्तेः । पुनर्विधानादेव तद्योग्यतामिति चेत् । न । तस्यासंभवादेव । न ह्यप्रवृत्तप्रवर्तनात्मकं विधानमेकगोचरं पुनः संभवति । अत एव विधिभेदादेव कर्मभेदः । शब्दान्तरादीनि तु विधेः कर्मस्वरूपपरतामात्रं गमयन्तीति भेदन्यायरहस्यम् ।

अयनविषुवतोस्तु श्राद्धस्य विधानमेव गोबलीवर्दन्यायेन । तदितरसंक्रान्तिपरेण सूर्यसंक्रमपदेन तयोस्तस्याविधानात् । स्पष्टं च गोबलीवर्दन्यायेन तस्यायनादिभिन्नपरत्वमुक्तं शूलपाणिना । इतरसंक्रान्त्यपेक्षयाऽयनादिश्राद्धस्यावश्यकत्वज्ञापनं तु यदीदं न स्यात्तदा किं स्यादिति परिसंख्यान्यायेनापूर्वश्राद्धविधेरेव लक्षणया समभिव्याहृतसामान्यविधेः स्वविषयेतरविषयत्वक्लेशकरस्य प्रयोजन-मात्रम् । भिद्यन्त एव चेतरसंक्रान्तिश्राद्धेभ्योऽयनादिश्राद्धानि ।

---

(१) अवयुत्य पृथक्कृत्यानुवाद इति भावः ।

यदि चात्राप्यमावास्याशब्दसमभिव्याहारात्कृष्णपक्षशब्दं तद्भिन्नतिथिसमुदायपरं कृत्वामावास्याश्राद्धं तेन न विहितममावास्यापदेनैव विधीयत इत्युच्यते। सिद्ध्यत्येव तथा पक्षश्राद्धादमावास्याश्राद्धस्य भेदः। न त्वेदत्र संभवदुक्तिकम्।

यदि हि कृष्णपक्षशब्देन सर्वासु तत्तिथिषु भिन्नान्येव श्राद्धान्येकस्यैवैतावन्तः प्रयोगा वा समुच्चित्य विधीयेरंस्तदामावास्याशब्दसमभिव्याहारात्तद्भिन्नतिथिष्वेव ते न विधीयन्ते। अमावास्यायां त्वमावास्याशब्देनैव। आवश्यकत्वज्ञापनं च तत्प्रयोजनमित्युक्तिः संभवेत्। न त्वेतदस्ति। श्राद्धभेदे तावत्प्रमाणमेव नास्ति। आवृत्तिरपि "अश्वयुक्कृष्णपक्षे तु श्राद्धं कुर्याद्दिने दिने" इतिवद्वीप्साश्रवणाभावात् पक्षनिमित्तकश्राद्धस्य च वसन्तनिमित्तज्योतिष्टोमवत्सकृत्करणेनैव सिद्धेरयुक्ता।

यत्तु "सर्वेष्वेवापरपक्षस्याहस्सु क्रियमाणे पितॄन् प्रीणाति, कर्तुस्तु कालाभिनियमात्फलविशेषः" इत्यापस्तम्बवचनं तेनापि न समुच्चितासु सर्वतिथिषु श्राद्धं विधीयते। किन्तु पितृप्रीतिर्यस्यां कस्यांचिदप्यपरपक्षतिथौ श्राद्धे क्रियमाणेऽविशिष्टा। प्रतिपद्येव द्वितीयायामेवेत्यादिकालाभिनियमाद्यः श्राद्धं करोति तस्य कर्तुस्तु तत्तत्कालनियमात्प्रथमेऽहनि क्रियमाणे स्त्रीप्रायमपत्यं जायते द्वितीये स्तेनाः पुत्रा जायन्ते इत्यादिः फलविशेषो भवतीत्युच्यते। व्याख्यातं चेत्थमेव तद्धरदत्तेन।

यदपि देवलवचनं पार्वणश्राद्धमभिधाय—

"अनेन विधिना श्राद्धं कुर्यात्सम्वत्सरं सकृत्।
द्विश्चतुर्वा यथाश्रद्धं मासे मासे दिने दिने" इति॥

तत्रापि "दिने दिने" इत्यहरहः श्राद्धमुच्यते न तु दिने दिन इति वीप्साश्रुत्यापरपक्षश्राद्धमवगम्यत इति शूलपाण्युक्तिर्युक्ता।

सम्वत्सरप्रक्रमात्तस्यैव मासि मासीत्यत्रैव दिने दिने] इत्यत्राप्यन्वय-प्रतीतेः। अत एवापस्तम्बेन नित्यश्राद्धं प्रक्रम्योक्तम्—"एवं सम्वत्सरम्" इति। मासि मासीत्यनेन तु मासानुमासिकमित्युक्त-त्वादमावास्याश्राद्धं वा "मासि मासि चैवम्" इत्युक्तत्वादपरपक्षश्राद्धं वा गृह्यते। "यदहः संपद्येत" इति कातीयसूत्रं तु तदहर्ब्राह्मणाना-मन्व्येत्येतदेकवाक्यतयैव कर्कादिभिर्व्याख्यातम्। एवं गोभिलीयमपि "यदहरुपपद्येत" इति। भिन्नमपि द्रव्यब्राह्मणसम्पत्तिरित्येतत्समान-विषयतया। न तु द्वयमपि कृष्णपक्षे एकदिनपक्षविधायकम्। येन पूर्वसूत्रस्य समुच्चयेन सर्वतिथिविधायकता गम्येत।

तेन सामान्यकृष्णपक्षे प्रतिपत्प्रभृतियस्यां कस्यांचित्ततोऽपि विशेषकामनायां दशम्यादियस्यां कस्यांचित्ततोऽपि विशेषकामनाया-ममावास्यायां सकृदेव श्राद्धं कर्त्तव्यम्।

एवं च मार्गादिकृष्णपक्षेऽपि शक्तस्य प्रतिपदादिस्ततो हीनशक्तेः पञ्चम्यादिस्ततोऽपि हीनशक्तेर्दशम्यादिस्ततोऽपि हीनशक्तेरमावास्या-मात्रं श्राद्धकाल इति वाचस्पत्युक्तेः कृष्णपक्षे प्रत्यहमिति हेमाद्र्युक्तेश्च मूलं चिन्त्यमेव। प्रौष्ठपद्युत्तरापरपक्षविशेषे तु पञ्च पक्षा वक्ष्यन्ते।

तेनात्र गोबलीवर्दन्यायानुपपत्तेः प्राप्ते कृष्णपक्षश्राद्धे फलविशेषा-र्थममावास्यायां तु विशेषेणेतिवदमावास्याविधिरित्येवापतति। तच्च "श्राद्धकालाः" इति बहुवचनावगतपरम्परानपेक्षतन्त्रान्वयविधातक-वैरूप्यापत्तेरयुक्तम्। निगमवचने तु पृथग्विधित्वादुक्तोऽपरपक्षश्राद्ध एव फलविशेषार्थममावास्याविधिः। यद्यपि च "अमावास्यायामपराह्णे मासिकमपरपक्षस्य ... वायुक्ष्वहःसु" इति हिरण्यकेशिसूत्रे-ऽमावास्याया इतरायुग्मतिथिभिः सह तुल्यवद्विकल्पः प्रतीयते। तथापि निगमैकवाक्यतया तस्याः प्रशस्तत्वं तत्रापि द्रष्टव्यम्। एवं केश्चित्पठ्यमाने "मासि श्राद्धमपरपक्षस्योत्तमेऽहनि" इत्यापस्त-म्बीयेऽपि।

यद्यपि तथा "पक्षस्य जघन्यान्यहानि" इत्युत्तरसूत्रेणैव तथाशब्देन "अपरपक्षस्यापराह्णः श्रेयान्" इत्युक्तश्रेयस्त्वानुकर्षणात्प्रतिपदपेक्षया द्वितीयादीनि द्वितीयापेक्षया तृतीयादीनीत्यनेन क्रमेणामावास्यायाः श्रेयस्तरत्वं हरदत्तव्याख्यया सिध्यत्येव। तथापि वस्तुतः "कृष्णपक्षे दशम्यादौ वर्जयित्वा चतुर्दशीम्" इति मनुवचनैकवाक्यतया जघन्याहःपदेन दशम्यादीनामेवोपादानेन तेषामेव तत्र श्रेयस्त्वाभिधानात्तन्मध्येऽपि श्रेयस्तरत्वप्रतिपादनार्थं पूर्वसूत्रम्। "न दर्शेन विना श्राद्धमाहिताग्नेर्द्विजन्मनः" इति मनुवचनैकवाक्यतयाऽऽहिताग्निविषयं वास्तु। कृष्णपक्षश्राद्धविषयतया हीदं मनुवचनं पार्थसारथिमिश्रैः प्राच्यैश्च व्याख्यातम्। तस्माद्भिन्नमेव कृष्णपक्षश्राद्धादमावास्याश्राद्धम्। तस्य फलविशेषलोभेन तत्रैव क्रियमाणेन कृष्णपक्षश्राद्धेनाविरुद्धाङ्गकत्वे त्वावृत्तिरस्तु। मनुना तु स्पष्टमेव—

"पितृयज्ञं तु निर्वर्त्त्य विप्रश्चन्द्रक्षयेऽग्निमान्।
पिण्डान्वाहार्यकं श्राद्धं कुर्यान्मासानुमासिकम्" ॥

इति चन्द्रक्षयसंज्ञिकायाममावास्यायां श्राद्धं सविधिकं विधाय—

"कृष्णपक्षे दशम्यादौ वर्जयित्वा चतुर्दशीम्।
श्राद्धे प्रशस्तास्तिथयो यथैता न तथेतराः" ॥

इति पश्चात्कृष्णपक्षश्राद्धविधानात्तयोर्भेदो दर्शितः। आश्वलायनेनापि "मासि मासि चैवं पितृभ्यः" इत्यनेन पूर्वसूत्रगतापरपक्षपदानुषङ्गेणान्वष्टक्यधर्मातिदेशेन प्रतिमासमपरपक्षश्राद्धं विधाय "अथातः पार्वणे श्राद्धे" इत्यादिना चतुर्थेऽध्याये पृथगेवामावास्याश्राद्धं पार्वणशब्देन प्रस्तावपूर्वकं पिण्डपितृयज्ञव्यतिषङ्गेण कृत्स्नविधानतया विहितम्।

यद्यपि च तत्र सप्तम्या निर्दिष्टानां पार्वणादीनां करिष्यमाणधर्मविधानावधित्वसंकीर्त्तनरूपोद्देश एव प्रतीयते न तु विधानम्।

तदुपपत्त्यर्थमेव चैकोद्दिष्टस्य "श्राद्धमस्मै दद्युः" इति स्वशाखागतं काम्याभ्युदयिकयोश्च शाखान्तरगतं विधानं व्याख्यातृभिर्दर्शितम् । तथापि पर्वणि भवं पार्वणं तथाप्येकस्मिन्नेव पर्वणि भवत्यमावास्यायां नोभयोः पर्वणोः पिण्डपितृयज्ञेन सह व्यतिषङ्गदर्शनादिति वृत्तिग्रन्था-त्पार्वणशब्दस्य कालविशिष्टकर्मविधायित्वप्रतीतिः । तस्य काल-विधायित्वाभावे तद्विशेषविचारानुपयोगात् । न च कर्मनामधेय-त्वोक्तिविरोधः । कर्मनामधेययोरपि पार्वणोपांशुयाजशब्दयोरन्व-र्थतासिद्ध्यर्थं देवतोपांशुत्वविधित्वस्येष्टत्वात् । तद्वदेतस्यापि कालविशिष्टकर्मविधायित्वसंभवात् ।

कर्मविध्यभावे तदीयकृत्स्नविध्यन्तोपदेशानुपपत्तेश्च कर्मविधिः पार्वणशब्दः । अत एव च पार्वणश्राद्धस्यैवात्र विधानं पिण्डपितृ-यज्ञव्यतिषङ्गघटितस्य विध्यन्तस्यान्यत्रासंभविनस्तन्मात्रान्वयित्वात् । अत एवैकैकमेकैकस्य द्वौ द्वौ त्रींस्त्रीन्वेति ब्राह्मणसंख्याविधेः पार्वण-मात्रविषयत्वं वृत्तिकारेणोक्तं पार्वणे तु वक्ष्यतीति ।

काम्यादीनां तु शाखान्तरस्वशाखान्तरसिद्धानामेवात्रोपादानमति-देशप्राप्तपार्वणविध्यन्तसम्बन्धानुवादश्च सप्तम्या । कर्त्तव्यताविध्यर्थं चेति वृत्तिग्रन्थोऽपि पार्वणविषय एव । सर्वेषामत्र विधानाभ्युपगमे सर्वान् प्रकृत्य विहितस्य विध्यन्तस्यातिथ्यादिवद्धर्मविशेषवदुप-देशात एव साधारण्यापत्तेः । तत्र च बहुग्रन्थविरोधप्रसङ्गात्, तत्तत्कामरूपसाध्यविशेषतत्तत्तिथिवारादिरूपसाधनविशेषानुपादाना-च्चानुपपन्नः काम्यविधिः । मासि श्राद्धेन समं विकल्पाभिधानादपि पार्वणस्य ततो भेद, आश्वलायनसूत्रव्याख्यातॄणां संमतः । न चैकस्मिन्नेवापरपक्षश्राद्धे प्रकारविकल्पाभिप्रायं तत् ।

अत एव हेमाद्रिणा दर्शश्राद्धस्यापरपक्षश्राद्धाद्भेदप्रसाधनेनैव तयो-र्विकल्पमतं निरस्तम् । एककर्मत्वे हि पितृयज्ञे श्राद्धबलिदानप्रकार-

विकल्पवन्मासि श्राद्धपार्वणप्रकारयोर्विकल्पो युज्यते न तु तदस्तीति वाच्यम् ।

"अन्वष्टक्यं च पूर्वेद्युर्मासि मासि च पार्वणम् ।
काम्यमभ्युदयेऽष्टम्यामेकोद्दिष्टमथाष्टमम्" ॥

आचार्येणाष्टौ श्राद्धान्युक्तानीत्यादिबहुशो भेदव्यवहारेण तदसंभवात् । प्रकारविकल्पे समानकालत्वस्य हेतुत्वानुपपत्तेश्च । कर्मभेदेऽदृष्टार्थयोः श्राद्धयोः समानकार्यत्वे प्रमाणाभावात् कथं तेन हेतुना विकल्प उच्यत इति चेत् । श्रूयतामत्रोपपत्तिः । तत्तदर्थवादवशात्पितृतृप्तिविशेषार्थमुत्पन्नादिमासविशेषादिरूपतत्तद्द्रव्यमघात्रयोदश्यादिरूपकालविशेषपुष्करादिरूपदेशविशेषपङ्क्तिपावनादिरूपपात्रविशेषोपदेशाच्च मुख्यत्वेन प्रजानिःश्रेयसायेत्युक्त्वाच्छ्राद्धकर्तृगामिन्यपि फले द्वारत्वेन पितृतृप्तेः श्राद्धकर्मफलत्वेन सर्वैरपि निबन्धकारैरभ्युपगतत्वात् कृष्णपक्षे पितृतृप्तिः कर्त्तव्येत्येतावन्मात्रेच्छोरन्यतरकरणेनापि तत्सिद्धेर्युक्त एव पार्वणमासिश्राद्धयोर्विकल्पः । द्वयोरपि च नैमित्तिकत्वेऽपि मासिश्राद्धाकरणहेतुकप्रत्यवायपरिहारस्य च "अनेन विधिना श्राद्धम्" इति पूर्वोदाहृतदेवलवचनात्संवत्सरमध्ये सकृद्द्विरादिकरणेनापि सिद्धेः ।

मनुनाप्युक्तम्—

"अनेन विधिना श्राद्धं त्रिरब्दस्येह निर्वपेत् ।
हेमन्तग्रीष्मवर्षासु पाञ्चयज्ञिकमन्वहम्" ॥ इति ।

अत्र हेमन्तप्रयुक्तं कुम्भस्थेऽर्केऽमावास्यायां ग्रीष्मप्रयुक्तं वृषस्थे वर्षाप्रयुक्तं कन्यास्थे इति द्रष्टव्यम् । ऋतवश्च त्वृतुसम्वत्सराभिप्रायेण मासचतुष्टयात्मकाः ।

"अनेन विधिना श्राद्धं त्रिरब्दस्येह निर्वपेत् ।
कन्याकुम्भवृषस्थेऽर्के कृष्णपक्षे च सर्वदा" ॥

इति मत्स्यपुराणवाक्यात् । अत एव केषुचिद्वचनेषु महालयापरपक्षश्राद्धनवराश्रतदोर्घकालत्वमुक्तम् । एतस्मान्मत्स्यपुराणवचनादपि स्पष्टोऽमावास्याश्राद्धस्य कृष्णपक्षश्राद्धाद्भेदः । दर्शश्राद्धस्य सम्वत्सरे त्रिरात्रनुष्ठानरूपानुकल्पविधानात् । कृष्णपक्षश्राद्धस्य च सर्वदैव कर्त्तव्यत्वविधानात् ।

अन्योऽप्यनुकल्पः साग्निकस्य पिण्डपितृयज्ञपिण्डदानेनैव सिद्धिर्निरग्निकस्य ब्राह्मणभोजनमात्रमित्येवंरूपः पार्वणासंभवे उक्तो निगमः—"आहिताग्नेः पित्र्यर्थनपिण्डैरेव निरग्नेः पूर्णमन्नदानम्" इति । तत्राप्यशक्तनिरग्निविषये विष्णुपुराणे—

"अन्नेन वा यथाशक्ति कालेऽस्मिन् भक्तिनम्रधीः ।
भोजयिष्यति विप्राग्र्यांस्तन्मात्रविभवो नरः ॥
असमर्थोऽन्नदानस्य धान्यमाशस्वशक्तितः ।
प्रदास्यति द्विजाग्र्येभ्यः स्वल्पाल्पामपि दक्षिणाम् ॥
अत्राप्यसामर्थ्ययुक्तः कराग्रावस्थितांस्तिलान् ।
प्रणिपत्य द्विजाग्र्याय कस्मैचिद्भूप दास्यति ॥
तिलैः सप्ताष्टभिर्वापि समवेतांस्तिलाञ्जलीन् ।
भक्तिनम्रः समुद्दिश्य भुव्यस्माकं प्रदास्यति ॥
यतः कुतश्चित्संप्राप्य गोभ्यो वापि गवाह्निकम् ।
अभावे प्रीणयन्नस्माञ्छ्रद्धायुक्तः प्रदास्यति ॥
सर्वाभावे वनं गत्वा कक्षमूलप्रदर्शकः ।
सूर्यादिलोकपालानामिदमुच्चैः पठिष्यति ॥
न मेऽस्ति वित्तं न धनं न चान्य—
च्छ्राद्धोपयोग्यं स्वपितॄन्नतोऽस्मि ।
तृप्यन्तु भक्त्या पितरो मयैतौ
कृतौ भुजौ वर्त्मनि मारुतस्य" ॥ इति ।

भोजयिष्यतीत्यादिप्रार्थना पितॄणाम्। तस्मात्सत्यप्यमावास्यायाः कृष्णपक्षाविनाभावे कृष्णपक्षश्राद्धाद्भिन्नमेव तच्छ्राद्धम्। एवमष्टकाश्राद्धमपि।

## अष्टकाश्राद्धविवेचनम्।

(१) अष्टकाशब्दश्च यद्यपि सूत्रस्मृतिपुराणेषु कर्मणि कालविशेषे च प्रयुक्तो दृश्यते तथापि "अष्टकाः पितृदेवत्यः" इति व्याकरणादष्टमीष्वष्टका इत्याद्युत्पत्तिविध्यालोचनया च कर्मण्येव शक्तः। काले तु तत्सम्बन्धाल्लाक्षणिक एव तत्रापि सत्यपि प्रचुरप्रयोगे। अत एवैकवचनं समुच्चितकालानुरोधेनावृत्तावप्याग्नेयवत्कर्मण एकत्वात्।

---

(१)—अष्टकाकर्म वैदिकेषु प्रसिद्धम्। अत्राष्टकाशब्दः कर्मवचनोऽपि कालोपलक्षकः। यथा वार्त्रघ्नी पौर्णमासी वृधन्वती अमावास्येत्यत्र कर्माभिधायकौ पौर्णमास्यामावास्याशब्दौ कालस्याप्युपलक्षकौ। अन्यथा आग्रहायण्या ऊर्ध्वं तिस्रोऽष्टका इत्यनेन प्रतिपद्येवाष्टकाकर्मप्राप्तिः स्यात्। तस्मादष्टकाशब्देन अष्टम्युपलक्ष्यते। तथा च श्रुतिः—"द्वादश पौर्णमास्यो द्वादशाष्टका द्वादशामावास्याः" इति। आश्वलायनस्मृतिश्च — "हेमन्तशिशिरयोश्चतुर्णामपरपक्षाणामष्टमीष्वष्टकाः" इति। तत्राग्रहायण्या ऊर्ध्वमिन्द्रदैवत्या प्रथमाष्टकापूपचरुभिः कर्तव्या। पौष्या ऊर्ध्वं वैश्वदेवी मांसैः कर्तव्या। लोकविद्विष्टत्वान्मांसं हेयमिति धर्मनिबन्धकाराः। प्राजापत्या तृतीयाष्टका माघ्या ऊर्ध्वं कालशाकेन वास्तूकेन वा निवर्त्तनीया। प्रौष्ठपद्या ऊर्ध्वं चतुर्थी पितृदैवत्या शाकाष्टका।

नीलकण्ठेन श्राद्धमयूखे पञ्चाष्टका उक्ताः। ता यथा "हेमन्तशिशिरयोश्चतुर्णामपरपक्षाणामष्टमीष्वष्टकाः" इत्याश्वलायनोक्ताश्चतस्रः। भाद्रकृष्णाष्टमी च पञ्चम्यष्टका। तथा च पाद्मे "वसुनामा पिता स्वकन्यां शशापानुजग्राह च साष्टकाख्येनोत्पन्ना" इत्युक्तेः।

त्वाष्टकानामधेयमाश्वलायनादीनां होमश्राद्धरूपकर्मद्वयस्य कात्यायनादीनां होममात्रस्यैव । योगीश्वरवचने तु "श्राद्धकालाः" इत्युक्तेः कालपर एव । स च कालोऽमावास्यान्तमार्गशीर्षादिमासचतुष्टयभाद्रपदकृष्णाष्टमीरूपः । भाद्रपदाष्टमी कर्मशब्दस्याश्वलायनव्यतिरिक्तैरष्टकाशब्दप्रयोगात् । "प्रौष्ठपद्यष्टका भूयः पितृलोके भविष्यसि" इति पुराणाच्च । आश्वलायनीयानामपि प्रौष्ठपद्यां कर्म

"प्रौष्ठपद्यष्टका भूयः पितृलोके भविष्यति ।
आयुरारोग्यदा नित्यं सर्वकामफलप्रदा" ॥ इति ।

श्राद्धक्रियाकौमुद्यां गोविन्दानन्देन तु तिस्रोऽष्टका एव नित्या चतुर्थी तु काम्येति प्रतिपादितम् ( पृ० २५३ ) । यथा—"तिस्रोऽष्टकाः" इत्यष्टकान्तरस्य नित्यत्वव्युदासार्थम् । संख्याया न्यूनत्वाधिकत्वव्यवच्छेदात् । तथा च वायुपुराणे—

"पित्र्यदानाय मूले स्युरष्टकास्तिस्र एव च ।
कृष्णपक्षे वरिष्ठा हि पूर्वा चैन्द्री विभाव्यते ॥
प्राजापत्या द्वितीया स्यात्तृतीया वैश्वदेविकी ।
आद्यापूपैः सदा कार्या मांसैः कार्या सदा परा ॥
शाकैस्तृतीया कर्तव्या एष द्रव्यगतो विधिः ।
अन्वष्टका पितॄणां तु नित्यमेव विधीयते ॥
या चाप्यन्या चतुर्थी स्यात्तां च कुर्याद्विशेषतः ।
आसु श्राद्धं द्विजः कुर्यात्सर्वस्वेनापि नित्यशः" ॥

'अत्रापि तिस्र एवेत्येवकारात्तिसृणामेव नित्यत्वम् । अत एवासु श्राद्धमित्यर्थेन तिसृणां नित्यत्वं प्रतिपाद्य क्षिप्रं प्राप्नोतीत्यर्थेन चतुर्थ्याः काम्यत्वं क्रमेण प्रतिपादितम् । सा च वर्षासु कर्तव्या । 'वर्षास्वमेध्यशाकैश्च चतुर्थ्यामेव सर्वदा' इति वचनात्" इति । अन्वष्टका अष्टम्या उत्तरेद्युर्भवन्ति । अन्वष्टका अष्टका अनु पश्चाद्भवन्तीत्यन्वष्टकाः ।

तादृशमेव। एतेन माघ्या वर्षं प्रौष्ठपद्या अपरपक्षे कृत्स्नातिदेशादष्टकाशब्दः परं तत्र नास्ति माघ्या वर्षशब्देन व्यवहारात्। अनुष्ठानं परं शाखाभेदेन व्यवस्थितम्। यथाश्वलायनानां "हेमन्तशिशिरयोश्चतुर्णामपरपक्षाणामष्टमीष्वष्टकाः" इति। एतेन "माघ्या वर्षम्" इति च सूत्रकारवचनाच्छक्तस्य पञ्चसु। एकस्यां वेति पक्षाश्रयणे द्वयोः। प्रौष्ठपदीर्व्यतिरिक्ताश्चतस्रोऽष्टका गोभिलोऽप्याह — "चतुरष्टको हेमन्तस्ताः सर्वाः समांसाश्चिकीर्षेदिति कौत्सः" इति। हेमन्त इति ऋतुसम्वत्सराभिप्रायेण शिशिरस्यापि संग्रहः। केषांचिद्दर्शान्तफाल्गुनाष्टमीत्यागेन तादृशभाद्रपदाष्टमीसंग्रहेण चतस्रः। तथा च ब्रह्मपुराणे—

"ऐन्द्र्यां तु प्रथमायां च शाकैः संतर्पयेत्पितॄन्।
प्राजापत्यां द्वितीयायां मांसैः शुद्धैश्च तर्पयेत्॥
वैश्वदेव्यां तृतीयायामपूपैश्च यथाक्रमम्।
वर्षासु मेध्यशाकश्च चतुर्थ्यामेव सर्वदा"॥ इति।

अत्र यद्यपि मांसविशेषोपादानं नास्ति। तथा वायुपुराणेऽपि—

"पित्र्यदानाय मूले स्युरष्टकास्तिस्र एव च।
कृष्णपक्षे वरिष्ठा हि पूर्वा चैन्द्री विभाव्यते॥
प्राजापत्या द्वितीया स्यात्तृतीया वैश्वदेविकी।
आद्यापूपैः सदा कार्या मांसैरन्या भवेत्तथा॥
शाकैः कार्या तृतीया स्यादेष द्रव्यगतो विधिः।
या चाप्यन्या चतुर्थी स्यात्तां च कुर्याद्विशेषतः"॥ इति।

तथापि "पौषे कृष्णाष्टकायां तु शाकैः संतर्पयेत्पितॄन्" इति ब्रह्मपुराण एव शाकाष्टकात्वेनोक्तायाः प्रथमायाः पौषमासीयत्वेनाभिधानात्—

"शाकं तु फाल्गुनाष्टम्यां स्वयं पत्न्यपि वा पचेत् ।
वास्तुशाकादिहोमश्च कार्योऽपूपाष्टकावृता" ॥

इति छन्दोगपरिशिष्टे च वायुपुराणे शाकाष्टकात्वेनोक्ताया-स्तृतीयायाः फाल्गुनमासीयत्वेनाभिधानात्,

"अमावास्याष्टकास्तिस्रः पौषमासादिषु त्रिषु ।
तिस्रश्चान्वष्टकाः पुण्या माघी पञ्चदशी तथा" ॥

इति कूर्मपुराणाच्च पौषमाघफाल्गुनगता एव तिस्रः; चतुर्थी तु वर्षर्तुगतत्वेनाभिधानाद्भाद्रपदगतैव । पौषादित्रयं च पौर्णमास्यन्त-पक्षेण । "आग्रहायण्यामतीतायां कृष्णास्तिस्रोऽष्टकास्तथा" इति, "आग्र-हायण्या ऊर्ध्वं तिस्रोऽष्टकाः" इति च विष्णुधर्मोत्तरादिवचनात् ।

यत्तु हेमाद्रिणा वायुपुराणे मासविशेषानुपादानात्तिस्रस्ता यदि "अग्रहायण्या ऊर्ध्वम्" इति वचनाद्दर्शान्तमार्गशीर्षादिमासत्रयगता एव तदा "या चाप्यन्या चतुर्थी स्यात्"इति फाल्गुनकृष्णाष्टम्या आश्वलायनवचनात् "पौषमासादिषु त्रिषु"इत्युक्तत्वात्, पौषादित्रय-मपि दर्शान्तमेवाभ्युपगतं प्रतीयते ।

मदनरत्नेऽपि "अग्रहायण्या ऊर्ध्वं तिस्रः" इति पक्षे फाल्गुनीवर्जनं "पौषमासादिषु त्रिषु"इति पक्षे मार्गशीर्षीवर्जनम् । चतुर्थी तु व्यवहिता प्रौष्ठपद्येवेत्यव्यवहितत्र्यष्टकापक्षे पक्षद्वयाभिधानात्तथैव प्रतीयते ।

तदाग्रहायण्यूर्ध्ववचनस्य पौषादित्रयवचनस्य च कृष्णादि-मानग्रहणेनैकपक्षप्रतिपादकत्वसंभवे विकल्पमूलभेदकल्पनापादक-भिन्नार्थत्वस्यासंभवादयुक्तम् । मार्गशीर्षादित्रिकगतत्र्यष्टकापक्षे फाल्गुनकृष्णाष्टमी चतुर्थीत्युक्तिस्तु हेमाद्रेरत्यन्तायुक्तैव । तथा सति

हि चतसृणामप्यव्यवधानादाश्वलायनगोभिलीयकौत्समतोक्तिवदादावेव चतस्र इत्युच्येत किमिति तिस्रश्चतुर्थी च पृथक्पृथगुच्येरन्। अष्टकापक्षेऽपि हि प्रौष्ठपदीं गृहीत्वा सम्वत्सरश्चतुरष्टक एव। चतुरष्टकत्र्यष्टकपक्षभेदस्तु गोभिलोक्तो हेमन्ताभिप्रायः। "त्र्यष्टकः" इत्युत्तरसूत्रेऽपि हेमन्तपदानुषङ्गात्। भाद्रपदीग्रहणे तु व्यवधानाद्धेमन्तानन्तर्गतत्वाच्च पृथक्चतुर्थ्युक्तिः संगच्छते। चतुर्थीशब्दाच्च ब्रह्मपुराणे चतुर्थीशब्देनैवोक्तायाः प्रौष्ठपद्या एव प्रत्यभिज्ञा। तस्माद्वायुपुराणेऽपि चतुर्थी भाद्रपदगतैव। सापि चावश्यक्येव त्र्यष्टकापक्षेऽपि। हेमन्तः परं त्र्यष्टकः। अत एव भाद्रपदाष्टकाया अप्यावश्यकत्वे गोभिलस्य स्वमतत्वेन त्र्यष्टकापक्षोक्तिर्विरुध्येतेति शूलपाणेः शङ्का श्राद्धयागविषयत्वेन तयोरविरोधाभिधानं च सर्वमेवायुक्तम्। आश्वलायनादिभिस्तत्र होमस्याप्यभिधानाच्च। शाकादिद्रव्यभेद इन्द्रादिदेवताभेदश्चाश्वलायनव्यतिरिक्तविषयः। तेषां तु पञ्चस्वपि देवतानां द्रव्याणां चाभेद एव। शाकादिद्रव्यव्यवस्था च प्राधान्याभिप्राया। तीर्थयात्राङ्गश्राद्धे घृतवत्। "मुन्यन्नं ब्राह्मणस्योक्तम्" इत्यादिवच्च। न तु निरपेक्षत्वाभिप्राया। शाकादीनां केवलानां भोज्यत्वाप्रसिद्धेः। ननु देवतावद्धोमविषयं नैरपेक्ष्यमेव शाकादीनां भवतु। न। "पितॄन् संतर्पयेत्" इति विरोधात्।

अष्टकाग्रहणं च योगीश्वरवचने तत्पूर्वसप्तमीनां तदुत्तरनवमीनां चोपलक्षणम्। "पूर्वेद्युः पितृभ्यो दद्यादपरेद्युरन्वष्टक्यम्" इति चाश्वलायनवचनात्।

अन्वष्टका अन्यत्राप्युक्ताः। "अमावास्या तिस्रोऽष्टकास्तिस्रोन्वष्टकाः" इति विष्णुस्मृतौ। अमावास्येत्यादि कूर्मपुराणे च। एवं च शुक्लादिमार्गशीर्षादिचतुष्टयभाद्रपदकृष्णाष्टमीनां तत्पूर्वोत्तरसप्तमीनवमीनां च श्राद्धकालत्वे सत्यपि यत्सर्वेषां तत्र तदकरणे यथाश्वलायनव्यतिरिक्तानां फाल्गुनाष्टम्यां सर्वासु च सप्तमीषु, तत्—

"स्वशाखाश्रयमुत्सृज्य परशाखाश्रयं तु यः ।
कर्त्तुमिच्छति दुर्मेधा मोघं तत्तस्य चेष्टितम्" ॥

इत्यादिवचननिबद्धयाज्ञिकसंमतप्रमाणपरिग्रहव्यवस्था । व्यवस्थितानुष्ठानवशात् ।

## वृद्धिश्राद्धविवेचनम् ।

वृद्धिः पुत्रजन्म । अग्न्याधानसोमयागादीनि श्रौतानि महादानतडागाद्युत्सर्गदेवप्रतिष्ठादीनि पौराणानि स्त्रासंस्कारान्यसंस्कारादीनि सौत्राणि ग्रहशान्तिविनायकस्नपनादीनि स्मार्तानि कर्माणि च । तथा च ब्रह्माण्डपुराणे—

"कर्मण्यथाभ्युदयिके माङ्गल्ये चातिशोभने ।
जन्मन्यथोपनयने विवाहे पुत्रकस्य च ॥
पितॄन्नान्दीमुखान्नाम तर्पयेद्विधिपूर्वकम्" इति ।

आभ्युदयिकं स्वाभ्युदयार्थं कर्म राज्याभिषेकनवग्रहमखमहादानादि । माङ्गल्यं गर्भाधानसीमन्तोन्नयनादि । अतिशोभन इति-तद्विशेषणेन ब्राह्मण्यश्च वृद्धा जीवत्पत्यो जीवत्प्रजा यद्यदुपदिशेयुस्तत्तत्कुर्युः "अथ खलूच्चावचा जनपदधर्मा ग्रामधर्मांश्च तान्विवाहे प्रतीयात्"इत्यादिसूत्रानुमतस्याचारप्राप्तस्य फलादिभिर्गर्भिणीकुक्षिभरणादेर्विवाहाद्यङ्गहरिद्रावन्दनादेश्च व्यावृत्तिः ।

अत एवोक्तं मत्स्यपुराणे—"नानिष्ट्वा तु पितॄञ्छ्राद्धे कर्म वैदिकमाचरेत्"इति । कर्मप्रदीपेऽपि—

"अनिष्ट्वा तु पितॄञ्छ्राद्धे न कुर्यात्कर्म वैदिकम् ।
तत्रापि मातरः पूर्वं पूजनीयाः प्रयत्नतः ॥

आयुष्याणि च शान्त्यर्थं जप्त्वा तत्र समाहितः।
षड्भ्यः पितृभ्यस्तदनु श्राद्धदानमुपक्रमेत्" ॥ इति।

विष्णुपुराणेऽपि—

"कन्यापुत्रविवाहेषु प्रवेशे चैव वेश्मनः।
नामकर्मणि बालानां चूडाकर्मादिके तथा ॥
सीमन्तोन्नयने चैव पुत्रादिमुखदर्शने।
नान्दीमुखं पितृगणं पूजयेत्प्रयतो गृही" ॥ इति।

पुत्रादिमुखदर्शने इत्यनेन तद्योग्यतासंपादकं पुत्रजन्ममात्रं गृह्यते न तु जातकर्म। पूर्ववचनेन वैदिककर्ममात्रे प्राप्तस्य नान्दीमुखश्राद्धस्य केषुचित्कर्मसु पर्युदासार्थे—

"नाष्टकासु भवेच्छ्राद्धं न श्राद्धे श्राद्धमिष्यते।
न सोष्यन्तीजातकर्मप्रोषितागतकर्मसु" ॥

इति परिशिष्टवचने जातकर्मणि तन्निषेधात्। अतश्च ग्रहणवन्नैमित्तिकश्राद्धं पुत्रजन्मन्यपि भवत्येव न तु कर्माङ्गम्। अत एव—

"निषेककाले सोमे च सीमन्तोन्नयने तथा।
ज्ञेयं पुंसवने श्राद्धं कर्माङ्गं वृद्धिवत्कृतम्" ॥

इति पारस्करवचने कर्माङ्गश्राद्धविषयत्वेन जातकर्म नोपात्तम्।

किन्तु वृद्धाविवेति पुत्रजन्मनिमित्तं श्राद्धं दृष्टान्तत्वेन पृथगेवोपात्तम्। अत एव च—

"यज्ञोद्वाहप्रतिष्ठासु मेखलाबन्धमोक्षयोः।
पुत्रजन्मवृषोत्सर्गे नान्दीश्राद्धं समाचरेत्" ॥

इति जाबालिवचनेऽपि पुत्रजन्मैव गृहीतम् । तेन जातकर्मणि श्राद्धपर्युदासशङ्कायोगविषयः । तत्परिशिष्टगतत्वात् । इतरेषां तु तत्रापि तद्भवत्येव । जन्मनीत्यादि केषांचिदुक्तिर्निरस्ता वेदितव्या । वृषोत्सर्गश्च काम्यः । प्रेतत्वनिवृत्त्यर्थे "न श्राद्धं" इति तन्निषेधात् । श्राद्धशब्देन प्रमीतगतफलार्थकर्ममात्रग्रहणात् । अन्यथा पिण्ड-पितृयज्ञे तत्प्रसङ्गात् । अष्टकाशब्देन च गोभिलादिसूत्रोक्तहोम-रूपाष्टकाकर्मग्रहणात्तत्र पृथक्तन्निषेधः ।

अत्र च "नानिष्ट्वा" इति सामान्यवचनादेव विवाहादिष्वपि श्राद्धसिद्धौ तेषु पुनर्वचनमुपसंहारार्थम् । तेन विशेषवचनोपात्तेष्वेव कर्मसु वृद्धिश्राद्धं भवति नान्यत्रेति केचित् ।

तदयुक्तं सामान्यवचनानर्थक्यापत्तेः । यत्र हि शाखान्तरगत-त्वेन वा द्वारविशेषसम्बन्धप्रमाणेन वा सामान्यशास्त्रमप्यर्थवद्भवति तत्रैवोपसंहारो भवति "पुरोडाशं चतुर्धा करोति" "आग्नेयं चतुर्धा-करोति" इत्यादौ प्रकरणानारभ्याधीतसामदश्यवाक्यादौ च । न चेह तथा संभवति । स्मृतिपुराणादीनां सर्वेषां सर्वान् प्रति प्रमाणत्वेन शाखान्तरन्यायाभावात्साक्षात्कर्माङ्गत्वेन तस्य चोभयत्रापि वाक्यीयत्वेन सामदश्यन्यायाभावाच्च । तेन केषुचित्पुनर्वचनं सामान्यवचनस्य प्रपञ्चमात्रं तत्रावश्यकत्वार्थं वा । अत एवाग्निहोत्र-होमवैश्वदेवादिषु केषांचिद्वृद्धिश्राद्धानुष्ठानं केषांचिन्नानुष्ठानम् । येषामनुष्ठानं तद्विषयमेवेदं—

"असकृद्यानि कर्माणि क्रियन्ते कर्मकारिभिः ।
प्रतिप्रयोगं नैताः स्युर्मातरः श्राद्धमेव च" ॥

इत्युक्त्वा तादृशकर्मपरिगणनार्थं परिशिष्टवचनम्—

"आधाने होमयोश्चैव वैश्वदेवे तथैव च ।
बलिकर्मणि दर्शे च पौर्णमासे तथैव च ॥

नवयज्ञे च यज्ञज्ञा वदन्त्येवं मनीषिणः ।
एकमेव भवेच्छ्राद्धमेतेषु न पृथक् पृथक्" ॥ इति ।

वैश्वदेवादिषु श्राद्धावृत्तिनिषेधादप्युपसंहारो न युक्तः ।

उपसंहारे तत्र श्राद्धस्यैवाप्रसक्तेः ।

## कृष्णपक्षीयश्राद्धविवेचनम् ।

कृष्णपक्षः सर्वोऽपि । कात्यायनोऽपि—"अपरपक्षे श्राद्धं कुर्वीतोर्ध्वं वा चतुर्थ्याः"इति । तच्च सकृदेव न तु प्रतितिथ्यनुवर्त्तते "सकृत्कृते कृतः शास्त्रार्थः" इति न्यायात् । वसन्ते ज्योतिष्टोमवत् । "अश्वयुक्कृष्णपक्षे तु श्राद्धं कुर्याद्दिने दिने" इतिवच्च वीप्साया अश्रवणात् ।

यच्च "पञ्चमीप्रभृति वापरपक्षस्य यथाश्रद्धं सर्वस्मिन्वा" इति गौतमसूत्रम् । तत्रापि न सर्वस्मिन्नित्यनेन समुच्चितासु सर्वतिथिषु श्राद्धं विधीयते येनावृत्तिः स्यात् । किन्तु पञ्चम्याः पूर्वतिथीनामपि श्राद्धकालत्वम् । तेन कातीयसमानार्थमेव तदपि । प्रपञ्चितं चैतत्प्रसङ्गात्प्राक् । "यदहः संपद्येत" इति तु "तदहर्ब्राह्मणानामन्त्र्य" इत्येतदेकवाक्यतया भाष्यकारैर्व्याख्यातं सकृत्करणस्यैव द्योतकम् ।

केचित्तु "यदहः संपद्येत" इत्येतावतो विच्छिन्नस्यैकाहपक्षविधायकत्वमङ्गीकृत्य पूर्वसूत्रयोः प्रतिपत्पञ्चमीप्रभृतिसमुच्चितसर्वतिथिविधायकत्वेनावृत्तिपक्षमपि शक्तविषयं मन्यन्ते ।

तदपि यत्तच्छब्दयोः परस्परसापेक्षत्वेनैकवाक्यताया एव स्पष्टं प्रतीतेर्वा शब्दाध्याहारापत्तेश्चायुक्तम् । अत एव "स्योनं ते" मन्त्रे यदि पूर्वार्द्धर्चे यच्छब्दः स्यादेकवाक्यतैव स्यादित्युक्तं तन्त्रे ।

यदपि (१) चतुर्दशकामाननुक्रम्य—

"... सर्वकामानाप्नोति श्राद्धदः सदा ।
प्रतिपत्प्रभृतिष्वेकां वर्जयित्वा चतुर्दशीम्" ॥

इति योगीश्वरवचनं तद्यदि कृष्णपक्षनिमित्तकश्राद्धाश्रिततत्तत्तिथिरूपगुणानां फलसम्बन्धविधायकं तदा काममस्याप्येकस्मिन् कृष्णपक्षे एकतिथावेव श्राद्धम् । गुणफलानुरोधेनाश्रयानावृत्तेः । अयं च पक्ष आपस्तम्बधर्मादिषु संभवति तत्रापरपक्षश्राद्धं प्रक्रम्य तत्तत्तिथितत्तत्कामानां श्रवणात् ।

याज्ञवल्कीये तु कृष्णपक्षश्राद्धानुपक्रमात्तस्याश्रयत्वेनालाभात्तत्तत्फलार्थतया तत्तत्तिथिषु श्राद्धान्येव विशिष्टविधिरूपेण विधीयन्ते । तानि च परस्परं कृष्णपक्षनिमित्तान्नित्यश्राद्धाच्च भिद्यन्त इत्येकस्मिन्नपि कृष्णपक्षे यावत्कामं तेषामनुष्ठानं भवतु । येन केनापि च नित्यस्य प्रसङ्गात्सिद्धिः समानप्रकारकत्वे । न तु कृष्णपक्षसामान्ये तन्निमित्तस्य नित्यस्य श्राद्धस्यावृत्तौ किञ्चिदपि प्रमाणमिति प्रतिपदादिषु पञ्चम्यादिषु वामावास्यां तासु चतुर्दशीवर्जितासु तिथिषु मध्ये यस्यां कस्यांचित्तिथावमावास्यायामेव वा सकृदेव कृष्णपक्षसामान्यप्रयुक्तं श्राद्धम् ।

यद्यपि याज्ञवल्कीयं चतुर्दशीवर्जनं काम्यश्राद्धविषयं तथापि—

"नभस्यस्यापरे पक्षे श्राद्धं कार्यं दिने दिने ।
नैव नन्दादिवर्ज्यं स्यान्नैव वर्ज्या चतुर्दशी" ॥

---

(१) "कन्यां कन्यावेदिनश्च पशून्वै सत्सुतानपि ।
द्यूतं कृषिं वणिज्यां च द्विशफैकशफांस्तथा ॥ २६२ ॥
ब्रह्मवर्चस्विनः पुत्रान्स्वर्णरूप्ये सकुप्यके ।
ज्ञातिश्रैष्ठ्यं सर्वकामानाप्नोति श्राद्धदः सदा" ॥ २६३ ॥
इति याज्ञवल्क्यस्मृत्याचाराध्याये चतुर्दशकामाः प्रतिपादिताः ।

इति कार्ष्णाजिनिवचने भाद्रपदापरपक्षे चतुर्दशीवर्जननिषेधात्। अन्यत्र तद्वर्जनावगमात्।

"कृष्णपक्षे दशम्यादौ वर्जयित्वा चतुर्दशीम्।
श्राद्धे प्रशस्तास्तिथयो यथैता न तथेतराः" ॥

इति मनुवचने च नित्य एव कृष्णपक्षश्राद्धे दशम्यादिपक्षे चतुर्दशीवर्जनोक्तेः प्रतिपदादिपञ्चम्यादिपक्षयोरपि कृष्णपक्षसामान्ये तद्वर्जनम्।

अत एव च तत्र नन्दादिकमपि वर्ज्यम्। तथा च नारदसंहितायाम्—

"न नन्दा सुभृगोर्वारे रोहिण्यां च त्रिजन्मसु।
रेवत्यां च मघायां च कुर्यादापरपक्षिकम्" ॥ इति।

नन्दाः प्रतिपत्षष्ठ्येकादश्यः। त्रिजन्मानि। आद्यदशमैकोनविंशानि नक्षत्राणि। गार्ग्योऽपि—

"नन्दायां भार्गवदिने त्रयोदश्यां त्रिजन्मसु।
एषु श्राद्धं न कुर्वीत गृही पुत्रधनक्षयात्" ॥ इति।

वृद्धगार्ग्योऽपि—

"प्राजापत्ये च पौष्णे च पित्रर्क्षे भार्गवे तथा।
यस्तु श्राद्धं प्रकुर्वीत तस्य पुत्रो विनश्यति" ॥ इति।

एवमन्येऽपि तद्विषया निषेधा प्रयोगपारिजातादिषु द्रष्टव्याः।

"भानौ भौमे त्रयोदश्यां नन्दाभृगुमघासु च।
पिण्डदानं मृदा स्नानं न कुर्यात्तिलतर्पणम्" ॥

इति स्मृत्यन्तरेऽपि पिण्डदानग्रहणं श्राद्धोपलक्षणमेवैकमूलत्वाय। ये त्वन्ये पिण्डदानगोचराः कालविशेषनिषेधास्ते प्रेतकृत्यविषया वक्ष्यन्ते। इदं च चतुर्दशीनन्दादिवर्जनं भाद्रपदकृष्णपक्षेऽपि—

"आषाढ्याः पञ्चमे पक्षे कन्यासंस्थे दिवाकरे।
यो वै श्राद्धं नरः कुर्यादेकस्मिन्नपि वासरे॥
तस्य सम्वत्सरं यावत्तृप्ताः स्युः पितरो ध्रुवम्"।

इति नागरखण्डोक्ते एकदिनपक्षे भवत्येव। तत्र तदप्रवृत्तौ कारणाभावात्। पक्षान्तरेषु तु नन्दादिवर्जनं न भवति। प्रतिपदादिपक्षयोः चतुर्दशीवर्जनमपि। तिथियोगनक्षत्रविशेषे निषेधप्रयोजकान्तरसत्त्वेऽपि सकृत्पक्षे महालयश्राद्धं भवत्येवेत्युक्तं प्रयोगपारिजातोदाहृते संग्रहवचने—

"अमापाते भरण्यां च द्वादश्यां पक्षमध्यके।
तिथिं वारं च नक्षत्रं योगं च न विचारयेत्"॥ इति।

मृततिथिसामानजातीयायामेव चतुर्दशीभिन्नायां तत्पक्षान्तर्गततिथौ निषेधप्रयोजकयुक्तायामपि सकृत्पक्षे यावत्संभवं प्रायः सकलदेशीयाः शिष्टा महालयश्राद्धं कुर्वन्ति।

एकदिनपक्षातिरिक्ताश्च पञ्च तत्र पक्षाः कृष्णप्रतिपदादिशुक्लप्रतिपदन्तमिति षोडशतिथिपक्ष एकः, प्रतिपदादिदर्शान्तमिति पञ्चदशतिथिपक्षोऽन्यः, पञ्चम्याद्यष्टम्यादिदशम्यादिचतुर्दशीवर्जं दर्शान्तमित्यपरे दश सप्त पञ्च तिथिपक्षाः।

तत्र प्रथमः पक्षः शाट्यायनिना दर्शितः—

"नभस्यस्यापरे पक्षे तिथिषोडशकस्तु यः।
कन्यागतान्वितश्चेत्स्यात्स कालः श्राद्धकर्मणि"॥ इति।

चेदित्यसंदिग्धे संदिग्धवचनं "शास्त्राणि चेत्प्रमाणं स्युः" इतिवत्। न ह्यत्र सकलस्य पक्षस्य कन्यागतान्वितता विवक्षिता। वाक्यभेदप्रसङ्गात्। पक्षविशेषगते तिथिषोडशके श्राद्धं कुर्यात्तच्च तदा यदि

स सकलः कन्यागतान्वितो भवतीति । न चतादृश एव तिथिषोडशके श्राद्धं विधीयत इति वाच्यम् । प्रतिसाम्वत्सरिकत्वव्याघातापत्तेः । अत एव शारदनवरात्रान्तरसप्तम्यादितिथिषु मूलादियोगे प्राशस्त्यमात्रं न तु स एवादरणीय इत्युक्तम् ।

अत एव वृद्धमनुनाप्युक्तम्—

"मध्ये वा यदि वाप्यन्ते यत्र कन्यां रविर्व्रजेत् ।
स पक्षः सकलः पूज्यः श्राद्धं तत्र विधीयते" ॥ इति ।

तेन यदा कदाचित्कन्यागतान्वयस्तस्यापेक्षितः स च नित्यप्राप्त एव । कन्यागते सूर्ये समाप्तिं विना तस्य भाद्रपदत्वाभावात् ।

"मेषादिस्थे सवितरि यो यो मासः प्रपूर्यते चान्द्रः ।
चैत्राद्यः स ज्ञेयः पूर्तिद्वित्वेऽधिमासोऽन्त्यः" ॥

इति चैत्रादिमासविशेषाणां लक्षणस्य ज्योतिःशास्त्रेऽभिधानात् ।

यत्त्वादित्यपुराणे—

"आषाढीमवधिं कृत्वा यः स्यात्पक्षस्तु पञ्चमः ।
श्राद्धं तत्र प्रकुर्वीत कन्यां गच्छतु वा न वा" ॥ इति ।

एवं व्याख्येयम् । सकलस्य पक्षस्य कन्यायोगो नापेक्षित इत्यभिप्रायः । पञ्चमत्वं चान्तरामलमासानायात इति मलमासनिर्णये वक्ष्यते । तिथिषोडशकश्चामावास्योत्तरां प्रतिपदमादायेति देवलेनैवोक्तम् ।

"अहःषोडशकं यत्तु शुक्लप्रतिपदा सह ।
चन्द्रक्षयाविशेषेण सापि दर्शात्मिका स्मृता" ॥ इति ।

श्रुतिसूत्रेषु च पौर्णमास्युत्तरा प्रतिपदुत्तरपौर्णमासीत्वेनामावास्योत्तरा चोत्तरामावास्यात्वेन बहुशूक्ता । तथा च तैः-- "अमावास्यायां

वा यजेत" इत्याश्वलायनसूत्रे पौर्णमास्यमावास्याशब्दाभ्यां प्रतिपदपि गृह्यते इति सिद्धान्तिना व्याख्यातम्। "स पक्षः सकलः पूज्यः श्राद्धषोडशकं प्रति" इति वचनान्तरेऽपि प्रतिपदोऽप्यमावास्यात्वेनैकीकारमभिप्रेत्यैव पक्षपदोपादानम्। अमावास्यामात्रग्रहणे षोडशश्राद्धासंभवात्। तेनात्र षोडशतिथिपक्षाश्रयणे एकेनाधिकारिणा कृष्णप्रतिपत्प्रभृतिशुक्लप्रतिपत्पर्यन्तमेकरूपं श्राद्धं कर्त्तव्यम्। अमावास्योत्तरप्रतिपत्संग्रहपक्षेण तिथीनां षोडशत्वमुपपादयतो हेमाद्रेरपीदमेवाभिमतम्। एतद्वचनोपक्रमेव संख्यया कर्मभेदमभ्युपगच्छता तेनैतस्योत्पत्तिविधित्वाङ्गीकारात्तत्र चाधिकारिभेददेवताभेदानुपादाने तदैक्यस्यैव प्रतीतेः।

तेन जीवत्पितृकदौहित्राधिकारिणा क्रियमाणं मातामहदेवत्यं श्राद्धमभिप्रेत्यैतत्पक्षाभिधानं हेमाद्रेरिति पामराणां भ्रम एव। तथात्वे च दौहित्रप्रतिपच्छ्राद्धमूलप्रमाणान्वेषणक्लेशस्तस्य नोपपद्येत।

यत्तु हेमाद्रिणा तिथिषोडशत्वोपपत्तयेऽन्यत्प्रकारद्वयमुक्तं तिथिवृद्धिमभिप्रेत्य पूर्वां पौर्णमासीं गृहीत्वा वेति। तत्र नाद्यो नित्यवच्छ्रवणविरोधात्। न द्वितीयोऽपरपक्षश्रुतिविरोधात्, तिथिपदेनाहोरात्रलक्षणापत्तेश्च। प्रकरणान्तरोक्तस्याश्रुमुखोपरितननान्दीमुखसंज्ञकपित्रादिदेवत्यस्य वार्षिकश्राद्धस्य माघ्यादिश्राद्धवदत्राविपरिवृत्तेश्च। तेन वचनस्वरसादुत्तरप्रतिपत्परिग्रहेण पञ्चदशदिनपक्षात् पक्षान्तरमेवेदं महालयापरपक्षश्राद्धं। एवं च सति यदेतस्यामेव प्रतिपदि जीवत्पितृकैः क्रियते पार्वणविधानेन मातामहश्राद्धं तदपि कन्यासंक्रान्त्युपलक्षितैतदपरपक्षनिमित्तकमेव। अत एव जीवत्पितृकैरेव क्रियते। मृतपितृकैर्येन केनापि पक्षेण क्रियमाणेन पितृपार्वणेनैव सहैतस्यापि करणात्।

ननु जीवत्पितृकस्यापरपक्षनिमित्तकं पित्रादिश्राद्धम्—

"दर्शश्राद्धं गयाश्राद्धं श्राद्धं चापरपक्षिकम् ।
न जीवत्पितृकः कुर्यात्तिलैः कृष्णैश्च तर्पणम्" ॥

इति वचनेन निषिध्यते यथा तथा मातामहश्राद्धमपि। वस्तुतस्तु पितृश्राद्धनिषेधे सति प्राप्तिरेव मातामहश्राद्धस्य नास्ति "पितरो यत्र पूज्यन्ते" इति पितृश्राद्धोपजीवनेन तस्य विधानात् ।

न च पितृश्राद्धस्यापि तर्हि कथं निषेधः प्रमीतदेवत्यस्य तस्य जीवति पितरि प्राप्त्यभावादिति वाच्यम् । यतः सत्यं जनकदेवत्यं न प्राप्नोति किन्तु मन्वादिभिः स्मृतिकारैराश्वलायनापस्तम्बादिभिश्च गृह्यकारैर्यद्दर्शश्राद्धमपरपक्षश्राद्धं वा प्रकृत्य श्राद्धधर्मा आम्नातास्तस्य पूर्वनिर्वापादिप्रकारेण करणपक्षो जीवत्पितृकं प्रति सर्वैरुक्तः। कैश्चिदकरणपक्षोऽपि। अतिदेशाच्चेतरश्राद्धेष्वपि तत्पक्षद्वयं प्राप्नोति। तथा च प्रमीतपितामहादिदेवत्यं जीवत्पितृकस्यापि दर्शश्राद्धं करणपक्षे प्राप्नोत्येव ।

तत्र यथा—

"उद्वाहे पुत्रजनने पित्र्येष्ट्यां सौमिके मखे ।
तीर्थे ब्राह्मण आयाते षडेते जीवतः पितुः ॥
वृद्धौ तीर्थे च संन्यस्ते ताते च पतिते सति ।
येभ्य एव पिता दद्यात्तेभ्यो दद्यात्स्वयं सुतः" ॥

इत्यादिवचनैः केषुचिच्छ्राद्धेषु करणपक्षस्तत्र च प्रकारो विशेषो नियम्यते । तथा "दर्शश्राद्धम्"इत्यनेन केषुचित्कथंचिदप्यकरणपक्षः । तेन पित्रादीनां दर्शादौ श्राद्धनिषेधे सति तदुपजीविप्राप्तिकस्य मातामहादिश्राद्धस्याप्राप्तिरेव निषेधो वेति कथं जीवत्पितृकस्य तत्प्राप्तिर्महालयापरपक्षे ।

उच्यते । प्राप्तिस्तावद्दर्शादिषु जीवत्पितृश्राद्धाभावेऽपि पितामहादिश्राद्धसत्त्वात्तदुपजीवनेनैव मातामहश्राद्धस्य वक्तुं शक्यते ।

पितर इति बहुवचनात्। पितुरित्यादिसम्बन्धिपदमात्रप्रक्षेपेण पित्रादिशब्दैरेव पितामहादीनां देवतात्वाच्च। अत एव विष्णुस्मृतौ जीवत्पित्रादिकस्य पितृपार्वणे पूर्वेषां देवतात्वं विधाय तत्सहप्रयोगे मातामहपार्वणेऽपि जीवन्मातामहस्य तत्पित्रादीनां देवतात्वं पूर्वातिदेशेन विहितं मातामहानां चैवमिति। गयायां तु स्वातन्त्र्येणापि सर्वेषां श्राद्धस्य प्राप्तिरस्ति "यन्नाम्ना पातयेत्पिण्डं तं नयेद् ब्रह्म शाश्वतम्" इति। अथ प्राप्तावपि निषेधात्कन्योपलक्षितेऽप्यपरपक्षे तन्निमित्तं मातामहश्राद्धं न प्राप्नोतीत्युच्यते। तदपि न सामान्यतो ह्यापरपक्षिकस्य निषेधः। विशेषतश्च—

"कन्यागते सवितरि पितरो यान्ति वै सुतान्।
शून्या प्रेतपुरी राजन्यावद्वृश्चिकदर्शनम्"॥

इत्याद्यर्थवादोन्नीतो येषां श्राद्धे येऽधिकारिणस्तैस्तेषां कन्यागतोपलक्षितेऽपरपक्षे श्राद्धं कर्त्तव्यमिति विधिः। अत्र हि पितृसुतग्रहणं श्राद्धदेवतातदधिकारिमात्रोपलक्षणम्।

नागरखण्डे—

"न ददाति नरः श्राद्धं पितॄणां चन्द्रसंक्षये।
क्षुत्पिताशापरीताङ्गाः पितरस्तस्य दूषिताः॥

प्रेतपक्षं प्रतीक्षन्ते" इत्युपक्रम्य—

"ततस्तुलागतेऽप्येके सूर्ये वाञ्छन्ति पार्थिव।
श्राद्धं स्ववंशजैर्दत्तं क्षुत्पिपासासमाकुलाः"॥

इति सामान्येनाभिधानात्।

अत एवैतद्वचनबलादेव जीवत्पितृकस्य मातृश्राद्धमपि कन्यागतापरपक्षनिमित्तं स्मृतिरत्नावल्यामुक्तम्। एतावांस्तु

विशेषः। तत्र दर्शोत्तरप्रतिपद्येव मातामहश्राद्धवत्तदुक्तम्। इदानीं तु तस्य नवम्यामनुष्ठानाचार इति। अत एव मृतपितृकैः पितृश्राद्धदिन एव पृथगपृथग्वा मातृतृप्तेरपि संपादितत्वाज्जीवत्पितृकैरेव तत्तृप्त्यर्थं नवम्यां तत्क्रियत इति तस्या अविधवानवमीत्वप्रसिद्धिर्महाराष्ट्रेषु। अत एव चापुत्रपितृव्यज्येष्ठभ्रात्रादीनामपि श्राद्धस्य तत्तन्मृततिथौ जीवत्पितृकैः शिष्टैः कैश्चित्करणं महालयापरपक्षे। तेन सामान्यापरपक्षनिमित्तस्यैव श्राद्धस्य जीवत्पितृकान्प्रति प्रतिषेधात्कल्पोपलक्षितातिप्रशस्तापरपक्षनिमित्तं मातामहादिश्राद्धं तेषामपि प्राप्तोत्येव। तादृशस्य च तस्य दर्शमतिक्रम्यापि करणे बाधकाभावेऽपि यत्तदुत्तरप्रतिपदि करणं तत्केवलं सदाचारात्। नन्वेवं पितामहादीनामप्येतदपरपक्षनिमित्तं श्राद्धं कर्त्तव्यं स्यात्। न स्यात्। "न जीवन्तमतिदद्यात्"इति निषेधात्। वृद्ध्यादिवच्च प्रतिप्रसवाभावात्। एवं च प्रतिपद्यपि क्रियमाणस्य मातामहश्राद्धस्यापरपक्षनिमित्तकत्वाविघातात्तन्निमितकस्य च श्राद्धस्याधिकमासापाते उत्कर्षस्य वक्ष्यमाणत्वाद्दर्शोपजातकन्यासंक्रान्तावधिमासापाते दौहित्रप्रतिपच्छ्राद्धस्य तदतिलङ्घनेनापरपक्षश्राद्धव्यवधानेनैव करणमुचितमिति वक्ष्यते मलमासनिर्णये। यान्यपि सूर्यसिद्धान्ते—

"षडशीत्यां धनुषो भागे द्वाविंशे निमिषस्य च।
मिथुनाष्टादशे भागे कन्यायाश्च चतुर्दशे"॥

इत्युक्त्वा—

"अत ऊर्ध्वं तु कन्याया यान्यहानि तु षोडश।
क्रतुभिस्तानि तुल्यानि पितृभ्यो दत्तमक्षयम्"॥

इति षोडश दिनानि श्राद्धकालत्वेनोक्तानि तानि भवन्तु नाम तथा। "नभस्यस्यापरे पक्षे" इति वचने तु तानि न ग्रहीतुं शक्यन्ते।

अपरपक्षश्रुतिविरोधादेव । न हि तानि कन्यायाः शेषदिनान्यपरपक्ष एव भवन्ति । तिथिश्रुतिविरोधाच्च । तिथिशब्दस्य चान्द्रदिनमात्रवाचित्वेन सौरेऽप्रवृत्तेः । काम्यत्वाच्च तच्छ्राद्धस्य । "पितृभ्यो दत्तमक्षयम्" इति फलश्रवणात् । "कन्यागते सवितरि यान्यहानि तु षोडश" इत्यत्र भवतु तेषां ग्रहणम् । तत्र तिथिविशेषोपलक्षणे कारणाभावात् । ज्योतिषसंवादाच्च । अत्र च वचनान्तरे "श्राद्धषोडशकम्" इत्युक्तावपि न संख्यया श्राद्धानां भेदः । अनुत्पत्तिवाक्यगतत्वात् । वचनस्यैकदेशकन्यासम्बन्धमात्रेण सकलपक्षपूज्यत्वमात्रप्रतिपादनपरत्वात् । "मध्ये वा यदि वाप्यन्तः" इति वृद्धमनुवचनवत् । "श्राद्धषोडशकम्"इति द्वितीयानिमित्तभूतलक्षणार्थकर्मप्रवचनीयप्रतियोगेन श्राद्धानामुद्देश्यत्वप्रतीतेश्च । संभवति च कालविधौ तत्सम्बन्धित्वरूपेणोपादेयानामपि कर्मणां स्वरूपेणोद्देश्यत्वमनुवाद्यत्वं च । न च यदि "ब्राह्मणो यजेत"इत्यादिवत्तत्यागकारणं किंचित् । न चानेकगुणोपादानं हेमाद्र्युक्तं तद्युक्तम् । "आदौ मध्येऽथवाप्यन्ते" इत्येतेषां द्वितीये द्विगुणं तृतीये त्रिगुणमित्यादिवत्स्वरूपेणाविवक्षितत्वात् । एकदेशमात्रविवक्षणात् ।

तेन "नभस्यस्यापरे पक्षे"इति श्राद्धोत्पत्तिविधौ संख्यायुक्ततिथिसमुच्चयवशादाग्नेयवद्यावत्तिथिसिद्धानामभ्यासानामियं संख्या श्राद्धषोडशकमिति ।

न चैवं पक्षस्य पञ्चदशतिथ्यात्मकत्वादनेनैव न्यायेन हेमाद्र्युक्ता सामान्यकृष्णपक्षेऽपि प्रतितिथिश्राद्धावृत्तिरेव स्यान्न तु पूर्वोक्तं सकृदेवानुष्ठानमिति वाच्यम् । पक्षस्य वस्तुतः पञ्चदशतिथिरूपत्वेऽपि तिथीनां स्वरूपेणाङ्गत्वाभावात् । अन्यथा तिथेरपि नानाक्षणसमुदायात्मकत्वेन क्षणानामङ्गत्वापत्तेः । किन्त्वयनर्तुमासादिविशेषवन्महासमुदायरूपस्य पक्षस्यैवायोगान्ययोगव्यावृत्त्याङ्ग-

त्वम् । अत एव सकृत्करणेऽपि तत्र इदं कर्मास्मिन्नयनेऽस्मिन्नृतावस्मिन्मासेऽनुष्ठितमिति बुद्धिः।

महालयापूर्वपक्षे तु पूर्ववाक्ये संख्यावशात् क्वचिद्दिने दिन इति वीप्सावशात्पक्षमित्यादिष्वत्यन्तसंयोगद्वितीयावशात् क्वचित्सकलादिशब्दवशाद्यावत्तिथ्यभ्यासप्रतीतिः। अभ्यासपक्षेऽन्त्यदिने दक्षिणादानमिति यद्धेमाद्रिणोक्तं तेन च यत्सूचितं यावत्समाप्तिपात्रैक्यं तदप्ययुक्तमेव। निमन्त्रणादिविसर्जनान्तस्य श्राद्धप्रयोगस्यैव सायं प्रातर्होमवदावृत्तेः। कालस्य प्रयोगानुबन्धत्वेन तत्समुच्चयबलात्प्रयोगावृत्तेरेवोचिततत्वात्।

सोमयागे तु प्रधानस्वरूपानुबन्धभूतदेवतासमुच्चयवशात्प्रधानस्यैवावृत्तिः। अत एव च यत्र देवतादिसमुच्चयकृता प्रधानमात्रावृत्तिः सोमयागग्रहयज्ञादिषु यत्र चोत्पन्नगतसंख्या कृता सैकादशप्रयाजलक्षहोमकोटिहोमादिषु। तत्र तावदभ्याससमुदायवृत्तिर्विधिप्रमेया जातिः। यत्र तु कालवशात्प्रयोगावृत्तिः सायं प्रातरग्निहोत्रदर्शपौर्णमासिकाग्नेयादिषु तत्र प्रत्येकसमवेता सा। प्रतिनिमित्तावृत्तिस्तथास्या आवृत्तेरिदमेव वैलक्षण्यं यदत्रावृत्तिविशिष्टात्फलमिति। केन च विशेषेण दक्षिणादानमात्रस्यैव सकृत्करणमुच्यते। प्रधानमात्राभ्यासाभ्युपगमे हि आरादुपकारिणां सर्वेषामपि प्रधानपूर्वोत्तरभाविनां तदुचितं पात्रानत्यर्थानां च।

एवं निमन्त्रणादिविसर्जनान्तश्राद्धप्रयोगभेदे सत्यपि ब्राह्मणालाभे किञ्चित्प्रयोगलोपभयेन चिकीर्षितसकलप्रयोगार्थमभिन्नैरेव पात्रब्राह्मणैः सह सकृदेवोपसंवादमात्रकरणाद्राजसूय इवार्त्विजां तेषामधिष्ठानैक्ये भवति चेद्भवतु।

"कुशादर्व्यादयो मन्त्रा ब्राह्मणाश्च बहुश्रुताः।
न ते निर्माल्यतां यान्ति विनियोज्याः पुनः पुनः" ॥

इति ब्राह्मणानां विनियुक्तविनियोगाविरोधात्। वरणभरणरूपे

तु निमन्त्रणदक्षिणादाने प्रतिश्राद्धप्रयोगं भिन्ने एवोचिते राजसूयवदेव।

अत एव च पक्षश्राद्धार्थं ब्राह्मणैः सह सकृदेवोपसम्वादेऽपि तेषामाशौचेऽभ्यासान्तरे त्यागोऽन्येषां चोपादानम्।

"निमन्त्रितस्य विप्रस्य स्वाध्यायाद्विरतस्य च।
देहे पितृषु तिष्ठत्सु नाशौचं विद्यते क्वचित्"॥

इत्यस्य वचनस्य शास्त्रीयनिमन्त्रणाभावेनाप्रवृत्तेः। तथा सत्यपि प्रयोगसंघस्य संभूयैकफलजनकत्वे सायं प्रातरग्निहोत्रवत्प्रतितिथिसंकल्पभेदात्प्रतिपदि महालयापरपक्षश्राद्धं करिष्ये द्वितीयायां महलायापरपक्षश्राद्धं करिष्ये तृतीयायां महालयापरपक्षश्राद्धं करिष्य इत्यादि। पाकभेदाच्चान्तराप्रतिबन्धानिश्चयेन केनचिदभ्यासेयत्तापक्षेणारब्धेऽप्येतस्मिञ्छ्राद्धे यद्यन्तराश्राद्धकर्त्तुराशौचोपनिपातस्तदा "श्राद्धे पाकपरिक्रिया" इत्युक्तमुख्यप्रारम्भाभावात्संकल्पाभावाच्च "प्रारब्धे सूतकं नास्ति" इत्यस्याप्रवृत्तेरनधिकारात्तत्र प्राप्तानां प्रयोगाणामननुष्ठानमेव। तस्मिंश्च सति कृतानामपि प्रयोगाणां सह कार्यान्तराभावादफलत्वम्। तथा चाशौचापगमोत्तरं सकृदादिपक्षेण यावद्दीपावलि पुनर्महालयश्राद्धं कर्त्तव्यम्।

प्रतिबन्धान्तरे तु प्रतिनिधिना तद्दशायां कर्त्तव्यम्। सायमग्निहोत्रपौर्णमासानन्तरमाशौचोपनिपाते तु प्रातरग्निहोत्रदर्शयोः "वैतानौपासनाः कार्याः क्रियाश्च श्रुतिचोदनात्" इत्यधिकारप्रतिप्रसवादाशौचमध्येऽप्यनुष्ठानम्।

यत्तु कृष्णपक्षे यजमानमरणसंभावनायां दर्शेष्टिपर्यन्ताग्निहोत्रहोमकरणपूर्वकं तदानीमेव दर्शस्यानुष्ठानं तद्बाचनिकं शुक्लपक्षे पुनराधाने सति गौणकाले दर्शानुष्ठानवत्।

न तु तेषामपि संकल्पितत्वात्पूर्वकृतानां निष्फलत्वप्रसङ्गभयाद्वा। कालाभावेन सायंकृतहोमसहकारिणः प्रातर्होमस्याप्यसंकल्पितत्वेन सायंप्रातर्होमान्तराणां सुतरामसंकल्पितत्वात्। अनधिकारप्रतिबद्धसहकार्यन्तराभावे निष्फलत्वस्यौचित्यापातत्वाच्च। अग्नीषोमीयादिवद्वाचनिकाननुष्ठानाभावेनैकदेशादेव फलसंपत्तेः कल्पयितुमशक्यत्वादित्यलमतिदूरं गत्वा।

पञ्चदश-दश-सप्त-पञ्च-तिथिपक्षा ब्रह्मपुराणे दर्शिताः—

"अश्वयुक्कृष्णपक्षे तु श्राद्धं कुर्याद्दिने दिने।
त्रिभागहीनं पक्षं वा त्रिभागं त्वर्द्धमेव वा॥
न सन्ति पितरश्चेति कृत्वा मनसि यो नरः।
श्राद्धं न कुरुते तत्र तस्य रक्तं पिबन्ति ते॥
यावच्च कन्यातुलयोः क्रमादास्ते दिवाकरः।
तावच्छ्राद्धस्य कालः स्याच्छून्यं प्रेतपुरं ततः"॥ इति।

दिने दिन इति वीप्सया पञ्चदशतिथिलाभः। स्पष्टश्च वचनान्तरे—

"कन्यागते सवितरि दिनानि दश पञ्च च।
पार्वणेनेह विधिना श्राद्धं तत्र विधीयते"॥ इति।

अत्रेऽत्यन्तसंयोगद्वितीयाबलाद्दर्शादिति लाभः। दिनशब्दस्य पक्षप्रक्रमाच्चान्द्रदिनपरतया तिथिपरत्वम्।

"तिथिनैकेन दिवसश्चान्द्रे माने प्रकीर्तिते"।

इति विष्णुधर्मोत्तरात्। अतश्च पक्षस्य "अहोरात्रेण चैकेन सावनो दिवसः स्मृतः" इति लक्षितचतुर्दशसावनदिनात्मकत्वे षोडशदिनात्मकत्वेऽपि वा न कापि क्षतिः। ह्रासे तिथिद्वय-प्रयुक्तप्रयोगद्वयस्य तन्त्रेणानुष्ठानात्। वृद्धौ च यद्यपि गुणानुरोधेन

प्रधानावृत्तेरन्याय्यत्वात्पञ्चदशप्रयोगाणां च सकृत्करणादेव सिद्धेरेकदिनच्छेद एवोचितः। न च नवरात्रव्रतवदाहत्यावृत्तिवचनम्। तथाप्याचारादेकतिथिप्रयुक्तस्य श्राद्धस्यावृत्त्या प्रयोगेणाविच्छेदेनैवानुष्ठानम्। किं तिथिप्रयुक्तं श्राद्धमावर्त्तनीयमिति तु श्राद्धकालव्याख्याधिक्येन विवेक्तव्यम्। एवमग्रिमपक्षेष्वपि। तृतीयो भागस्त्रिभागः पक्षस्य पञ्चतिथयस्तद्धीनता चाद्यानां चतसृणां चतुर्दश्याश्च वर्जनात्। एवमर्द्धत्रिभागपक्षयोरपि चतुर्दशीवर्जनम्।

"नभस्यस्यापरे पक्षे श्राद्धं कुर्याद्दिने दिने।
नैव नन्दादि वर्ज्यं स्यान्नैव वर्ज्या चतुर्दशी"॥

इति प्रतिपदादिपक्ष एव चतुर्दशीवर्जनवर्जनादितरपक्षेषु तद्वर्जनप्रतीतेः। "कृष्णपक्षे दशम्यादौ वर्जयित्वा चतुर्दशीम्" इति सामान्यकृष्णपक्षे दशम्यादिपक्षे मनुना तद्वर्जनोक्तेश्च। न चेदमाश्विनापरपक्षश्राद्धं ततो भिन्नं तस्यैव त्वत्र विशेषतः पुनरभिधानं प्रशंसनं च फलातिशयार्थमावश्यकत्वातिशयार्थं वा। नन्दादिवर्जनं तु न भवति संख्याहानिप्रसङ्गात्। अर्द्धं च पक्षस्यैव। उक्तपक्षयोः पक्षस्यैव भागितयान्वयादत्रापि तथौचित्यात्। न तु संनिधानात्त्रिभागस्यार्द्धमिति कल्पतर्वादिसकलग्रन्थविरुद्धं शूलपाणयुक्तं युक्तम्। पाठसंनिधेरकिंचित्करत्वात्। आनन्तर्यमचोदनेति न्यायात्। बुद्धिसंनिधिस्तु त्रिभागान्वितस्य पक्षस्योत्तरत्राप्यस्त्येव। अनन्तरेण संबद्धः स्यात्परस्याप्यनन्तर इति न्यायात्। अन्यथा त्रिभागोऽपि त्रिभागहीनपक्षस्यैव स्यात्। उत्तरोत्तरहीनपक्षाभिधानौचित्यमात्रत्यागस्तु छन्दोऽनुरोधात्। यदपि शूलपाणिनैवान्यदप्यत्रोक्तं "त्रिभागहीनम्"इति षष्ठ्यादितिथिषु, त्रिभागमित्येकादश्यादिषु। पञ्चपञ्चतिथीनामेव पक्षत्रिभागत्वात्।

"उत्तरादयनाच्छ्राद्धे श्रेष्ठं स्याद्दक्षिणायनम्।
चातुर्मास्यं च तत्रापि प्रसुप्ते केशवे हितम्॥

प्रौष्ठपद्याः परः पक्षस्तत्रापि च विशेषतः।
पञ्चम्यूर्ध्वं च तत्रापि दशम्यूर्ध्वमतोऽप्यति॥
मघायुक्ताथ तत्रापि शस्ता राजंस्त्रयोदशी।
तत्राक्षयं भवेच्छ्राद्धं मधुना पायसेन च॥
सर्वस्वेनापि कर्त्तव्यं श्राद्धमत्र नराधिप।
परान्नभोजी स्वपचः श्राद्धमेव तु कारयेत्"॥

इति विष्णुधर्मोत्तरसम्वादाच्च।

यत्तु "ऊर्ध्वं वा चतुर्थ्याः" इति कृष्णपक्षे दशम्यादाविति च तत्सामान्यकृष्णपक्षे। तेनाश्विनापरपक्षे कस्मिन्नपि पक्षे चतुर्दशीवर्जनं नास्त्येवेति। तदप्ययुक्तम्। "श्राद्धं शस्त्रहतस्यैव चतुर्दश्यां महालये" इति कालादर्शाद्युदाहृतवचनविरोधात्। समान्यकृष्णपक्ष-श्राद्धादस्याभेदाच्च। पञ्चमीप्रवृत्तेर्दशमीप्रवृत्तेरूर्ध्वमिति व्याख्यानेन विष्णुधर्मोत्तराविरोधादत्रापि तद्धर्मप्रवृत्तौ बाधकाभावात्। एतद्व्याख्यासंवादि स्पष्टमाश्विनापरपक्षाधिकारे देवीपुराणम्—

"कन्यास्थे तु रवौवंशे पूजा कार्या यथाविधि।
भौजङ्गीं तिथिमासाद्य यावच्चन्द्रार्कसंगमम्॥
तत्रापि महती पूजा कर्त्तव्या पितृदैवते।
ऋक्षे पिण्डप्रदाने तु ज्येष्ठपुत्री विवर्जयेत्"॥ इति।

भौजङ्गी पञ्चमी। चन्द्रार्कसंगमो दर्शः।

एतेन—

"विषशस्त्रश्वापदाहितिर्यग्ब्राह्मणघातिनाम्।
चतुर्दश्यां क्रिया कार्या अन्येषां तु विगर्हिता"॥ इति।

मरीचिवचने या चतुर्दश्यामशस्त्रहतादिश्राद्धनिन्दा सा सामान्यकृष्णपक्षश्राद्धविषया न तु महालयापरपक्षश्राद्धविषया। प्रकरणभेदेन सामान्यविशेषकृष्णपक्षश्राद्धयोर्भेदात्। इतरथा संक्रान्त्यादिप्रयुक्तस्याप्यशस्त्रहतश्राद्धस्य चतुर्दश्यां निषेधापत्तेरित्यपि शूलपाण्युक्तिर्निरस्ता वेदितव्या। न ह्यसंनिधिमात्रं प्रकरणान्तरं किन्त्वपूर्वानुपादेयसम्बन्धसहकृतः सः। अप्रत्यभिज्ञानार्थं तस्यावश्यापेक्षितत्वात्। इह तु कृष्णपक्षरूपानुपादेयसम्बन्धः प्रत्यभिज्ञाहेतुरेवेति विपरीतम्। प्राप्तस्यैव तु कृष्णपक्षसामान्यश्राद्धस्य विशेषेण तत्र स्मृतिपुराणादौ पुनरभिधानफलातिशयाभिधानार्थमकरणे प्रत्यवायातिशयाभिधानार्थं चेत्युक्तम्।

अत्र च क्वचित् "अश्वयुक्कृष्णपक्षे" इति, क्वचित् "नभस्यस्यापरे पक्षे" इति यदभिधानं तदेकस्यैव पक्षस्य कृष्णादिशुक्लादिभेदभिन्नमासद्वयेन। तस्यैवोपलक्षणात्। अत एव विष्णुधर्मोत्तरे "प्रौष्ठपद्याः परः पक्षः" इत्येवोक्तम्।

"आषाढीमवधिं कृत्वा यः स्यात्पक्षस्तु पञ्चमः।
तत्र श्राद्धं प्रकुर्वीत कन्यां गच्छतु वा न वा॥
अगतेऽपि रवौ कन्यां श्राद्धं कुर्वीत यत्नतः।
आषाढ्याः पञ्चमः पक्षः प्रशस्तः पितृकर्मसु॥
शक्रध्वजनिपाताङ्को यः स्यात्पक्षस्तु पञ्चमः।
स विज्ञेयोऽपरः पक्षः श्राद्धं तत्र विधीयते"॥

इत्येवमादीनि जातूकर्ण्यजाबालकार्ष्णाजिनिप्रभृतीनां बहूनि वचनानि स्पष्टं चान्द्रमासग्रहणद्योतकान्यप्रमाणीकृत्य—

कन्यागते सवितरि पितृराजानुशासनात्।
भवेत्प्रेतपुरी शून्या यावद्वृश्चिकदर्शनम्॥

ततो वृश्चिक आयाते निराशाः पितरो नृप ।
पुनः स्वभवनं यान्ति शापं दत्त्वा सुदारुणम् ॥
सूर्ये कन्यास्थिते श्राद्धे यो न कुर्याद्गृहाश्रमी ।
कुतस्तस्य धनं पुत्राः पितृनिःश्वासपीडिताः" ॥

इत्येवमादिषु वचनेषु कन्यासम्बन्धेनैव श्राद्धविधानाद्ब्रह्मपुराणादिगतमाश्विनपदमपि जीमूतवाहनमतेन शक्त्यैव तात्पर्यग्राहकवशाद्वा लक्षणयापि सौराश्विनपरमेव । नभस्यपदमपि "तुलामकरमेषेषु प्रातः स्नायी भवेन्नरः" इत्यादिकार्तिकमाघवैशाखस्नानादिविधायिबहुवचनदर्शनान्मीनादिष्वेव । चैत्रादित्वस्यौत्सर्गिकत्वेऽपि "मीनमेषयोर्मेषवृषभयोर्वा वसन्तः" इति वचनात्सर्वर्तुमासानां वैकल्पिकत्वेन कन्याया भाद्रपदत्वस्यापि संभवात्तत्परमेव प्रमादादिना मलमासत्वाद्वा—

"मासि कन्यागतो भानुरसंक्रान्तो भवेद्यदि ।
दैवं पित्र्यं तदा कर्म तुलास्थे कर्त्तुरक्षयम्" ॥

इति वचनात् कन्यायामकरणेऽनुकल्पत्वेन तुलाप्राप्त्यर्थं वेति यत्केचिन्मन्यन्ते तदप्यनेन विष्णुधर्मोत्तरवचनेनापहस्तितं द्रष्टव्यम् । ब्रह्मपुराणे पौर्णमास्यन्तमासक्रमेणैव सकलकृत्याभिधानाच्च । यद्यपि च—

"इन्द्राग्नी यत्र हूयेते मासादिः स प्रकीर्तितः ।
अग्निषोमौ स्मृतौ मध्ये समाप्तौ पितृसोमकौ" ॥

इति मासलक्षणवशान्मासशब्दस्तद्विशेषवचनाश्च चैत्रादिशब्दा दर्शान्ते मुख्यास्तथापि क्लृप्ततात्पर्यवशात् लक्षणयापि पौर्णमास्यन्तपरत्वमेव न्याय्यम् ।

सकृत्पक्षस्तु "आषाढ्याः पञ्चमे पक्षे" इति नागरखण्डवचनमूलकः पूर्वमेव दर्शित इति षट् पक्षा महालयापरपक्षे ।

केचिदत्र सर्वान् पिण्डदाननिषेधान्महालयश्राद्धविषयत्वहेतु-प्रमाणगन्धशून्यानपि तद्विषयाञ्छ्राद्धनिषेधानपि च स्वमत्यैव पिण्डदानमात्रविषयान् परिकल्प्य प्रतिपदादिपक्षेऽपि पिण्डदानरहितं सांकल्पिकविधानेनैव श्राद्धं कर्त्तव्यमिति वदन्ति। तन्निर्मूलम्।

अत्र च—

कन्यागतरवियुक्तानि दिनान्यतिप्रशस्तानि।

"पक्षान्तरेऽपि कन्यास्थे रवौ श्राद्धं प्रशस्यते।
कन्यागते पञ्चमे तु विशेषेणैव कारयेत्" ॥

इति हेमाद्र्युदाहृतादिपुराणात्।

नित्यं चात्र श्राद्धम्।

"प्रावृषोऽन्ते यमः प्रेतान् पितॄंश्चाथ यमालयात्।
विसर्जयति मानुष्ये शून्यं कृत्वा स्वकं पुरम् ॥
क्षुधार्त्ताः कीर्त्तयन्तस्ते दुष्कृतं यत्स्वयं कृतम्।
काङ्क्षन्ति पुत्रपौत्रेभ्यः पायसं मधुसंयुतम् ॥
तस्मात्तांस्तत्र विधिना तर्पयेत्पायसेन तु।
मध्वाज्यतिलमिश्रेण तथा शीतेन चाम्भसा ॥
ग्रासमात्रं परं त्वन्यैर्दत्तं यः प्राप्नुयान्नरः।
भिक्षामात्रेण यः प्राणान् संधारयति वा स्वयम् ॥
यो वा संधारयेद्देहं प्रत्यहं स्वात्मविक्रयात्।
श्राद्धं तेनापि कर्त्तव्यं तैस्तैर्द्रव्यैः सुसंचितैः" ॥

इत्यादित्यपुराणात्।

"शाकेनापि नापरपक्षमतिक्रामेत्" इति कात्यायनवचनाच्च।

"आषाढ्याः पञ्चमे पक्षे यः श्राद्धं न करिष्यति।
शाकेनापि दरिद्रोऽपि सोऽन्त्यजत्वमुपेष्यति ॥

आसनं शयनं भोज्यं स्पर्शनं भाषणं तथा ।
तेन सार्द्धं करिष्यन्ति ये ते पापतमा नराः ॥

इति नागरखण्डे प्रत्यवायश्रवणाच्च ।

काम्यं च—

"पुत्रानायुस्तथारोग्यमैश्वर्यमतुलं तथा ।
प्राप्नोति पञ्चमे दत्त्वा श्राद्धं कामांश्च पुष्कलान्" ॥

इति कार्ष्णाजिनिवचनात् । यदि च केनचित्प्रतिबन्धेनैतत्पक्षमध्ये सकृत्पक्षेणापि श्राद्धं न जातम् । तदेतदनन्तरशुक्लपञ्चमीं यावत्कस्मिंश्चिद्दिने कार्यम् ।

"हंसे वर्षासु कन्यास्थे शाकेनापि गृहे वसन् ।
पञ्चम्योरन्तरे कुर्यादुभयोरपि पक्षयोः" ॥ इति यमवचनात् ।

उभयोः कृष्णशुक्लयोः पक्षयोस्तत्सम्बन्धिन्योः पञ्चम्योरन्तरे कृष्णपञ्चम्युपक्रमप्रभृतिशुक्लपचम्यन्तं यावत्कस्मिंश्चिद्दिने श्राद्धं कुर्यादिति त्रिभागहीनपक्षेण कृष्णपञ्चम्यादि । तस्य चोपलक्षणत्वात् । अन्यपक्षेणाप्यमावास्यापर्यन्तासु तिथिषु श्राद्धस्य बहुभिर्वचनैः प्राप्तत्वादुत्तरपञ्चमीपर्यन्ततिथीनां प्रथमानुकल्पत्वेन विधानार्थमेवेदं वचनम् । तत्राप्यसंभवे तुलासंक्रान्तिं यावत्कस्मिंश्चिद्दिने । तत्राप्यसंभवे वृश्चिकसंक्रान्तिं यावत् ।

"यावच्च कन्यातुलयोः क्रमादास्ते दिवाकरः ।
तावच्छ्राद्धस्य कालः स्याच्छून्यं प्रेतपुरं ततः" ॥

इति ब्रह्मपुराणात् ।

कन्यातुलयोः क्रमावस्थानस्य प्राप्तत्वादेव क्रमादित्युत्तरत्रान्वेति । क्रमाच्छ्राद्धस्य कालः स्यादिति । तारतम्येनेत्यर्थः । तथा च नागरखण्डेऽपि कन्यापेक्षया तुलाया अनुकल्पत्वं दर्शितम् ।

"न ददाति नरः श्राद्धं पितृणां चन्द्रसंक्षये ।
क्षपिताशापरीताङ्गाः पितरस्तस्य दूषिताः ॥
प्रेतपक्षं प्रतीक्षन्ते गुरुवाञ्छासमन्विताः ।
कर्षका जलदं यद्वद्दिवानक्तमतन्द्रिताः ॥
प्रेतपक्षेऽप्यतिक्रान्ते यावत् कन्यागतो रविः ।
तावच्छ्राद्धं प्रवाञ्छन्ति दत्तं वै पितरः सुतैः ॥
ततस्तुलागतेऽप्येके सूर्ये वाञ्छन्ति पार्थिव ।
श्राद्धं स्ववशंजैर्दत्तं क्षुत्पिपासासमाकुलाः ॥
तस्मिन्नपि व्यतिक्रान्ते काले वृश्चिकगे रवौ ।
निराशाः पितरो दीनास्ततो यान्ति निजालयम् ॥
मासद्वयं प्रतीक्षन्ते गृहद्वारं समाश्रिताः ।
वायुभूताः पिपासार्त्ताः क्षुत्क्षामाः पितरो नृणाम् ॥
यावत्कन्यागतः सूर्यस्तुलास्थश्च महीपते" इति ।

तत्रापि कार्त्तिकामावास्यायां विशेषतः कार्यम्—

"येयं दीपान्विता राजन् ख्याता पञ्चदशी भुवि ।
तस्यां दद्यान्नचेद्दत्तं पितॄणां वै महालये" ॥

इति भविष्यवचनात् । "पञ्चदश्यमावास्याख्याता"इत्युक्तत्वात् । तस्यामेव च—

"दीपमालाश्च कर्त्तव्याः शक्त्या देवगृहेषु च ।
रथ्यापणश्मशानेषु नदीपर्वतसानुषु" ॥

इत्यादिना ब्रह्मपुराणे बहुदीपदानविधानात् ।

यद्यपि क्वचित्कार्त्तिकपौर्णमास्यामपि दीपदानं विहितं स्यात्तथाप्यमावास्यैव ग्राह्या । कृष्णपक्षस्य पित्र्ये प्रशस्तत्वात्,

दीपावलीत्वेन तस्या एव ख्यातत्वाच्च । अमावास्यायां च तत्प्रयुक्तश्राद्धप्राप्तावपि महालयप्रयुक्तमप्राप्तं शक्यत एव विधातुम्। श्राद्धमात्रप्राप्तिश्च कार्त्तिक्यामप्यविशिष्टा ।

"आषाढ्यामथ कार्त्तिक्यां माघ्यां त्रीन्पञ्च वा द्विजान्।
तर्पयेत्पितृपूर्वं तु तदस्याक्षयमुच्यते" ॥ इति यमवचनात् ।

यच्च महालयदर्शानन्तरप्रतिपदि जीवत्पितृकैः क्रियते मातामहश्राद्धम्, यच्च स्मृतिरत्नावल्यादिनिबन्धनिर्माणकाले प्रतिपद्येव तस्यामिदानीं तु महालयान्तर्गतनवम्यां जीवत्पितृकैरेव क्रियते मातृश्राद्धम्, अपुत्रपितृव्यज्येष्ठभ्रात्रादिश्राद्धं च तत्तन्मृतितिथौ तत्तदधिकारिभिः क्रियते, तदपि तत्तत्कालेषु कथंचिन्न जातमेतेष्वेव शुक्लपञ्चमीपर्यन्तादिषु गौणगौणतरादिकालेषु कर्त्तव्यम्। तस्यापि कन्योपलक्षितापरपक्षनिमित्तत्वात्। तच्च व्यवस्थापितं प्राक्।

अत्र च यथा कृष्णपक्षसामान्यप्रयुक्तं श्राद्धमाहिताग्नेरमावास्यायामेव भवति न त्वितरेषामिवान्यस्यामपि तिथौ। अमावास्यायां तु फलातिशयमात्रम्। "न दर्शेन विना श्राद्धमाहिताग्नेर्द्विजन्मनः" इति मनुवचनात्। इदं हि वचनं नाहिताग्नेर्दर्शश्राद्धातिरिक्तश्राद्धनिषेधार्थं प्रतिसाम्वत्सरिकादिश्राद्धाभावप्रसङ्गात्। दर्शपदे श्राद्धलक्षणाप्रसङ्गात्। नियममात्रे संभवत्यपूर्वनिषेधपरत्वे गौरवाच्च। एतेन दर्शश्राद्धसदृशानां साधारणकालकानामेव श्राद्धानामयं प्रतिषेधो नासाधारणकालकानामाब्दिकादीनामित्यप्यपास्तम्।

किन्तु "कृष्णपक्षप्रयुक्ते श्राद्धे सकृदेव यस्यां कस्यांचित्तिथौ कर्त्तव्ये दर्शकालनियमार्थम्" इति पार्थसारथिमिश्रप्रभृतिभिर्व्याख्यातम्। तथा महालयापरपक्षश्राद्धमपि सकृत्पक्षे दर्श एवाहिताग्नेर्भवति। प्राप्ते सकृत्त्वसामान्ये तत्र कालविशेषनियममात्रकरणे लाघवेन

तत्रैव पक्षे पूर्ववचनप्रवृत्तेः "पुरावाचः प्रवदितोर्निर्वपेत्" इत्यस्यैव प्रातःकालीनप्रधानाङ्गनिर्वापे। पक्षान्तराणि त्वाहिताग्नेरपि भवन्त्येव। अनेनैव न्यायेन—

"सन्यासिनोऽप्याब्दिकादि पुत्रः कुर्याद्यथातिथि।
महालये तु यच्छ्राद्धं द्वादश्यामेव तद्भवेत्" ॥

इत्यपि वचनं सकृत्पक्षविषयमेव।

यत्तु—आहिताग्नेः पित्रादिवार्षिकश्राद्धं दर्शकर्त्तव्यश्राद्धप्रकारेण त्रिपुरुषोद्देशेन विना "प्रतिसम्वत्सरं चैवम्" इत्याद्युक्तप्रकारेणैकोद्देशेन न भवतीत्याहिताग्निकर्त्तृकाब्दिके पार्वणप्रकारनियमार्थत्वेन केषांचिन्मनुवचनस्य व्याख्यानं तद्वार्षिकश्राद्धस्य मनुस्मृतौ विशेषतोऽसंनिधानादर्शपदे लक्षितलक्षणापत्तेश्चायुक्तम्। अहिताग्नेर्दर्शश्राद्धमेव नियतं तेन विनान्यच्छ्राद्धं तु तस्य न नियतमिति नियतपदाध्याहारेण मेधातिथिव्याख्यानं कथंचिद्युज्यतां नाम।

कैश्चित् "न दर्शेन विना" इत्यस्य कृष्णपक्षश्राद्धविषयत्वमभ्युपेत्यैव "न पैतृयज्ञियो होमो लौकिकेऽग्नौ विधीयते" इत्यस्य पूर्वार्द्धस्य तत्र हेतुत्वेनेत्थं व्याख्यानं कृतम्। आहिताग्निना सर्वाधानिना श्राद्धरूपपितृयज्ञाङ्गभूतो होमः "स्मार्त्तं कर्म विवाहाग्नौ" इति विहिते औपासने तावत्कर्त्तुं न शक्यते। लौकिके तु स न विधीयते। अग्नेः प्रतिनिध्यभावात्। प्रत्युत—

"साग्निरग्नावनग्निस्तु द्विजपाणावथाप्सु वा।
कुर्याद्ग्नौ क्रियां नित्यं लौकिकेनेति निश्चितम्" ॥

इति हेमाद्र्युदाहृतस्मृतिवचनेन निषिध्यते। साग्नित्वाच्चानाग्निकस्य विहिते पाण्यादौ न भवति। परिशेषात्त्रेताग्नावेव

कर्त्तव्यः। तत्रापि दक्षिणाग्नावेव। पित्र्यकर्माधिकरणत्वेन तस्य दृष्टत्वात्। "अयं पितृणामग्निः" इत्यादिमन्त्रवर्णाच्च। स च दर्शान्य-दिने न लभ्यते। यदि हि श्राद्धीयहोमोऽपि स्वार्थतया तस्य विहरणमाहरणं वा प्रयुञ्जीत ततस्तत्रापि स लभ्येत स च तदा तत्प्रयुञ्जीत, यदि क्वापि तत्प्रयुक्तिं विना तं न लभेत। शक्नोति तु दर्शे तां विनापि दर्शयागार्थविहरणादेरेव तं लब्धुम्। अत एव विज्ञानयोगि-नाप्युक्तम्—"पिण्डपितृयज्ञानन्तरभाविनि दर्शश्राद्धे विहृतदक्षिणाग्नेः संनिधानात्" इति। तस्मादेतस्माद्धेतोराहिताग्निना सर्वाधानिना दर्श एव कृष्णपक्षश्राद्धं कार्यं नान्यदिन इति।

तदिदमयुक्तम्। साक्षाद्वचनं विना श्राद्धीयहोमस्य श्रौतेऽग्नौ कर्त्तुमशक्यत्वात्। तथाहि। न तावदग्नीनां प्रयोजनाकाङ्क्षया स्मार्त्ते कर्मणि विनियोगः। असंयुक्तोत्पन्नानामपि तेषां वाचनि-कैर्होमादिभिरेव प्रयोजनाकाङ्क्षाशान्तेः। वचनमपि "हुत्वाग्नौ पितृयज्ञवत्" इत्यादि यद्यपि सामान्यविषयं तथापि न श्रौताग्निपरम्। विषये लौकिकं स्यादिति न्यायात्। किमुत "गृह्याणि वक्ष्यामः" इति प्रतिज्ञानाद् "गृह्यगतं कर्म स्मार्त्तं विवाहाग्नौ" इत्युक्तत्वाच्च। स्मृतिगतमप्यौपासनाग्निपरमेव तदा तत्। न च "पितृयज्ञवत्" इत्यति-देशाद्दक्षिणाग्निप्राप्तिरिति शम्भुशङ्खधराद्युक्तं युक्तम्। अग्नेरुपदेश-सिद्धत्वेनातिदेशस्य तद्भिन्नधर्मविषयत्वात्। अन्यथाग्नावित्यस्य वैयर्थ्यापातात्। अत एव च न तस्य दक्षिणाग्निपरत्वमपि। तदुपादाने हि कदाचिदतिदेशाद्दक्षिणाग्निरेव प्राप्नुयादिति तन्निवृत्त्यर्थमौपासनाग्निपरमेव तत्। एकस्यैवाग्निशब्दस्य गृह्या-ग्निमन्तं प्रति तत्परत्वं सर्वाधानिनं च प्रति दक्षिणाग्निपरत्वं चान्याय्यम्। तेन गृह्येषु स्मृतिषु चाग्निपदेन गृह्याग्नेरेव ग्रहणा-त्तदभावे सर्वथा निरग्नेरिव—"अग्न्यभावे तु विप्रस्य पाणावेवोप-पादयेत्" इति मनुवचनात्पाणावेव श्राद्धीयो होमो युक्तः। अत-

न्याधिपदैरपि गृह्याग्निरहित एवोच्यते । अत एव होमस्याधिकरणाकाङ्क्षया दक्षिणाग्निप्राप्तिरित्यपि न युक्तम् । सत्यामप्याकाङ्क्षायां वाचनिकेन पाणिनैव तन्निवृत्तेः । वस्तुतस्तु न होमस्याधिकरणाकाङ्क्षा । देवतोद्देशत्यागपूर्वकप्रक्षेपमात्ररूपत्वात् । अत एव "यदाहवनीये जुहोति" इत्यपूर्वविधिरेव न नियमविधिरित्युक्तं "न देवताग्निशब्दक्रियम्" इत्यत्राधिकरणे (१) । संनिधानमात्रं त्वकिञ्चित्करमाहवनीयाद्यतिप्रसक्तं च ।

अथैतदपरितोषादेव मिताक्षरायामुदाहृतम्—

"आहिताग्निस्तु जुहुयाद् दक्षिणाग्नौ समाहितः ।
अनाहिताग्निस्त्वौपसदे अग्न्यभावे द्विजेऽप्सु वा" ॥

---

(१)—देवताग्निमन्त्रक्रियाणां प्रतिनिध्यभाव इति सिद्धान्तः । यथोक्तं जैमिनीयन्यायमालायाम्—

"देवताग्निमन्त्रोक्षणादावस्ति प्रतिनिधिर्न वा ।
पुरेवास्तीह यन्मुख्ये कार्यं तन्नेति नास्त्यसौ ॥

"आग्नेयोऽष्टाकपालः" "सौर्यं चरुम्" इत्यादावुक्ता अग्निसूर्यादयो देवाः, आहवनादयोऽग्नयः, "बर्हिर्देवसदनं दामि" इत्यादयो मन्त्राः, प्रोक्षणादयः क्रियाः, एतेषां देवादीनामपचारे द्रव्यवत्प्रतिनिधिरस्ति इति चेत् । मैवम्—कार्यसिद्ध्यभावात् । पुरोडाशनिष्पादनं कार्यं व्रीह्यपचारेऽपि नीवारेण सिद्ध्यति । देवादिकार्यं तु नान्येन सिध्यति । न ह्याग्नेययागो विष्णुना निष्पद्यते । नाप्याहवनीयकार्यो होमोऽसंस्कृतेन वह्निना सिध्यति । नापि "बर्हिर्देवसदनं दामि" इत्येतन्मन्त्रसाध्यमर्थप्रकाशनमन्येन मन्त्रेण सिध्यति । नापि प्रोक्षणकार्यमदृष्टमविहितेनान्यार्थं विहितेन वा क्रियान्तरेणापि सिध्यति । तस्मात्—नास्ति देवादीनां प्रतिनिधिः ।

[ ६ अ० ३ पा० ५ अधिकरणे ]

इति वचनमेव सर्वाधानिनः श्राद्धीयहोमे दक्षिणाग्निप्रापकत्वेनाभिमतम्। तर्हि श्रौतेष्ट्यादिभिरिवाप्रयोजकलक्षणाभावाच्छ्राद्धीयहोमेनापि तस्य विहरणादिप्रयुक्तिसंभवाद्दर्शान्यदिनेऽपि दक्षिणाग्निः सुलभ एव। अत एवोक्तं वायुपुराणे—

"आहृत्य दाक्षिणाग्निं तु होमार्थं वै प्रयत्नतः।
अग्न्यर्थं लौकिकं वापि जुहुयात्कर्मसिद्धये" ॥ इति।

अग्न्यर्थं "स्मार्तं कर्म विवाहाग्नौ"इति स्मार्त्तकर्माधिकृतौपासनान्यर्थं तत्कार्यमिति यावदिति। 'न पैतृयज्ञिये, इत्यस्य "न दर्शेन" इत्यत्रार्थे हेतुत्वेन व्याख्यानं यत्किञ्चिदेव। वाचनिक एव त्वयमर्थो "न दर्शेन विना श्राद्धमाहिताग्नेर्द्विजन्मनः" इति द्वयोरप्याहिताग्न्योः। "न पैतृयज्ञिये" इति तु वायुपुराणोक्तलौकिकनिषेधार्थं पृथगेव वाक्यम्। निषिध्यते च ऋष्यन्तरोक्तमृष्यन्तरेण "यदुच्यते द्विजातीनाम्" इतिवत्।

न च वायुपुराणगतं लौकिकपदं गृह्याग्निपरम्। अग्न्यर्थमित्यग्निपदं च स्ववाक्यप्रकृतदक्षिणाग्निपरम्। तेनाग्नौ करणहोमे दक्षिणाग्निरेव मुख्यस्तदभावे गृह्याग्निरनेन विधीयत इति वाच्यम्। स्ववाक्यप्रकृतपरामर्शस्य सर्वनाम्ना तत्तद्विशेषशब्देनैव वा दृष्टत्वात्सामान्यवाचिनाग्निशब्देन दक्षिणाग्निपरामर्शानुपपत्तेः। अविधिकृतविशेषपरत्वं तु सामान्यशब्दस्य "व्रीहीन् प्रोक्षति"इत्यादिषु बहुशो दृष्टम्।

किंच गृह्यस्मृत्युक्तकर्मसु न्यायाद्वाक्याच्चोत्सर्गतो गृह्याग्निरेव मुख्यस्तदसंभवेऽपवादत्वेन वा पाण्यादिवद्दक्षिणाग्निर्विधीयत इत्येवोचितम्। अत एव मिताक्षरायां "कर्म स्मार्त्तं विवाहाग्नौ"इत्यस्यापवाददर्शनादित्युक्त्वा "आहिताग्निस्तु"इत्यादिवाक्यं लिखितम्। सर्वाधानिविषयत्वं च तस्योक्तमित्यलं प्रसङ्गागतेन।

महालयापरपक्षान्तरगतभरण्यां च तन्निमित्तं श्राद्धं महाफलम्।

"भरणी पितृपक्षे तु महती परिकीर्त्तिता ।
अस्यां श्राद्धं कृतं येन स गयाश्राद्धकृद्भवेत्" ॥

इति मत्स्यपुराणात् ।

## कृष्णपक्षे त्रयोदशीश्राद्धविवेचनम् ।

अथात्रैव त्रयोदश्यां श्राद्धे किञ्चिद्विचार्यते। तच्च यद्यपि "मघायुक्ताथ तत्रापि शस्ता राजंस्त्रयोदशी" इति पूर्वोदाहृताद्विष्णुधर्मोत्तरवचनात्,

"आषाढ्याः पञ्चमे पक्षे गयामध्याष्टमी स्मृता ।
त्रयोदशी गजच्छाया गयातुल्ये तु पैतृके" ॥

इति ब्रह्माण्डपुराणाच्चापरपक्षनिमित्तमेव येन केनापि सकृत्पक्षभिन्नेन पक्षेण त्रयोदश्यां क्रियमाणं श्राद्धं त्रयोदशीश्राद्धमिति प्रतीयते। तथापि भिन्नमेवेदं तस्मात् ।

"यत्किञ्चिन्मधुना मिश्रं प्रदद्यात्तु त्रयोदशीम् ।
तदप्यक्षयमेव स्याद्वर्षासु च मघासु च ॥
यद्ददाति गयास्थश्च सर्वमानन्त्यमश्नुते ।
तथा वर्षात्रयोदश्यां मघासु च विशेषतः ॥
प्रौष्ठपद्यामतीतायां मघायुक्तां त्रयोदशीम् ।
प्राप्य श्राद्धं प्रकर्त्तव्यं मधुना पायसेन वा ॥
श्राद्धकालममावास्या नित्यं पार्थिवसत्तम ।
पौर्णमासी तथा माघी श्रावणी च नृपोत्तम ॥
प्रौष्ठपद्यामतीतायां तथा कृष्णत्रयोदशी ।
अष्टकान्वष्टकास्तिस्रस्तथैव च नृपोत्तम ॥
एतानि श्राद्धकालानि नित्यान्याह प्रजापतिः ।
श्राद्धमेतेष्वकुर्वाणो नरकं प्रतिपद्यते" ॥

अमावास्या तिस्रोऽष्टकास्तिस्रोऽन्वष्टका माघी प्रौष्ठपद्यूर्ध्वं कृष्णा-त्रयोदशीत्यादिषु मनुयाज्ञवल्क्यविष्णुधर्मोत्तरविष्णुस्मृत्यादिगतस्पष्ट-विधिवचनेष्वनेकस्मृतिपुराणगतपितृगाथारूपार्थवादोन्नेयविधिवचनेषु चापरपक्षनिमित्तस्य श्राद्धस्य प्रत्यभिज्ञानात्। यद्यपि चायं त्रयोदशीविशेषः कृष्णपक्षाविनाभूतस्तथापि न तच्छ्राद्धाविनाभूतः सकृत्पक्षे तत्र तदभावात्। येन तदुपस्थापयेत्। कृष्णपक्षविशेषस्तु कृष्णपक्षसामान्यनिमित्तश्राद्धाविनाभूतस्तदुपस्थापयत्येवेति ततो महालयापरपक्षश्राद्धस्याभेदो युक्तः।

पूर्वोक्तवचनैश्च नित्यत्वावगमात्प्रकरणान्तराच्च कृष्णपक्षसामान्यविहिताद् काम्यश्राद्धादपि भिन्नम्। न ह्यत्राग्निहोत्रदर्शपूर्णमासादिवत्कामनिमित्तसंयोगभेदात्प्रयोगमात्रभेदो न कर्मस्वरूपभेद इति संभवति। एकोत्पत्तिविधिसंनिध्यभावेन कर्मस्वरूपभेदापवादकस्य संनिधौ त्वविभागादिति न्यायस्य तद्वदत्राभावात्। तेनात्र कर्मभेद एव। युगादिश्राद्धात्तु त्रयोदशीश्राद्धं न भिद्यते। त्रयोदशीविशेषस्य युगादित्वाविनाभावात्। तस्य च पुनर्विधिर्मन्वादिस्मृत्यादिषु तावद्युगादिसामान्यश्राद्धविधेरभावाद्युक्त एव। यदि क्वचित्तद्विधायाप्येतस्य विधिः स्यात्। सोऽयनविषुवमहालयादिवदावश्यकत्वार्थः फलातिशयार्थश्च भविष्यति।

अत एवोक्तं ब्रह्मपुराणे—

"यो नाम वर्द्धयेद् देहं प्रत्यहं स्वात्मविक्रयात्।
श्राद्धं तेनापि कर्त्तव्यं तैस्तैर्द्रव्यैः सुसंचितैः॥
त्रयोदश्यां विशेषेण वर्षासु च मघासु च।
नास्मात्परतरः कालः श्राद्धेष्वन्यस्तु विद्यते॥
यदत्र साक्षात्पितरो गृह्णन्त्यमृतमक्षयम्" इति।

अत्र च यद्यपि बहुषु वचनेषु मघायुक्तैव त्रयोदशी श्राद्धकालत्वेन श्रूयते तथापि केवलापि प्रौष्ठपद्यपरितनी सा तथा

भवत्येव । "प्रौष्ठपद्यामतीतायां तथा कृष्णा त्रयोदशी", "प्रौष्ठपद्यूर्ध्वं कृष्णत्रयोदशी" इत्यादिवचनेभ्यः ।

"अपि जायेत सोऽस्माकं कुले कश्चिन्नरोत्तमः ।
प्रावृट्कालेऽसिते पक्षे त्रयोदश्यां समाहितः ॥
मधुप्लुतेन यः श्राद्धं पायसेन समाचरेत् ।
कार्त्तिकं सकलं वापि प्राक्छाये कुञ्जरस्य च" ॥ इति ।
"अपि नः स कुले जायाद्यो नो दद्यात्त्रयोदशीम् ।
पायसं मधुसर्पिर्भ्यां प्राक्छाये कुञ्जरस्य च" ॥

इति च विष्णुमन्वादिस्मृतिगतासु पितृगाथासु च त्रयोदशीमात्रप्रशंसनात् । "कार्त्तिकं सकलं वापि"इति च पृथगेव प्रशंसोन्नेयः सकलकार्त्तिकव्यापिनो मधुप्लुतपायसद्रव्यकस्य श्राद्धस्य विधिः । "प्राक्छाये कुञ्जरस्य"इति च तथैवापराह्णिकहस्तिच्छायारूपदेशाङ्गकस्य । अत एव महाभारते—

"अपि नः स कुले जायाद्यो नो दद्यात्त्रयोदशीम् ।
मघासु सर्पिषा युक्तं पायसं दक्षिणायने ॥
अजेन सर्वलोहेन मघासु च यतव्रतः ।
हस्तिच्छायासु च तथा कर्णव्यजनवीजितम्" ॥

वर्षास्विति च त्र्यृतुसम्वत्सराभिप्रायेण मासचतुष्टयात्मकं वर्षर्तुमभिप्रेत्य । तथा च महाभारते—

"चतुरो वार्षिकान्मासान् यो मांसं परिवर्जयेत् ।
चत्वारि भद्राण्याप्नोति कीर्त्तिमायुर्यशो बलम्" इति ।

यतीनधिकृत्य वशिष्ठेनाप्युक्तम्—"न चिरमेकत्र वसेदन्यत्र वर्षाकालात्, श्रावणादयश्चत्वारो मासा वर्षाकालः" इति ।

पृथङ्मघाग्रहणं भारतवचने महालयपक्षगयाताः केवलमघाया अपि त्रयोदशीवच्छ्राद्धकालत्वार्थम्। तथा च वशिष्ठेनापि केवलमघासु श्राद्धमुक्तं प्रशंसामुखेन—

"पिता पितामहश्चैव तथैव प्रपितामहः।
उपासते सुतं जातं पिप्पलं शकुना इव॥
मधुमांसैश्च शाकैश्च पयसा पायसेन च।
एष नो दास्यति श्राद्धं वर्षासु च मघासु च" इति।

उभययोगे तु फलातिशयार्थत्वलक्षणं प्राशस्त्यम्।

"योगो माघात्रयोदश्योः कुञ्जरच्छायसंज्ञितः (१)।
भवेन्मघायां सिंहे च शशिन्यर्के करे स्थिते"॥

इति ब्रह्मपुराणोक्तकुञ्जरच्छाययोगे प्राशस्त्यातिशयवत्। प्राशस्त्यार्थमेव च भारतवचने पूर्वं मघाग्रहणं वाक्यान्तरेषु च मघायुक्तादिग्रहणम्। स्पष्टं चैतद्योगीश्वरवचने—"तथा वर्षात्रयोदश्यां मघासु च विशेषतः" इति। एवं सति त्रयोदशीसमभिव्याहृतेषु वचनेषु "यो मघासु च"इति चकारः स यद्यपि तिथ्या सहेतरेतरयोगार्थस्तथापि प्राशस्त्यार्थ एव मघायुक्तादिवचनवत्।

वस्तुतस्तु सपरस्परनिरपेक्षैकक्रियान्वयलक्षणस्समुच्चयार्थ एव। "प्राक्छाये कुञ्जरस्य च" इतिवत्। केवलमघाया अपि श्राद्धकालत्वोक्तेः। वर्षास्तु त्रयोदश्या विशेषणमेव। "प्रावृट्कालेऽसिते पक्षे त्रयोदश्याम्" "वर्षात्रयोदश्याम्" इत्यादिवचनात्।

यत्तु शूलपाणिना "वर्षावन्मघापि त्रयोदशीविशेषणमेव। मघायुक्तवाक्यैकवाक्यत्वात्। तथा च मघायुक्तैव त्रयोदशी श्राद्धकालो न

(१)—गजच्छायसंज्ञको योगश्चतुर्धा भवति। ते च भेदा अस्माभिः १३१ पृष्ठटिप्पण्यां विवृतास्तत्रैव विलोकनीयाः।

तु केवला त्रयोदशी मघा वा। यत्तु क्वाचित्कं केवलतच्छ्रवणं तदितरोपलक्षणम् । पूर्वोक्तादेव हेतोः। मन्वाद्युक्तपितृगाथारूपार्थवादेषु तु सुतराम्। अर्थवादानां विधिशेषत्वेन तदनुरोधेन नेतव्यत्वात्। विधौ च "वर्षासु च मघासु च" इति मघायोगस्य श्रवणात्। केषुचित्त्वर्थवादेष्वपि मघायोगोऽपि श्रूयत एव। तत्र च विधिः कल्प्यमानो विशिष्टतिथिगोचर एव कल्पयितुं न्याय्यो न तु त्रयोदशीमात्रश्राद्धगोचर एकः, फलातिशयार्थमघायोगगोचरश्चान्यः। गौरवप्रसङ्गात्। गजच्छायाकुञ्जरप्राक्छाययोगौ तु त्रयोदशीश्राद्ध एव फलातिशयार्थावल्पमुन्युक्तत्वात्" इत्युक्तम्।

तदयुक्तम्। न हि ऋषिवचनानां संवादात्प्रामाण्यं येन चाल्पत्वबहुत्वकृतो विशेषः स्यात्। तेन यद्येकविधिकल्पनालाघवमात्रेण स्वारसिकनैरपेक्ष्यबाधेनाप्यनाकाङ्क्षितेतरोपलक्षणं स्वीक्रियते तर्हि सर्वोपसंहारेण तादृशैकविधिकल्पनाद्गजच्छायाख्ययोगयुक्तायामेव त्रयोदश्यां कुञ्जरप्राक्छाय एव च श्राद्धं स्यान्नान्यत्र।

अथ—

"रूपतो हि निराकाङ्क्षाभिन्नत्वेनावधारिताः।
अन्योन्यानादरेणैव प्रार्थयन्ते प्रयोजनम्"॥

इति न्यायेन तत्तदृषिवचनानुरूपनानाश्रुतिकल्पनमपि प्रामाणिकमेव। ततो मदुक्तमेव कल्पतर्वादिसंमतं युक्तम्।

अत एव केवलमघात्रयोदशीप्रशंसारूपार्थवादेभ्यः प्रत्यक्षतो वा केवलतत्तद्गोचरविध्योः क्लृप्तत्वादुभयप्रशंसार्थवादेभ्यः फलातिशयार्थनक्षत्रविशिष्टतिथिगोचरस्यैव विधेः कल्पनान्न विधिद्वयकल्पनागौरवमपि।

एवं च सामान्यकृष्णपक्षत्रयोदश्यां ज्ञातिश्रैष्ठ्यबहुप्रजादिफलकं काम्यमेव श्राद्धम्। महालयापरपक्षत्रयोदश्यां तु पक्षश्राद्धा-

त्काम्यश्राद्धाच्च भिन्नयुगादित्वनिमित्तकमेवेतरयुगादिश्राद्धापेक्षया-त्यावश्यकमक्षयतृप्त्यादिपितृगतप्रजापुष्ट्यादि कर्तृगतमहाफलजनकं च श्राद्धमिति स्थिते ये तावत् कृष्णत्रयोदशीसामान्यश्राद्धविषयाः स्पष्टा निषेधाः—

"कृष्णपक्षे त्रयोदश्यां यः श्राद्धं कुरुते नरः ।
पञ्चत्वं तस्य जानीयाज्ज्येष्ठपुत्रस्य निश्चितम् ॥
गृही त्रयोदशीश्राद्धं न कुर्यात्पुत्रवानपि ।
उपवासं च संक्रान्तौ ग्रहणे चन्द्रसूर्ययोः ॥
त्रयोदश्यां तु वै श्राद्धं न कुर्यात्पुत्रवान्गृही ।
नेष्यते सोपवासश्च कैश्चिदप्ययनद्वये" ॥

इत्यादयो ज्योतिर्बृहस्पतिवामनपुराणषट्त्रिंशन्मतादिगताः । ये च तादृशा एव "युवमारिणस्तु भवन्ति" "युवानस्तत्र म्रियन्ते" इत्यापस्तम्बकात्यायनाद्युक्तनिन्दोन्नेया निषेधास्ते पुत्रवद्गृहिणोऽन्य-बहुपुत्रलाभार्थतच्छ्राद्धनिषेधपराः । तेष्वेव तस्याधिकारिणः श्रव-णात् । युवानः समनन्तरजनिष्यमाणापेक्षया पूर्वोत्पन्ना इति यावत् । ते म्रियन्त इति दोषश्रावणाच्च । ज्येष्ठपुत्रस्येति ज्येष्ठ-शब्दोऽपि तत्पर एव । भवतु वा "ऋक्षे पिण्डप्रदानं तु ज्येष्ठपुत्री विवर्जयेत्" इतिवत्सर्वज्येष्ठपरस्तथापि तद्वत एव निषेधः । तेन सर्वथा संतानरहितस्य तद्वतोऽपि वा तदतिरिक्तमोक्षादिफलार्थिनो न त्रयोदशीश्राद्धनिषेधः ।

अतएव स्कान्दे नागरखण्डे—

"यो वाञ्छति नरो मुक्तिं पितृभिः सह चात्मनः ।
असन्तानश्च यस्तस्य श्राद्धे प्रोक्ता त्रयोदशी ॥
सन्तानयुक्तो यः कुर्यात्तस्य वंशक्षयो भवेत्" इति ।

एतत्सामान्यतोदृष्टमूलिकैव चैकमात्रं पुत्रवतां बहुपुत्रकामनया पुत्रार्थविहितहरिवंशश्रवणादिकर्मानाचरणप्रसद्भिः शिष्टानाम्। आनर्त्तभर्तृयज्ञसम्वादरूपनागरखण्डेतिहासार्थवादाच्च महालयापरपक्षत्रयोदश्यां केवलायां मघादियुक्तायां वा यदत्यावश्यकं महाफलं च श्राद्धं विहितं तस्य निषेध उन्नीयते। तत्राहि यद्यपि—

"त्रयोदश्यां कृते श्राद्धे कस्माद्वंश क्षयो भवेत्॥
स हि श्राद्धं त्रयोदश्यां कुरुते पायसेन च"॥

इत्युपक्रमे त्रयोदशीमात्रं प्रतीयते तथापि—

"ऋक्षे पैत्रे यदा चन्द्रो हंसश्चैव करे स्थितः।
त्रयोदश्यां तु सा छाया विज्ञेया कुञ्जराह्वया॥
श्राद्धेष्वतिप्रशस्ता सा पितॄणां तृप्तिकारिणी।
अतो मघात्रयोदश्यामेतैरेव हि साधनैः॥
करोमि श्रद्धया श्राद्धं तत्प्रभावमनुस्मरन्।
तस्य तद्वचनं श्रुत्वा ये चान्येऽपि जना भुवि॥
नभस्यस्य त्रयोदश्यां श्राद्धं चक्रुर्मुदान्विताः।
अद्यप्रभृति यः श्राद्धं त्रयोदश्यां करिष्यति॥
कन्यासंस्थे सहस्रांशौ तस्य स्याद्वंशसंक्षयः"।

इति मध्ये मध्ये महालयत्रयोदशीपरामर्शादुपक्रमस्याप्यविरोधेन तत्परत्वात्तच्छ्राद्धस्यैव तत्र निषेधः। तत्र स्पष्टैर्विधिभिर्बहुफलार्थतया विहितस्यात्यन्तं निषेधासंभवात् क्रत्वर्थत्वाभावाच्च। षोडशिग्रहणाग्रहणवद्विधिप्रतिषेधयोर्विकल्पासंभवान्निषेधस्य कस्मिंश्चिद्विषयभेदेऽवश्यं वक्तव्ये पिण्डदानोपेतत्वरूपविस्तरसाहित्यरूपस्तावदेकस्तद्विषयो नागरखड एवोक्तः।

"अतः श्राद्धं विना देयं तद्दिने मधुपायसम्।
खड्गमांसं कालशाकं मांसं वाध्रीणसस्य च॥

तस्याभावेऽपि दातव्यं क्षीरोदनमनुत्तमम् ।
तस्मिन्नहनि विप्रेभ्यः पितॄणां तुष्टये नृप ॥
तस्याभावेऽपि दातव्यं जलं तिलविमिश्रितम्" ॥ इति ।

अत्र श्राद्धशब्दः पिण्डदानपरस्तस्यापि पितृदेवत्यत्वे श्राद्धशब्दवाच्यत्वात् । अग्रे ब्राह्मणभोजनस्योक्तत्वेन तन्निषेधासंभवात् । पितृतुष्टेस्तदुद्देशं विनाऽसंभवेन तत्र पितॄणामवश्यमुद्देशनीयत्वात् । तत्सद्भावे च तदङ्गानां निमन्त्रणादीनां ब्राह्मणोपचाराणामवश्यंभावित्वेऽपि पिण्डदानस्य तदङ्गानां चाभावेन तत्प्रयुक्तेन च वाचनिकेनार्घ्यदानाग्नौ करणाद्यभावेन विस्तरपर्युदासोपपत्तेः । "अद्यप्रभृति वः श्राद्धम्" इति पूर्वतनोऽपि श्राद्धशब्दः पिण्डदानपर एव । निन्दायाः "अतः श्राद्धं विना" इतिपर्युदासशेषत्वात् । युक्तश्च तच्छ्राद्धे पिण्डदाननिषेधस्तस्य युगादिप्रयुक्तत्वात् । तत्र च—

"अयनद्वितये श्राद्धं विषुवद्द्वितये तथा ।
युगादिषु च सर्वासु पिण्डनिर्वपणादृते" ॥

इत्यगस्त्येन पिण्डदाननिषेधात् ।

न चैवं सामान्यनिषेधेनैव सिद्धेर्विशेषनिषेधो व्यर्थः प्राप्त्यभावादसङ्गतश्चेति वाच्यम् ।

पूर्वोक्तनानावचनैरेतत्त्रयोदशीश्राद्धस्यात्यावश्यकत्वाक्षय्यपितृतृप्तिहेतुत्वयोरवगमात्पिण्डदानस्य च तीर्थश्राद्धादिषु ब्राह्मणभोजनासंभवे केवलपिण्डदानविधानेन ब्राह्मणभोजनापेक्षयातिशयेन पितृतृप्तिहेतुत्वावगमादष्टकान्वष्टकादिसमभिव्याहाराच्च सत्यपि युगादिश्राद्धत्वे सामान्यनिषेधबाधेनात्र पिण्डदानं भवत्येवेति शङ्कानिवृत्त्यर्थत्वात् ।

अत एव कर्कोपाध्यायेन—"अपि नः स कुले भूयात्" इत्यादिमैघात्रयोदशीश्राद्धविषया पितृप्रार्थना पिण्डदानविषयैवोक्ता । येषु

अन्येष्वेतत्त्रयोदशीश्राद्धनिषेधस्तत्र युगादिसामान्यश्राद्धतत्रत्यपिण्डदाननिषेधयोरनुक्तत्वाच्च ।

अन्योऽप्येकवर्गोद्देश्यकरूपो निषेधविषयः कार्ष्णाजिनिनोक्तः ।

"श्राद्धं नैवैकवर्गस्य त्रयोदश्यामुपक्रमेत् ।
न तृप्तास्तत्र पेयस्य प्रजां हिंसन्ति तस्य ते" इति ।

तेऽग्रजामिति क्वचित्पाठः । एकवर्गस्य पितृपितामहप्रपितामहमात्रवर्गस्य । किन्तु मातामहादिवर्गस्यापीति विधेर्विषयः । न तु तत्तत्कालविहितेषु तत्तच्छ्राद्धेष्विति कर्त्तव्यताकाङ्क्षायां समीपे धर्मानुपदेशादुपदिष्टधर्मकस्य पार्वणाख्यस्य दर्शश्राद्धस्य धर्मा अतिदेशात्प्राप्यन्ते ।

पार्वणे च यद्यपि "पितृभ्यो दद्यात्"इति लिङ्गसमवायगौणपितृशब्दोपेतविधिविहितेन पितृपितामहप्रपितामहदेवत्याभ्यासत्रयसमुदायात्मकेन प्रकरणलब्धधर्मणैकेन श्राद्धसमुदायिना सहैकप्रयोगवचनातिदेशप्राप्तधर्मविशिष्टं मातामहादिदेवत्याभ्याससमुदायात्मकं समुदाय्यन्तरमपि श्राद्धं "मातामहानामप्येवम्" इत्यादिना विहितम् । तथापि तस्यातिदेशतो धर्मग्राहित्वेन भिक्षुकत्वान्न हि भिक्षुको भिक्षुकान्तराद्याचितुमर्हति सत्यन्यस्मिन्नभिक्षुक इति न्यायेन तदीयधर्मातिदेशानौचित्यात्पित्रादिश्राद्धरूपस्यैव समुदायिनो धर्माणामतिदेशः । एकसमुदायिविकारे च समुदाय्यन्तरं नैवातिदिश्यते कर्मणस्त्वप्रवृत्तित्वादिति न्यायात् । तेन यद्यपि श्राद्धान्तरेषु मतामहादीनामतिदेशतो न प्राप्तिः सौर्यादिष्विवाग्नीषोमादीनाम् । तथापि—

"पितरो यत्र पूज्यन्ते तत्र मातामहा ध्रुवम् ।
अविशेषेण कर्त्तव्यं विशेषान्नरकं व्रजेत् ॥

(१) कर्षूसमन्वितं मुक्त्वा तथाद्यं श्राद्धषोडशम् ।
प्रत्याब्दिकं च शेषेषु पिण्डाः स्युः षडिति स्थितिः" ॥

---

(१) कर्षूर्गर्त्तस्तत्समन्वितं श्राद्धमष्टकान्वष्टकाश्राद्धम् । तद्विहायेत्यर्थः । मलिनमध्यमोत्तमभेदैः षोडशश्राद्धानि त्रिविधानि । तत्राद्यस्य मलिनषोडशश्राद्धस्य स्वरूपं यथा गरुडपुराणे ( सारोद्धारे )—

'स्थाने द्वारेऽर्धमार्गे च चितायां शवहस्तके ।
अस्थिसंचयने षष्ठा दशपिण्डा दशाह्निकाः ॥ ( १२ अ० ५८ श्लो०)
मलिनं षोडशं चैतन्मया ते परिकीर्तितम्" ॥ इति ।

मध्यमाख्यस्य षोडशश्राद्धस्यापि स्वरूपं तत्रैवेदं वर्णितम्—

"प्रथमं विष्णवे दद्याद् द्वितीयं श्रीशिवाय च ।
याम्याय परिवाराय तृतीयं पिण्डमुत्सृजेत् ॥ ६० ॥
चतुर्थं सोमराजाय हव्यवाहाय पञ्चमम् ।
कव्यवाहाय षष्ठं च दद्यात्कालाय सप्तमम् ॥ ६१ ॥
रुद्राय चाष्टमं दद्यान्नवमं पुरुषाय च ।
प्रेताय दशमं चैवैकादशं विष्णवे नमः ॥ ६२ ॥
द्वादशं ब्रह्मणे दद्याद्विष्णवे च त्रयोदशम् ।
चतुर्दशं शिवायैव यमाय दशपञ्चकम् ॥ ६३ ॥
दद्यात्तत्पुरुषायैव पिण्डं षोडशकं खग ।
मध्यं षोडशकं प्राहुरेतत्तत्त्वविदो जनाः" ॥ ६४ ॥ इति ।

एते सर्वेऽपि पिण्डा एकादशाहे विष्णुपूजोपक्रमे प्रदीयन्त इति प्रत्येतव्यम् । अन्त्यस्योत्तमाख्यषोडशश्राद्धस्य तु वर्णनमित्थं लिखितं तत्रैव । तद् यथा—

"द्वादश प्रतिमासेषु पाक्षिकं च त्रिपाक्षिकम् ।
न्यूनषाण्मासिकं पिण्डं दद्यान्न्यूनद्वादशिकं तथा ॥ ६५ ॥
उत्तमं षोडशं चैतन्मया ते परिकीर्तितम्" ॥ इति ।

इदं षोडशश्राद्धत्रयं सपिण्डीकरणादर्वाग् भवति । द्वादशाहदिन एव सपिण्डीकरणपक्षे तु मध्यमोत्तमे षोडशश्राद्धे एकादशाहदिन एव तन्त्रेण परिसमाप्येते ।

इत्यादिवचनैरेव यथाश्राद्धान्तरेषु मातामहादिश्राद्धस्यापि प्राप्तिस्तथा त्रयोदश्यामपि तत एव तस्यापि प्राप्तेः कथमेकवर्ग-यजनस्य प्रसक्तिर्यस्यायं प्रतिषेधः।

केचित्तु प्रत्याब्दिकाद्यतिरिक्तेषु सर्वेषु त्रिपुरुषश्राद्धेषु दर्श-श्राद्धातिदेशादेव मातामहादिप्राप्तिं वदन्ति। तथाहि भवेत्पूर्वोक्तो न्यायो यद्यभ्यासत्रयसमुदायात्मकात्पित्रादिश्राद्धादन्यत्तादृशं माता-महादिश्राद्धं नाम कर्म स्यात्तच्च तदा स्याद्यदि"अमावास्यायां पितृभ्यो दद्यात्"इति पितृशब्दो जनकपुरुषवचनो बहुवचनान्वयार्थं च पिता-महप्रपितामहावेव लक्षयेत्। तदा हि मातामहादिश्राद्धस्य तत्राविहि-तत्वादगत्या मातामहानामप्येवमिति विशिष्टविधिरेव कर्मभेदापादक आपद्यते।

न त्वेवमस्ति नायं पितृशब्दो जनकपुरुषपरो लक्षणापत्तेः। नापि वसुरुद्रादित्याग्निष्वात्तादिदिव्यपितृपरः "स्वधा पितृभ्यः" इतिवत्। नामगोत्राद्यन्वयविधानात्। किन्तु सपिण्डीकरणान्त-श्राद्धजन्यावस्थाविशेषवचनो मन्त्रगतपितृशब्दवत्। ते च सर्व एव देवताभूताः पितृशब्देनैव चोद्देष्टव्या इति।

यद्यप्येतावन्मात्रालोचनया प्रसक्तं तथापि "पितरिदं तेऽर्घ्यम्, शुन्धन्तां पितरः" इत्यादिमन्त्राम्नानान्मातामहानामप्येवमित्याद्युक्तेश्च पित्रादीनां त्रयाणां मातामहादीनां च त्रयाणां देवतात्वं पित्रादिशब्दै-श्चोद्देश इत्यवगम्यते। तेन "पितृभ्यो दद्यात्"इत्युपदेशेनैवावस्थाविशेष-रूपसामान्यवचनेनापि पित्रादिमातामहादित्रिकत्रिकपरेण षण्णां देवतानां विधानात्तावदभ्याससमुदायात्मकमिदमेकमेव श्राद्धम्। मातामहानामप्येवमिति तु न धर्मातिदेशः। एककर्मणि ऐन्द्राग्नैन्द्र-प्रदानवत्प्रकृतिविकृतिभावासंभवात्। किन्तु तद्वदेवसर्वाभ्यासेषु समानविधानानामेव धर्माणां केषुचिदभ्यासेपूक्तस्य प्रयोगप्रकार-

स्येतरेषु लाघवार्थं संक्षेपेणैव प्रदर्शनमेवम्। "इतरे अपि सवने" इत्यादिवत्। अत एव याज्ञवल्कीयादिषु द्विरेवमभिधानम्। धर्मातिदेशार्थत्वे एकेनैव सकलेत्थंभावातिदेशसिद्धेस्तद्वैयर्थ्यात्। पितॄनीति सामान्याभिधानेऽपि वृद्धौ श्राद्धत्रयं द्रष्टव्यमिति "वृद्धौ नान्दीमुखान् पितॄन् यजेत" इति योगीश्वरवचनगतमिताक्षरापर्यालोचनयापि पितृशब्दोऽवस्थाविशेषवचन एव गम्यते। पितृमातृमातामहाद्यनुस्यूतस्य तदतिरिक्तस्य सामान्यस्यासंभवादिति।

तदेतदपेशलम्। "वृद्धौ श्राद्धत्रयं स्मृतम्" "तन्त्रं वा वैश्वदेविकम्" इत्यादिवचनेभ्यः श्राद्धभेदप्रतीतेः। तस्य च पित्रादित्रययागवन्मातामहादित्रययागस्यापि तेनैव विधिना विधानेऽनुपपत्तेः। कर्मभेदस्य विधिभेदाधीनत्वात्। विध्यैक्येऽपि संख्यान्यायेन न्यायसुधाकारमतेनैतादृशगुणभेदेनापि कर्मभेदाभ्युपगमे पित्रादित्रयेऽपि प्रत्येकं कर्मभेदापत्तिः। इष्टापत्तौ श्राद्धैक्यव्यवहारस्य राजसूयादिवत्समुदायनामत्वेनोपपत्तावपि सर्वत्राविवक्षितसाहित्यानां समुदायिनामेवेति कर्त्तव्यतान्वयात्पित्रादित्रयेऽपि प्रयोगकाले वैश्वदेवादीनामारादुपकारिणां तन्त्रत्वापत्तेः स्मृतिशिष्टव्यवहारविरोधः। तुल्यत्वे हि सति किमिति वर्गद्वय एव तन्त्रत्वम्। स्मृतिषु "तन्त्रेण करिष्ये" इत्यादिरूपेण शिष्टैश्च व्यवह्रियते नैकवर्गेऽपि। तेनैकवर्गे कर्मैक्यमेवाभ्यासभेदमात्रं वर्गद्वये तु कर्मभेद एवेति गम्यते। अत एव मिताक्षरायां दर्शश्राद्धप्रकरणे यदि द्वावेव ब्राह्मणौ लब्धौ तदा दैवे पात्रं प्रकल्प्य पितृवर्गे मातामहवर्गे चैकैकं नियुज्यादित्युक्त्वा तत्र प्रमाणत्वेन—

"यद्येकं भोजयेच्छ्राद्धे दैवं तत्र कथं भवेत्।
अन्नं पात्रे समुद्धृत्य सर्वस्य प्रकृतस्य च॥
देवतायतने कृत्वा ततः श्राद्धं प्रवर्त्तयेत्।
प्रास्येदन्नं तदग्नौ तु दद्याद्वा ब्रह्मचारिणः"॥

इति वचनमुदाहृतम् । एवं हि वदन् श्राद्धत्वं वर्गद्वये प्रत्येक-पर्याप्तमेकवर्गे च व्यासक्तमिति दर्शयति । किं च मातामहश्राद्धे शुन्धनमन्त्रस्य पिण्डपितृयज्ञप्रकृतिकत्वादूहोपपत्तावपि श्राद्धद्वय-स्यैकविधिविधेयत्वेनैककर्मत्वेऽर्घ्यमन्त्रादिषूहो न स्यात् । कर्मणि प्रकृतिविकृतिभावासंभवात् । तेनैवमादिव्यवहारोपपत्तये त्रयः पित्र्य इतिवत् जनकपुरुषवचनलिङ्गसमवायगौणपितृशब्दोपेतेन "पितृभ्यो दद्यात्"इत्येतेन पित्रादित्रिकदेवत्यश्राद्धमात्रविधिः, मातामहादि-श्राद्धस्य त्वातिदेशिकधर्मविशिष्टस्य मातामहानामप्येवमिति पृथगेव विधिरित्येव वक्तव्यम् ।

आश्वलायनादिसूत्रेषु तु पित्रादित्रयमात्रदेवत्यार्घ्यदानस्य च भोज्यब्राह्मणान्वयित्वात्पित्रादिभ्य एव त्रिभ्यो भोजनदानपिण्डपितृ-यज्ञकल्पेन तेभ्य एव पिण्डदानं च स्पष्टमुक्तम् । न तु मातामहा-दिभ्यः ।

वायुपुराणेऽपि पिण्डदानरूपप्रधानं पित्रादिभ्य एवोक्तम् । "मधुसर्पिस्तिलयुतांस्त्रीन् पिण्डान्निर्वपेद् बुधः"इति ।

जातूकर्ण्येनापि "कृत्वावनेजनं दद्यात्त्रीन् पिण्डांस्तु यथा-विधि"ति । "दर्शवत्स्यात्त्रयोद्देशः सपिण्डीकरणे कृते" इति व्यास-वचनादप्याब्दिके दर्शश्राद्धप्रकारातिदेशकात्तत्र त्रिपुरुषोद्देश्यकमेकं श्राद्धं प्रतीयते । द्विरुक्तिस्तु याज्ञवल्कीयादिषु स्वस्वेतिकर्त्तव्यता-विशिष्टब्राह्मणभोजनपिण्डदानरूपप्रधानद्वयस्य प्रत्येकं विध्यर्था । यद्यपि प्रथमोक्तेः पूर्वपितृवर्गेऽपि ब्राह्मणभोजनं नोपदिष्टं तथापि ब्राह्मणोपवेशनादेस्तद्भोजनाङ्गत्वात्तद्विधिनैवोपक्रान्तविधिकस्य तस्य संभवति मातामहादिसम्बन्धित्वेन विधिः । श्राद्धं कुर्यादित्यनुषङ्गा-ध्याहारान्यतराभिधानं तु हेमाद्रेर्यत्रैकैव मातामहानामेवमित्युक्ति-स्तदभिप्रायम् ।

अत एव पुलस्त्यवचनम्—

"मातुः पितरमारभ्य त्रयो मातामहाः स्मृताः।
तेषां तु पितृवच्छ्राद्धं कुर्युर्दुहितृसूनवः" ॥ इति।

कात्यायनसूत्रे तु पितृभ्यः पितामहेभ्यः प्रपितामहेभ्यो मातामहेभ्यः प्रमातामहेभ्यो वृद्धप्रमातामहेभ्य इति तुल्यवन्मन्त्राम्नानात् त्रींस्त्रीन्पिण्डान् दद्यादिति वीप्सायुक्तैकषट्पिण्डदानविधेश्च तद्वशादेव चाविशेषादुभयेषां पित्रादीनां मातामहादीनां चेत्येवं कर्कोपाध्यायेन व्याख्यातात् "अपरपक्षे श्राद्धं कुर्वीत" इत्युत्पत्तिविधेश्च वर्गद्वयस्याप्येक एव श्राद्धविधिरिति प्रतीयते।

बृहस्पतिस्मृतावपि—

"सर्वस्मात्प्रकृतादन्नात्पिण्डान्मधुतिलान्वितान्।
पितृमातामहादीनां दद्याद्गृह्यविधानतः" ॥ इति।

व्यासस्मृतावपि—"पितॄन्मातामहांश्चैव द्विजः श्राद्धेन तर्पयेत्" इति। देवलस्मृतावपि—

"एकेनापि हि विप्रेण षट्पिण्डं श्राद्धमाचरेत्।
षडर्घ्यान्दापयेत्तत्र षड्भ्यो दद्यात्तथाशनम् ॥
पिता भुङ्क्ते द्विजकरे मुखे भुङ्क्ते पितामहः।
प्रपितामहश्च तालुस्थः कण्ठे मातामहः स्मृतः ॥
प्रमातामहस्तु हृदये वृद्धो नाभौ तु संस्थितः।
एवमप्याचरेच्छ्राद्धं षड्दैवत्यं महामुने ॥
विभक्तं कारयेद्यस्तु पितृहा स प्रजायते" इति।

मत्स्यपुराणेऽपि पिण्डान्वाहार्यकं श्राद्धं प्रकृत्य—

"प्राचीनावीतिना कार्यमतः सर्वं विजानता।
षट्कं तस्माद्धविःशेषात्पिण्डान् दद्यात्तथोदकम् ॥
दद्यादुदकपात्रेषु सतिलं सव्यपाणिना" इति।

अत्र च पक्षे मातामहानां चैवमित्युक्तेः प्रकारप्रदर्शनार्थत्वेन पूर्ववदुपपत्तावप्यूहविषयाणां च मन्त्राणां केषांचित्कातीयसूत्रेऽदर्शनेऽपि वर्गद्वयश्राद्धस्यैकोत्पत्तिविधिविषयत्वे एकवर्ग इव वर्गद्वयेऽपि तुल्यरूपकर्मापत्तेरेकवर्गेऽभेदव्यवहारस्य, वर्गद्वये च भेदव्यवहारस्य, कथंचिदप्युपपादयितुमशक्यत्वात्तदुपपत्तये एकेनापि विधिना वचनान्तरवशादेकैकवर्गेऽभ्याससमुदायात्मकं वर्गद्वये च परस्परं भिन्नं विलक्षणमेव कर्मोत्पाद्यत इत्यवश्यमङ्गीकर्तव्यम्।

दृष्टं च न्यायवचनस्वरसप्राप्तस्याप्यर्थस्यान्यथाकरणमनन्यगतिकप्रमाणान्तरवशाद्वेदेऽपि "स्रुवेण पार्वणौ जुहोति" 'अग्नीषोमाभ्यामाज्यभागौ यजति, "आज्येन शेषं संस्थापयति"इत्यादिषु। किमुत संक्षेपलाघवादिप्रधानकपुरुषप्रणीतेषु स्मृतिसूत्रवचनेषु।

तेन केषुचित्तद्ग्रन्थेषु पित्रादित्रययागाभ्याससमुदायात्मकमेकं श्राद्धं पृथगुत्पत्तिपूर्वकं धर्मोपदेशयुक्तं विधाय पश्चाद्वाचनिकधर्मातिदेशयुक्तं तादृशमेव मातामहादिश्राद्धं पृथगेव विधीयते। सहप्रयोगता च तस्य पितृश्राद्धेन सह वैश्वदेविकतन्त्रपक्षोक्त्या तत्प्रयोगमध्यविधानेन च ज्ञाप्यते।

केषुचित्तु तादृशमेव कर्मद्वयं सहैवोत्पाद्य पश्चादुभयसम्बन्धेन धर्मा उपदिश्यन्ते। तत्र सह प्रयोगत्वं स्पष्टमेव। तत्रापि पितृश्राद्धप्रकारस्य सविस्तरं मातामहश्राद्धप्रकारस्य च मातामहानां चैवमिति संक्षेपेणाभिधानेन मातामहश्राद्धस्य पितृश्राद्धान्न्यग्भावसूचनादगुणपीति न्यायेन विकृतिश्राद्धेषु पितृश्राद्धधर्माणामेवातिदेशः।

केषुचित्त्वतिसंक्षेपप्रधानेषु पितृश्राद्धमेव सप्रकारमुपदिश्य ग्रन्थान्तरोक्तमुपजीव्य वा "पितरो यत्र पूज्यन्ते"इत्यादि प्रकारेण तत्सहप्रयोगस्य मातामहश्राद्धस्य तदुपजीवनेन विधानम्।

केषुचित्तु तदपि न, केवलं पितृश्राद्धस्यैव विधानमित्येवं सत्यपि ग्रन्थानां प्रस्थानभेदे पूर्वोक्तस्य वर्गद्वयगतस्य भेदाभेदव्यवहारस्य सर्वग्रन्थानुष्ठातृसिद्धस्य संरक्षणार्थं कर्म पूर्वोक्तरीत्यैकरूपमेवाङ्गीकर्त्तव्यम्। "वृद्धौ नान्दीमुखान्पितॄन्"इति तु पितृशब्दस्य मातृमातामहश्राद्धयोर्ग्रन्थान्तरादेव प्राप्तिमङ्गीकृत्य जनकादित्रिकमात्रपरतया "आमावास्यायां पितृभ्यो दद्यात्"इतिवत्संभवद्व्याख्यानस्यापि यन्मिताक्षरायां सामान्यपरतया व्याख्यानं तत् "षड्भ्यः पितृभ्यः" इत्यादिषु तस्य तत्परतादर्शनाच्छ्राद्धत्रयस्यापि योगीश्वरवचनारूढत्वप्रदर्शनार्थम्। तथा पितुर्वर्गत्रये प्रत्येकं भिन्नमभ्याससमुदायात्मकं कर्मत्रयमेवोपदिश्यते श्राद्धत्रयमिति व्यवहारात्।

तेन पितृमातामहश्राद्धयोर्भेदेऽवश्यंभाविनि विकृतिश्राद्धेष्वेकस्य पितृश्राद्धस्यैव धर्माणामतिदेशस्योचितत्वान्मातामहानामतिदेशतस्तत्राप्राप्तेर्यच्छ्राद्धान्तरेषु पार्वणातिदेशेन मातामहप्राप्तिमभिधाय "पितरो यत्र पूज्यन्ते" इत्यादिवचनतस्तत्प्राप्त्यभिधानं हेमाद्र्यादीनां पितृव्याणां च तत्पूर्वापरितोषादेवेति श्राद्धान्तरेष्विव त्रयोदशीश्राद्धेऽपि वचनादेव मातामहानामपि प्राप्तेरप्रसक्तस्यैकवर्गयजनस्य कथं तत्र प्रतिषेधः।

अत्र हेमाद्रिरित्थं समाधत्ते। इतरश्राद्धेष्विव त्रयोदशीश्राद्धेऽपि "पितरो यत्र पूज्यन्ते" इत्यनेनैवैकवर्गयजननिषेधसिद्धावपि तत्र पुनस्तस्य निषेधो दोषविशेषार्थः। स च "न तृप्तास्तत्र वै यस्य" इति वाक्यशेषे दर्शितः। यद्वा श्राद्धे कुण्डगोलकादिनिषेधवद्भ्रमप्रसक्तस्य तस्यायमत्र प्रतिषेधः। यथा च तत्र ब्राह्मणाद्ब्राह्मण्यामुत्पन्नो ब्राह्मण एव, यथा गोर्गवि गौरश्वाद्वडवायामश्व इति न्यायाभासमूलको भ्रमस्तथात्राप्यङ्गविषयस्याशक्यत्यागन्यायस्य प्रधानैकदेशेऽपि प्रवृत्तिरिति भ्रममूलक इति।

यथा तूच्यते—मिताक्षरायां गृह्यभाष्यादिषु च मातामहश्राद्धस्या-नावश्यकत्वं तावदमावास्यादिषूक्तम् । तत्र गृह्यभाष्याद्युक्तेर्मूलं—

"बह्वल्पं वा स्वगृह्योक्तं यस्य कर्म प्रकीर्त्तितम् ।
तस्य तावति शास्त्रार्थे कृते सर्वः कृतो भवेत्" ॥

इति तत्रैव लिखितं वचनं लभ्यते । मिताक्षरोक्तिस्तु याज्ञवल्क्यादिस्मृतिषु गोभिलकात्यायनादिसूत्रेषु च नित्यवच्छ्रवणात्सर्वप्रामाणिकनिबन्धकारादृतेभ्यः "कर्षूसमन्वितम्" इत्यादिपरिशिष्टादिवचनेभ्यश्च प्रत्यक्षेभ्यो मातामहश्राद्धस्यापि पितृश्राद्धवदमावास्यादिष्वावश्यकत्वावगतेर्निर्मूलेव प्रतिभाति । तत्र त्रयोदश्यामेकवर्गश्राद्धनिषेधोऽयं "वृद्ध्यादिषु च षड्भ्यः पितृभ्यस्तदनु श्राद्धदानमुपक्रमेत्" इत्यादिमातामहश्राद्धपुनर्वचनमेव मूलम् । क्वचिद्धि निषेधात्पुनर्वचनाच्चान्यत्रानावश्यकत्वं स्फुटं गम्यत एव ।

अविशेषेणेति तु वचनं येन मातामहेन सह मातुः सपिण्डीकरणं कृतं तद्विषयम् । पुत्रेण हि साधारणेषु श्राद्धकालेषु पितुरिव मातुरपि तृप्तिरवश्यं कर्त्तव्या । न च मातामहेन सह सापिण्ड्ये तस्मै दानं विना मातुस्तृप्तिहेतुभागलाभः संभवति ।

"एकमूर्त्तित्वमायाति सपिण्डीकरणे कृते ।
पत्नी पतिपितॄणां तु तस्मादंशेषु भागिनी" ॥

इति वचनादाहत्य वचनं विना तस्यै पृथगन्नदानासंभवात् । पतिपित्रंशभागित्वस्य च सपिण्डनव्यवस्थया व्यवस्थितत्वात् । पितामह्यादिभिः सापिण्ड्ये तु पत्यंशभागित्वमेव ।

"एकत्वं सा गता भर्त्तुः पिण्डे गोत्रे च सूतके ।
न योषिद्भ्यः पृथग्दद्यादवसानदिनादृते ॥
स्वभर्त्तृपिण्डमात्राभ्यस्तृप्तिरासां यतः स्मृता"

इति च सामान्यवचनात्। स्त्रियास्तत्पित्रा सह सपिण्डीकरणे एतदपवादकपित्रंशभागित्वोक्तिवत्पितामह्यादिभिः सह तस्मिन्नेतदपवादिकायास्तदंशभागित्वोक्तेरभावाच्च।

अपुत्रसंतानमातामहविषयं च। तादृशमातामहश्राद्धस्य दौहित्रेणावश्यं कर्त्तव्यत्वात्। "पौत्रदौहित्रयोर्लोके विशेषो नैव विद्यते" इति वचनात्। तस्माद्यत्र केवलपितृवर्गनिषेधरूपेण विधिरूपेण वा मातामहपुनर्वचनं तत्रैव मातामहश्राद्धं नित्यमन्यत्रानित्यमिति तन्नित्यत्वार्थस्त्रयोदश्यामेकवर्गनिषेधः। "श्राद्धं नैवैकवर्गस्य" इत्येतत्समानार्थं हेमाद्र्युदाहृतं वचनान्तरमपि—

"नेच्छेत्त्रयोदशीश्राद्धं पुत्रवान् यः सुतायुषे।
एकस्यैव न कुर्यात्स पार्वणं तु समाचरेत्" ॥ इति।

एकस्यैव वर्गस्य। पार्वणं पर्वणि दर्शे क्रियमाणेनामावास्याश्राद्धेन सदृशं षड्देवत्यमित्यर्थः। तत्रैव मातामहानामप्येवमिति पित्रादिश्राद्धसहप्रयोगस्य मातामहश्राद्धस्योत्पत्तेः।

केचित्तु वदन्ति "न तृप्तास्तत्र ये यस्य"इतीज्यमात्रातृप्तिप्रयुक्तदोषश्रवणाद्वर्गाणामिज्यानां पित्रादीनां मात्रादीनां मातामहादीनां पितृव्याणां भ्रातॄणां मातुलानां श्वशुराणां गुरूणां दुहितॄणां भगिनीनां भार्याणां पितृष्वसॄणां मातृष्वसॄणां सख्यादीनां मध्ये एकस्य कतिपयस्य वर्गस्य श्राद्धं त्रयोदश्यां न कुर्यादिति निषेधव्याजेन सर्वेषां तत्र श्राद्धे "श्राद्धं नैवैकवर्गस्य" इत्यनेन विहिततत्पार्वणैकोद्दिष्टमध्ये केन प्रकारेण कर्त्तव्यमित्यपेक्षायाम्—

"सपिण्डीकरणादूर्ध्वं पित्रोरेव हि पार्वणम्।
पितृव्यभ्रातृमातॄणामेकोद्दिष्टं सदैव हि ॥
सपिण्डीकरणादूर्ध्वमेकोद्दिष्टं विधीयते।
अपुत्राणां च सर्वेषामपत्नीनां तथैव च ॥

भ्रात्रे भगिन्यै पुत्राय स्वामिने मातुलाय च।
पितृव्यगुरवे श्राद्धमेकोद्दिष्टं नापार्वणम्॥
अपुत्रा ये मृताः केचित् स्त्रियो वा पुरुषास्तथा।
तेषामपि च देयं स्यादेकोद्दिष्टं न पार्वणम्"॥

इत्यादिभिर्जातूकर्ण्यप्रचेतआपस्तम्बादिवचनैः पितृमातृमाता-महातिरिक्तानां सर्वेषां मृताहमहालयगयादिष्वेकोद्दिष्टप्राप्तौ "एकस्यैव न कुर्यात्स पार्वणं तु विधीयते" इत्यनेन "न गया गिरेति-ब्रूयात्" इतिवन्निषेधानुवादपुरःसरं पार्वणप्रकारो विधीयते। तेन त्रयोदश्यामस्यां पितृव्यादीनामप्यपुत्राणां पित्रादिवत्त्रैपुरुषमेव श्राद्धं कर्त्तव्यम्।

पुत्रवतां तु श्राद्धमेव तेषां न भवति। एवं तीर्थे महालये च। "पुत्रेषु विद्यमानेषु नान्यं वै कारयेत्स्वधाम्" इतिवचनात्। गयायां तु स्वपित्राद्युद्देशेन गतस्य पुत्रवतामपि पितृव्यादीनां भवति "यन्नाम्ना पातयेत्पिण्डं तन्नयेद् ब्रह्म शाश्वतम्" इति पुनर्वचनस्यैवमर्थत्वादिति। अन्ये तावद्धस्तव्यं त्रयोदश्यां केन प्रमाणेन पितृव्यादिश्राद्धप्राप्तिरिति। यदुक्तं "श्राद्धं न चैकवर्गस्य" इत्यनेनैव विधेयत्वाज्जेनेति।

तदयुक्तम्—श्रुतेर्निन्दासमभिव्याहाराच्च निषेधस्यैवात्र वाक्या-र्थत्वात्। न च वाच्यम्—"पञ्चपञ्चनखा भक्ष्याः" इत्यादिविधिषु यथालक्षणयेतरनिवृत्तिर्वाक्यार्थस्तथात्र विधिरेकवर्गनिन्दापि करण-स्तुत्यर्थैवेति। पितृमातामहवर्गयोर्मध्ये आकर्षकत्वाद्विना पितृवर्ग-मात्रस्यैव पार्वणैकोद्दिष्टदेवतानां मध्ये पितृव्यादिश्राद्धप्राप्त्यैकवचना-मात्रयजनस्यभावेन निषेधस्यैवात्मलाभसम्भवात्। पितृवर्गमात्रय-जनप्रतिषेधेन च सामान्यवचनाद्विना [illegible] वर्गयजनस्यैव लक्षयितुं शक्यत्वात्। किन्तु [illegible]। एकवर्गस्य न कुर्यात्किन्तु वर्गद्वयस्यापि कुर्यादिति अपि च

पितृव्यादिसाधारण्येन कतिपयप्रतिषेधस्य तथैव प्रापणस्य चानुपपत्तिः। न हि पितृव्यादीनां वर्गरूपत्वम्। तद्धि अग्निषोमादिवत्समुच्चितदेवतात्वे स्यात्। पित्रादिवद्वा प्रत्येकदेवतात्वेऽप्यभ्यासमात्रभेदेन कर्मैक्ये। न च पितृव्यमातुलादिषु द्वयमप्येतदस्ति। यद्यपि च गयामहालयादिषु श्राद्धे विहिते तस्य च भेदप्रमाणाभावादभेदेतिदेशसामामान्यवचनाभ्यां पितृमातामहवर्गयोरेव देवतात्वे प्राप्यमाणे—

"स्वेन भर्त्रा सह श्राद्धं माता भुङ्क्ते सदैव हि।
क्षयाहं वर्जयित्वैकं स्त्रीणां नास्ति पृथग्विधिः॥
केचिदिच्छन्ति नारीणां पृथक् श्राद्धं द्विजोत्तमाः।
आचार्यगुरुशिष्येभ्यः सखिज्ञातिभ्य एव च॥
सर्वेभ्यश्च पितृभ्यश्च तत्पत्नीभ्यस्तथैव च।
पिण्डानेभ्यो गयायां तु दद्याद्रुद्रपदे द्विजः॥
तीर्थेषु चैव सर्वेषु माघमासे मघासु च।
एकस्मिन् ब्राह्मणे सर्वानाचार्यादीन् प्रपूजयेत्॥
दौहित्रपुत्रदाराश्च ये कनिष्ठाः सहोदराः।
निःसन्तानमृता ये च तेभ्योऽप्यन्नं प्रदीयते"॥

इत्यादिचतुर्विंशतिमतभविष्यादिवचनैर्मात्रादिपितृव्यादीनामपि देवतात्वेन विधानात्।

"सपिण्डीकरणादूर्ध्वं पित्रोरेव हि पार्वणम्।
पितृव्यभ्रातृमातॄणामेकोद्दिष्टं सदैव हि"॥

इति च जातूकर्ण्यवचनेन तत्र व्यवस्थया पार्वणैकोद्दिष्टप्रकारविधानात्तत्तत्प्रकारवदभ्यासप्रचयात्मकमेकमेव श्राद्धमिति द्वितीयप्रकारेण वर्गरूपत्वं पितृव्यादीनामपि तत्र वक्तुं शक्यते तथा त्रयोदशीश्राद्धेऽपि कथंचित्तेषां देवतात्वप्राप्तौ। तथापि "अपरपक्षे श्राद्धं

कुर्वीत" "षड्भ्यः पितृभ्यस्तदनु श्राद्धदानमुपक्रमेत्"इत्यादिवद्भेदाभेदव्यवहारोपपत्तये पूर्वोक्तेन न्यायेन प्रतिवर्गमभ्याससमुदायात्मकानि परस्परं च भिन्नानि त्रीणि पार्वणानि, प्रतिदेवतं भिन्नान्येकोद्दिष्टानि च गयामहालयादिषु श्राद्धोत्पत्तिविधिना देवताविध्येकवाक्यतापन्नेन विधीयन्त इत्येव युक्तमिति न क्वापि पितृव्यादिनां वर्गरूपत्वम्। तेन नैकस्य पित्रादिवर्गस्यैव कुर्यात्किन्तु मातामहादिवर्गस्यापीत्ययमेव "श्राद्धं न चैकवर्गस्य" इतिवचनस्यार्थो न तु पितृव्यादीनामपीति। "न तृप्ताः" इति निन्दापि मातामहश्राद्धाकरणस्यैव तत्करणप्रशंसापरेति। तथा चानेन वचनेन न तावत्त्रयोदश्यां पितृव्यादिश्राद्धप्राप्तिः। चतुर्विंशतिमतादिवचनैस्त्वत्र तत्प्राप्तिरनाशङ्क्यैव। महालयश्राद्धात्त्रयोदशीश्राद्धस्य भेदात्।

एवं त्रयोदश्यां पितृव्यादीनां श्राद्धस्यैव प्राप्त्यभावे "एकस्यैव न कुर्यात्स पार्वणं तु समाचरेत्" इत्यस्य तत्रैकोद्दिष्टप्रकारनिषेधेन पार्वणप्रकारविधायकत्वासंभवात्पितृमातामहश्राद्धयोरपि कृतसपिण्डीकरणस्य पित्रादेर्मासिकाब्दिकातिरेकैकोद्दिष्टनिषेधात्तत्प्राप्त्यभावेन तदर्थकत्वायोगात्पूर्वकृतव्याख्यया "श्राद्धं न चैकवर्गस्य" इत्येतत्समानार्थत्वमेव युक्तम्। पार्वणशब्दस्य च गौणत्वमनुवादत्वाद्युक्तमेव।

न च "न गिरा गिरेति ब्रूयादैरं कृत्वोद्गेयम्" इतिवदत्रापि निषेधभागोऽनुवादः, अयं तु विधिरेवेति वाच्यम्। "नेच्छेत्त्रयोदशीश्राद्धं पुत्रवान् यः सुतायुषे" इति त्रयोदशीश्राद्धनिषेधानुवादेन तद्विषयसमर्पणार्थत्वादस्य समानार्थत्वं च विना तदनुपपत्तेर्निषेधभागस्यैवात्र विधित्वस्य वाच्यत्वात्। अत एव दाक्षिणात्यैरपि सर्वैर्निबन्धृभिस्त्रयोदशीश्राद्धं षड्देवत्यमेवोच्यते न तु तीर्थमहालयादिवद्बहुदेवत्यम्। हेमाद्रिणापि त्रयोदशीश्राद्धप्रयोगप्रकारप्रदर्शनावसरे तथैवोक्तम्।

तेन कृष्णत्रयोदशीमात्रे विद्यमानपुत्रेण गृहिणा "एष्टव्या बहवः पुत्राः" इति "त्रयोदश्यां तु प्रजाः" इति च वचनवशाद्बहुपुत्रलाभेच्छया श्राद्धं न कर्त्तव्यम्। भाद्रकृष्णत्रयोदश्यां तु पुत्रिणां पितृवर्गश्राद्धमात्रेणापि निषेधशास्त्रार्थसिद्धावपि न तावन्मात्रं कर्त्तव्यं किन्तु मातामहवर्गस्याप्यवश्यम्। तथापि पिण्डदानरूपं प्रधानं न कर्त्तव्यं किन्तु ब्राह्मणभोजनमात्रं मधुघृतपलपायसादिना विशिष्टलाभेन पुत्रवद्गृहिभिरिति सामान्यविशेषरूपविधिनिषेधवचनानां व्यवस्था सिद्धा।

## कृष्णपक्षे चतुर्दशीश्राद्धविवेचनम्।

अथ कृष्णचतुर्दश्यां किञ्चिन्निरूप्यते। तत्र कृष्णपक्षसामान्यनिमित्तके श्राद्धे चतुर्दशीवर्जनस्य पूर्वमुक्तत्वात्तेनापि पक्षेण यस्यां कस्याञ्चिच्चतुर्दशीवर्जितायां तिथौ मृतस्य पित्रादीनां श्राद्धे कृतेऽपि चतुर्दश्यां शस्त्रादिभिरुत्क्रमणं प्राप्तानां तेषां पुनः श्राद्धं कर्त्तव्यमेव। तथा च मरीचिः—

"विषसर्पश्वापदाहितिर्यग्ब्राह्मणघातिनाम्।
चतुर्दश्यां क्रिया कार्या अन्येषां तु विगर्हिता" ॥ इति।

विषादिभिर्ब्राह्मणान्तैर्घाता येषां तेषामित्यर्थः। न तु तान्ये घ्नन्तीति। विषेऽसम्भवात्। "तेषां ये ब्राह्मणैर्हताः" इति ब्रह्मपुराणदर्शनाच्च। विषादिग्रहणं शस्त्रादीनामप्युपलक्षणम्।

"अपमृत्युर्भवेद्येषां शस्त्रमृत्युरथापि वा।
उपसर्गमृतानां च विषमृत्युमुपेयुषाम्॥
वह्निना च विदग्धानां जलमृत्युमुपेयुषाम्।
सर्पव्याघ्रहतानां च शृङ्गैरुद्बन्धनैरपि॥
श्राद्धं तेषां प्रकर्त्तव्यं चतुर्दश्यां नराधिप"॥

इति हेमाद्र्युदाहृतनागरखण्डवचनात् । अपमृत्युरकालमृत्युरप्राप्तजरसामेव मृत्युः । अत एव मार्कण्डेयपुराणम्—

"युवानः पितरो यस्य मृताः शस्त्रेण वा हताः ।
तेन कार्यं चतुर्दश्यां तेषां तृप्तिमभीप्सता" ॥ इति ।

पितर इति न जनकादय एव किन्त्ववस्थाविशेषरूपपितृत्वापन्नाः सर्वेऽपि । "युवानस्तु गृहे यस्य मृतास्तेषां प्रदापयेत्" इति वायुपुराणे सामान्याभिधानात् । तेन पुत्रभ्रात्रादीनामपि तादृशानां भवति । उपसर्गो ग्रहभूताद्यावेशः । शृङ्गैः शृङ्गिभिः ।

"वृक्षारोपणलोहाद्यैर्विद्युज्ज्वालाविषादिभिः ।
नखिदंष्ट्रिविपन्ना ये तेषां शस्ता चतुर्दशी" ॥

इति प्रचेतोवचने नखादिमतां ग्रहणात् । अत्रादिशब्देन विद्युद्विषादिसाहचर्यात्प्रमादमृत्युहेतवो विधिं विना बुद्धिपूर्वमरणप्रवृत्तमृत्युहेतवश्चान्येऽपि गृह्यन्ते । तेनाग्निजलादयोऽपि वचनान्तरोपात्तास्तादृशा एव ग्राह्याः । अत एव नागरखण्डेऽप्युक्तम्—"दुर्मृत्युना मृता ये च संग्रामेषु हताश्च ये" इति ।

ततश्च भर्तृमरणनिमित्तं वह्निप्रवेशेन मृतानां स्त्रीणामसाध्यव्याध्याद्यभिभूतानां चाग्निजलप्रवेशादिभिर्मृतानामिह श्राद्धं न भवति । प्रायोऽनशनाभ्यां तु विधितोऽपि मृतानां भवति ।

"प्रायोऽनशनशस्त्राग्निविषोद्बन्धनिनां तथा ।
चतुर्दश्यां भवेच्छ्राद्धं तृप्त्यर्थमिति निश्चयः" ॥ इति ब्रह्मपुराणात् ।

युद्धमृतानां च । "युद्धहतानां श्राद्धकर्मणि चतुर्दशी प्रशस्ता" इति विष्णुस्मरणात् । "प्रीयन्ते पितरस्तस्य ये च शस्त्रहता रणे" इति वृद्धमनुस्मरणाच्च ।

एतच्च शस्त्रघातादिहेतुकमरणनिमित्तकं कृष्णचतुर्दशीश्राद्धं पित्रादीनामप्येकोद्दिष्टरूपमेव भवति। न तु पार्वणरूपम्। तथा च गार्ग्यः—

"चतुर्दश्यां तु यच्छ्राद्धं सपिण्डीकरणात्परम्।
एकोद्दिष्टविधानेन तत्कार्यं शस्त्रघातिनः" ॥ इति।

सपिण्डीकरणात्परमित्यनेनेदं ज्ञाप्यते। येषामौर्ध्वदेहिकमेव निषिद्धं पतितात्मत्यागिप्रभृतीनां येषां वा सपिण्डीकरणमात्रं प्रतिषिद्धं व्युत्क्रममृतादीनां तेषां यथायोगं नारायणबल्यादिपूर्वकं यावदौर्ध्वदेहिकं सपिण्डीकरणं च न क्रियते तावच्चतुर्दशीश्राद्धमपि न भवति सत्यप्येकोद्दिष्टरूपत्व इति। अपरं च—

"सपिण्डीकरणादूर्ध्वं यत्र यत्र प्रदीयते।
तत्र त्रैपुरुषं कुर्याद्वर्जयित्वा मृताहिकम्" ॥

इति शङ्खवचनात्प्राप्तस्य पार्वणस्यायमपवाद इति। अत एव वृद्धमनुः—

"एकपिण्डीकृतानां तु पृथक्त्वं नोपपद्यते।
सपिण्डीकरणादूर्ध्वमृते कृष्णचतुर्दशीम्" ॥ इति।

भविष्यत्पुराणेऽपि—

"समत्वमागतस्यापि पितुः शस्त्रहतस्य वै।
एकोद्दिष्टं सुतैः कार्यं चतुर्दश्यां महालये" ॥ इति।

समत्वं पूर्वैः सह प्रेतत्वपरित्यागेन पितृत्वरूपं सपिण्डनेन प्राप्तस्य। महालय इति तत्रावश्यकत्वार्थं न तु तत्रैवेदम्। "शस्त्रेण तु तु हता ये वै तेभ्यस्तत्र प्रदीयते" इति याज्ञवल्क्यवचनेन पूर्वलिखितैश्च बहुभिर्वचनैः कृष्णपक्षमात्रे तद्विधानात्।

अत एव च नागरखण्डे—

"कस्माच्छस्त्रहतानां च श्राद्धे प्रोक्ता चतुर्दशी ।
एकोद्दिष्टं कुतश्चात्र कारणं प्रब्रवीहि मे" ॥

इत्यानर्त्तेन पृष्टो भर्तृयज्ञो ब्रह्महिरण्याक्षसम्वादरूपेतिहासमुखेन—

"यच्च शस्त्रहतानां च तस्मिन्नहनि दीयते ।
एकोद्दिष्टं नरैः श्राद्धं तत्ते वक्ष्यामि कारणम् ॥
संख्ये शस्त्रहता ये च निर्विकल्पेन चेतसा ।
युध्यमाना न ते मर्त्ये जायन्ते मनुजाः पुनः ॥
पराङ्मुखा ये हन्यन्ते पलायनपरायणाः ।
ते भवन्ति नराः प्रेता एतदाह पितामहः ॥
संमुखा अपि ये दैन्यं हन्यमाना वदन्ति च ।
पश्चात्तापं च वा कुर्युः प्रहारैर्जर्जरीकृताः ॥
तेऽपि प्रेता भवन्तीह मनुः स्वायंभुवोऽब्रवीत् ।
कदाचिच्चित्तचलनं शूराणामपि जायते ॥
तेषामपि दिने तत्र देयं प्रेतत्वशङ्कया ।
अपमृत्युमृतानां च सर्वेषामेव देहिनाम् ॥
प्रेतत्वं जायते यस्मात्तस्मात्तेषां हि तद्दिनम् ।
श्राद्धार्हं पार्थिवश्रेष्ठ विशेषेण प्रकीर्त्तितम् ॥
एकोद्दिष्टं च कर्त्तव्यं यस्मात्तत्र दिने नरैः ।
सपिण्डीकरणादूर्ध्वं तत्ते वक्ष्यामि कारणम् ॥
यदि प्रेतत्वमापन्नः कदाचित्तत्पिता भवेत् ।
तस्यार्थं तस्य कर्त्तव्यं श्राद्धं तत्र दिने नृप ॥
पितामहाद्यास्तत्राहि श्राद्धं नार्हन्ति कर्हिचित्" ।

इत्यनेन ग्रन्थेन संशयितं निश्चितं वा शस्त्रहतादीनां प्रेतत्वं चतुर्दशीश्राद्धस्वरूपे तदेकोद्दिष्टत्वे च कारणं यदभिहितवान्, तदपि सत्यपि—

"यः कश्चिन्मानवः श्राद्धं स्वपितृभ्यः प्रदास्यति ।
प्रेतपक्षे चतुर्दश्यां नभस्ये मासि संस्थितः" ॥ इति ।

तेनैकोद्दिष्टमेवात्र कर्त्तव्यं न तु पार्वणम् । "पितृपक्षे चतुर्दश्यां कन्यासंस्थे दिवाकरे" इति चोपक्रमोपसंहारयोर्विशेषसंस्पर्शे सामान्यकृष्णचतुर्दशीपरमेव । अर्थवादमात्रं चैतत् । एतच्छ्राद्धस्य आहत्य सपिण्डीकरणोत्तरत्वाभिधानात्सपिण्डीकरणान्तैश्च श्राद्धैः प्रेतत्वनिवृत्तेः । तन्निवर्त्यप्रेतत्वविलक्षणैतन्निवर्त्यप्रेतत्वकल्पनेऽपि सकृच्चतुर्दशीश्राद्धात्तन्निवृत्तौ पुनः पुनस्तत्करणविरोधः । पितृरिति सुतैरिति च यो यस्य श्राद्धेऽधिकारी तस्य तस्योपलक्षणम् । पितृमात्रादित्रिकमध्ये द्वयोः शस्त्रादिभिर्मरण एकोद्दिष्टद्वयं तन्त्रेण भवति । त्रयाणामपि तथात्वे तत्त्रयम् । आहत्य पार्वणविध्यभावेन तत्रापि चतुर्दशीनिमित्तकस्यैकोद्दिष्टस्यैव प्राप्तेः । तन्त्रेण च बहूनामपि स्वकालेऽनुष्ठानसंभवान्न कालासंभवः ।

अपरार्कस्तु—त्रिष्वपि शस्त्रादिहतेषु पार्वणमन्येषु पार्वणमेव मन्यते । तस्यायमभिप्रायः । नैते एकोद्दिष्टविधयः पार्वणबाधेनैकोद्दिष्टं विदधति । किन्तु पार्वणासंभवात्प्राप्तमेव तदनुवदन्ति । पार्वणासंभवश्च शस्त्रहतादिभिन्नानां तत्र श्राद्धनिषेधात् । "अन्येषां तु विगर्हिता" इति "पितामहाद्यास्तत्राहि श्राद्धं नार्हन्ति कर्हिचित्" इति च ।

तत्रेदं वक्तव्यम् । सपिण्डीकरणोत्तरभावित्वेनाप्राप्यभ्यासत्रयसमुदायात्मके वैश्वदेविकादिप्रकारविशेषविशिष्टे पार्वणरूपे श्राद्धे प्राप्ते वचनात्प्रधानभूतकिंचिदभ्यासनिवृत्तावपि तदीयप्रकारविशेषनिवृत्तौ कारणाभावेनैकोद्दिष्टप्रकाराप्राप्तेः । "तस्योक्तः पार्वणे विधिः" इत्यत्र प्राच्यव्याख्यान इव । "एकस्मिन् द्वयोर्वैकोद्दिष्टविधिः" इति तु कस्यचिदपरार्कमतानुसारिणो निबन्धुर्वचः । तेनैकोद्दिष्ट-

विधानाभावे एकपुरुषं द्विपुरुषं वा पार्वणविधिनैव श्राद्धं स्यादिति विषय एवैत एकोद्दिष्टप्रकारस्येति त्रिष्वपि शस्त्रादिहतेष्वेकोद्दिष्टान्येव तावन्त्युचितानि ।

यच्च शूलपाणिना—"कृष्णचतुर्दशीश्राद्धविधायिनां विष्ण्वादिवचनानां पार्वणकालप्रकरणगतत्वादिदं श्राद्धं पार्वणविधिनैव कर्त्तव्यम् । तच्च त्रयाणामपि शस्त्रादिहतत्वे त्रिपुरुषमेकस्य द्वयोर्वा तथात्वे एकपुरुषं वा । न त्वेकोद्दिष्टविधिना । तद्वचनानि तु निर्मूलान्येव पार्वणाशक्तविषयाणि वा"इत्युक्तम् ।

तत्र सर्वनिबन्धृलिखितानां निर्मूलत्वाभिधानं प्रायपाठमात्रेण च विशेषवचनबाधनं महत्साहसमित्युपेक्षणीयम् ।

यदप्यपरं तेनैवोक्तं "कृष्णचतुर्दशीमात्रे पित्रादीनामेव श्राद्धम् । पार्वणरूपत्वात् । महालयान्तर्गतायां तु तस्यां पितृव्यभ्रात्रादीनामपि । ब्रह्मपुराणे 'प्रायोनशने"त्यादिना सामान्यचतुर्दशीश्राद्धमभिधाय "आश्विने तर्पणीयाश्च लुप्तपिण्डोदकक्रियाः" इति पुनरभिधानस्य तत्प्रापणार्थत्वात् । तच्चैकोद्दिष्टविधिना—

"अपुत्रा ये मृताः केचित् स्त्रियो वा पुरुषास्तथा ।
तेषामपि च देयं स्यादेकोद्दिष्टं न पार्वणम्" ॥

इत्यापस्तम्बवचनात्"इति ।

तदपि पूर्वलिखितैः "प्रायोनशनम्' इत्यादि, "ये च शस्त्रहता रणे" "युवानस्तु गृहे यस्य" इत्यादिभिश्चतुर्दशीमात्रे तादृशानां सर्वेषामेव देवतात्वोपदेशादतिदेशानुरोधेन चोपदेशसंकोचस्यायुक्तत्वादयुक्तम् ।

यत्तु "आश्विने" इत्यादिब्रह्मपुराणवचनं तन्महालयापरपक्षश्राद्धेऽपुत्रपितृव्यादीनां देवतात्वप्रापकं सत्तदन्तर्गतचतुर्दशी-

श्राद्धेऽपि तत्प्रापकं न तु तत्रैव विशेषतः। न ह्येतच्चतुर्दशीश्राद्धं त्रयोदशीश्राद्धवदपरपक्षश्राद्धाद्भिन्नं किन्तु तस्यैवाभ्यासः। वचनाच्छस्त्रहतादिमात्रदेवत्यः। "शस्त्रेण तु हता ये वा" इति तुशब्दात्। तेन कृष्णचतुर्दशीमात्रे शस्त्रादिहतयुवमृतादीनां पित्रादीनां मात्रादीनां मातामहादीनामपुत्राणां पितृव्यभ्रात्रादीनां चैकोद्दिष्टविधिना श्राद्धं कर्त्तव्यमेव।

इदानीं तु तदनाचरणम्। कृष्णपक्षसामान्यश्राद्धस्यैवानाचरणात्। महालयचतुर्दश्यां त्वावश्यकमिति तत्रैव प्रचुरः समाचारः। ये तु चतुर्दशीमात्रे महालयचतुर्दश्यामेव वा शस्त्रादिभिरपि मृतास्तेषां मृताहनिमित्तं यच्छ्राद्धं तद्यथाकुलाचारं पार्वणमेकोद्दिष्टं वा भवति न त्वेकोद्दिष्टरूपमेव। कृष्णचतुर्दशीनिमित्तत्वाभावात्। तन्निमित्तं चैकोद्दिष्टं तदा पृथङ् न भवति। पार्वणापेक्षयैकोद्दिष्टरूपमेव। कृष्णचतुर्दशीनिमित्तत्वाभावात्। तन्निमित्तं चैकोद्दिष्टं तदा पृथङ् न भवति। पार्वणापेक्षयैकोद्दिष्टस्य न्यूनधर्मत्वेऽपि समानेषु धर्मेष्वगृह्यमाणविशेषतया तन्त्रत्वोपपत्तेः।

संक्रान्तिव्यतीपातादिनिमित्तकं च चतुर्दश्यामपि पार्वणमेव भवति। चतुर्दशीनिमित्तकं च तदा पृथग् भवति। सपिण्डकापिण्डकत्वप्रयुक्तविरुद्धधर्मकत्वादिति दिक्।

शस्त्रघातादिनिमित्तकं च चतुर्दश्यां यद्यपि त्रयाणामपि श्राद्धं कृतं भवति तथाप्यपरपक्षनिमित्तकं मात्रादितृप्त्यर्थं च दिनान्तरे श्राद्धं कर्त्तव्यमेव। अपरपक्षनिमित्तस्य चतुर्दश्यां वर्जनात्। एवं महालयेऽपि सकृत्पक्षे पितृव्यादितृप्त्यर्थं च। येषु तु पक्षेषु चतुर्दशीवर्जनं नास्त्येवेत्युक्तम्। तेषु च महालयापरपक्षश्राद्धेन सह शस्त्रघातादिनिमित्तं श्राद्धं मृताहन्यायेन तन्त्रमेव भवति न तु पृथक्। न चैवं मृताहश्राद्धेऽप्येकोद्दिष्टविधिना क्रियमाणे पितुर्मृताहश्राद्धे तत्सिद्धये पितामहादिप्राप्तिः।

यत्तु हेमाद्रिणा केनचित्कारणेन महालयचतुर्दश्यां शस्त्राघाता-दिनिमित्तैकोद्दिष्टश्राद्धासंभवे तत्पक्षे पृथक्तन्निमित्तमपि श्राद्धं कस्मिंश्चिद्दिने कार्यं तच्च पार्वणविधिनेत्येतावत्पर्यन्तमुक्तम् । तत्र मूलं मृग्यम् ।

इति निर्णीतः कृष्णपक्षः ।

## सूर्यसंक्रमादियोगेषु नित्यश्राद्धम् ।

सूर्यसंक्रमो गोबलीवर्दन्यायेनायनविषुवद्भिन्नः । तेषां पृथगुपा-दानात् । तथोपादानप्रयोजनं चावश्यकत्वस्य फलातिशयस्य वा ज्ञापनं सप्रकारकं पूर्वमेवोक्तम् । अत एव विष्णुधर्मोत्तरे—

"श्राद्धे संक्रमणं भानोः प्रशस्तं पृथिवीपते ।
विषुवद्द्वितयं तत्र अयने द्वे विशेषतः" ॥ इति ।

व्यतीपातो विष्कम्भादिषु योगविशेषः ।

"श्रवणाश्विधनिष्ठार्द्रानागदैवतमस्तके ।
यद्यमा रविवारेण व्यतीपातः स उच्यते" ॥

इति वृद्धमनूक्तो वा । नागदैवतमाश्लेषा । मस्तकं प्रथमः पादः । प्रत्येकं चेदं सम्बध्यते । "सूर्याचन्द्रमसोः क्रान्तिसाम्यं ज्योतिःशास्त्र-गम्यं व्यतीपातः" इति कल्पतरुः ।

गजच्छाया—

"यदेन्दुः पितृदैवत्ये हंसश्चैव करे स्थितः ।
तिथिर्वैश्रवणीया च गजच्छाया प्रकीर्तिता" ॥

इति स्कन्दपुराणोक्ता । पितृदैवत्ये मघायाम् । हंसः सूर्यः ।

करे हस्ते। वैश्रवणीया तिथिस्त्रयोदशी। कुञ्जरच्छायपदेनाप्ययमेव योग उच्यते।

"योगो मघात्रयोदश्याः कुञ्जरच्छायसंज्ञकः।
भवेन्मघायां संस्थे च शशिन्यर्के करे स्थिते"॥ इति ब्रह्मपुराणात्।

इयं च भाद्रकृष्णत्रयोदश्येव भवति नान्या। यद्यपि प्रौष्ठपद्यूर्ध्वं कृष्णत्रयोदशी। "प्रौष्ठपद्यामतीतायां तथा कृष्णत्रयोदशी" इति विष्णुस्मृतिविष्णुधर्मोत्तरादिषु भाद्रकृष्णत्रयोदशीमात्रस्य नित्यश्राद्धकालेषु पाठात्तावन्मात्रमेव तथापि यस्यामेतादृशयोगेन प्राशस्त्यातिशयः स त्रयोदशीविशेष एव शुद्धोऽनेनोपलक्ष्यते। न त्वेतादृशयोगवत्येव सा श्राद्धकाल इत्येतस्याभिप्रायः।

"प्राक्छाये कुञ्जरस्य च, हस्तिच्छायासु च तथा कर्णव्यजनवीजितम्" इत्याद्युक्ता श्राद्धदेशरूपा गजच्छायेह न गृह्यते 'श्राद्धकालाः" इत्युक्तेः। प्रातिकाललक्षणायां सैव दोषः। संज्ञाकरणवैयर्थ्यं च तदर्थानुपादाने। संज्ञायां तु देवदत्तादिशब्दवन्मुख्यतैव। इदं चान्येषामपि युगादिमन्वादिव्रीहियवपाकमृताहादीनां नित्यश्राद्धकालानामुपलक्षणम्। एतेषु च नित्यं श्राद्धम्।

तथा च विष्णुः—"अमावास्या तिस्रोऽष्टकास्तिस्रोऽन्वष्टका माघी प्रौष्ठपद्यूर्ध्वं कृष्णत्रयोदशी व्रीहियवपाकौ च" इति।

"एतांस्तु श्राद्धकालान्वै नित्यानाह प्रजापतिः।
श्राद्धमेतेष्वकुर्वाणो नरकं प्रतिपद्यते"॥ इति।

माघी पौर्णमासी।

"व्रीहिपाके च कर्त्तव्यं यवपाके च पार्थिव।
नैतावाद्यौ महाराज विना श्राद्धं कथंचन॥

पौर्णमासी तथा माघी श्रावणी च नरोत्तम।
प्रौष्ठपद्यामतीतायां तथा कृष्णा त्रयोदशी॥
एतांस्तु श्राद्धकालान्वै नित्यानाह प्रजापतिः"।

इति विष्णुधर्मोत्तरात्। व्रीहयः शरत्पक्वं धान्यम्, सत्यपि "धान्यं व्रीहिः स्तम्बकरिः" इति व्रीहिशब्दस्य धान्यपर्यायत्वे न शालयः।

"यथोक्तवस्त्वसंपत्तौ ग्राह्यं तदनुकारि यत्।
यवानामिव गोधूमा व्रीहीणामिव शालयः"॥

इति व्रीह्यभावे तेषां तत्प्रतिनिधित्वोक्तेः।

"व्रीहयः शालयो मुद्गा गोधूमाः सर्षपास्तिलाः।
यवाश्चौषधयः सप्त विपदो घ्नन्ति धारिताः"॥

इति पृथगुपादानाच्च।

तेन शरदि वसन्ते चेत्युक्तं भवति। अत एव तत्तुल्यकालो नवयज्ञाय छन्दोगपरिशिष्टे "शरद्वसन्तयोः केचिन्नवयज्ञं प्रचक्षते" इत्युक्तः। यत्तु तत्रैव पक्षान्तरमुक्तम्—"धान्यपाकवशादन्ये" इति। तदवृष्ट्या तदुत्कर्षे। अत एव धनुःस्थरवावपि तत्करणप्रसङ्गे तन्निन्दा, मेषमारभ्य चैत्रादिगणनायां वृश्चिकस्य शरदन्तर्भावात्तत्र तत्करणे प्रशंसा च ज्योतिःशास्त्रे।

"वृश्चिके शुक्लपक्षे तु नवान्नं शस्यते बुधैः।
अपरे क्रियमाणं तु धनुष्येव कृतं भवेत्॥
धनुषि यत्कृतं श्राद्धं मृगनेत्रासु राशिषु।
पितरस्तत्र गृह्णन्ति नवान्नामिषकाङ्क्षिणः"॥ इति।

यच्च नवान्ने श्राद्धमुक्तम्—

"नवोदके नवान्ने च गृहप्रच्छादने तथा।
पितरः स्पृहयन्त्यन्नमष्टकासु मघासु च॥
तस्माद्दद्यात्सदा युक्तो विद्वत्सु ब्राह्मणेषु च" इति।

तदपीदमेव। गृहप्रच्छादने नवगृहसंपादने। मघासु भाद्रकृष्णपक्षगतासु केवलास्वपि। ब्राह्मणेषु प्राप्तेष्विति शेषः। उपलक्षणं चैतद्द्रव्यसंपत्तेरपि। अत्र सदाशब्दान्नित्यत्वम्। वृद्धिश्राद्धस्य नैमित्तिकत्वान्नित्यसंस्काराद्यङ्गत्वाच्च नित्यत्वम्। कृष्णपक्षश्राद्धस्य "शाकेनापि नापरपक्षमतिक्रामेत्" इत्यादिवचनेभ्यः, संक्रान्तिग्रहणायनादावपि श्राद्धं नित्यम्। आदित्यसंक्रमणं विषुवद्द्वयं विशेषेणायनद्वयं व्यतीपातो जन्मर्क्षमभ्युदयश्च।

"एतांस्तु श्राद्धकालान्वै नित्यानाह प्रजापतिः।
श्राद्धमेतेषु यद्दत्तं तदानन्त्याय कल्पते"॥

इति विष्णुस्मरणात्।

"उपप्लवे चन्द्रमसो रवेश्च त्रिष्वष्टकास्वप्ययनद्वये च।
पानीयमप्यत्र तिलैर्विमिश्रं दद्यात्पितृभ्यः प्रयतो मनुष्यः॥
श्राद्धं कृतं तेन समासहस्रं रहस्यमेतत्पितरो वदन्ति"।

इति विष्णुपुराणाच्च।

अत्र पानीयमपीति वचनाच्छ्राद्धस्यावश्यकत्वं गम्यते। ग्रहणे शातातपवचनादपि।

"सर्वस्वेनापि कर्तव्यं श्राद्धं वै राहुदर्शने।
अकुर्वाणस्तु तच्छ्राद्धं पङ्के गौरिव सीदति"॥ इति।

यदि संक्षेपेणापि श्राद्धसामग्रीसंपादने दरिद्रस्य सर्वस्वव्ययो भवति तेनापीत्यर्थः। "सर्वेषां व्यमुपजीव्यमुदकं तेनापि" इति हेमाद्रिः।

द्रव्यब्राह्मणसंपत्तौ हारीतवचनादपि।

"तीर्थद्रव्योपपत्तौ च न कालमवधारयेत्।
पात्रं च ब्राह्मणं प्राप्य सद्यः श्राद्धं विधीयते" इति॥

निषिद्धरात्र्यादिवर्जं प्राशस्त्यावहमपराह्णादिकालं न प्रतीक्षेतेत्यर्थः। अत एव देवीपुराणे —

"अकालेऽप्यथवा काले तीर्थश्राद्धे सदा नरैः।
प्राप्तैरेव सदा कार्यं कर्त्तव्यं पितृतर्पणम्॥
पिण्डदानं तु तच्छस्तं पितॄणां चातिदुर्लभम्।
विलम्बो नैव कर्त्तव्यो नैव विघ्नं समाचरेत्"॥ इति।

पिण्डदानग्रहणं सकलश्राद्धासंभवे तन्मात्रमपि तावत्कर्त्तव्यमित्येवमर्थम्।

व्यतीपातेऽपि पितामहवचनात्।

"अमावास्याव्यतीपातपौर्णमास्यष्टकासु च।
विद्वान् श्राद्धमकुर्वाणः प्रायश्चित्तीयते तु सः"॥ इति।
माघ्यादिषु पुनर्वचनं फलातिशयार्थमावश्यकत्वातिशयार्थं वा।

नित्यसमभिव्याहाराच्च संक्रमश्राद्धकृत्यादावपि नित्यं श्राद्धम्। समभिव्याहारश्च मार्कण्डेयपुराणेऽपि—

"विशिष्टब्राह्मणप्राप्तौ सूर्येन्दुग्रहणेऽयने।
विषुवे रविसंक्रान्तौ व्यतीपाते च पुत्रक॥
श्राद्धार्हद्रव्यसंपत्तौ तथा दुःस्वप्नदर्शने।
जन्मर्क्षग्रहपीडासु श्राद्धं कुर्वीत चेच्छया"॥ इति।

चकारो भिन्नक्रमः। ग्रहणादिकालेषु श्राद्धं प्रतीच्छया च यदा कदाचिच्छ्राद्धमवश्यं कुर्वीतेत्यर्थः। न तु फलस्येच्छयेति। पूर्ववाक्यैरावश्यकत्वावगमात्।

युगादिष्वपि नित्यम्।

"वैशाखमासस्य सिता तृतीया नवम्यसौ कार्त्तिकशुक्लपक्षे।
नभस्यमासस्य तमिस्रपक्षे त्रयोदशी पञ्चदशी च माघे।
एता युगाद्याः कथिताः पुराणैरनन्तपुण्यास्तिथयश्चतस्रः॥

पानीयमपि" इत्यादिविष्णुपुराणात्। पञ्चदशी पौर्णमास्यमावास्या च कल्पभेदेन। "पौर्णमासी तु माघस्य" इति भविष्यत्पुराणात्, "माघे च पौर्णमास्यां तु घोरं कलियुगं तथा" इति ब्रह्मवैवर्त्तवचनात्, "अमावास्या च तपसे" इति, "माघे चन्द्रक्षयेऽहनि" इति, 'दर्शे तु माघमासस्य" इति च नागरखण्डब्रह्मपुराणादिवचनेभ्यश्च।

मन्वन्तरादिष्वपि नित्यम्। तथा च मत्स्यपुराणे—

"अश्वयुक्शुक्लनवमी द्वादशी कार्त्तिके तथा।
तृतीया चैव माघस्य तथा भाद्रपदस्य च॥
फाल्गुनस्याप्यमावास्या पौषस्यैकादशी तथा।
आषाढस्यापि दशमी तथा माघस्य सप्तमी॥
श्रावणे चाष्टमी कृष्णा तथाषाढे च पूर्णिमा।
कार्त्तिकी फाल्गुनी चैत्री ज्यैष्ठी पञ्चदशी सिता॥
मन्वन्तरादयस्त्वेता दत्तस्याक्षयकारकाः"।

अस्य शेषो हेमाद्रौ—

"आसु तोयमपि स्नात्वा तिलदर्भविमिश्रितम्।
पितॄनुद्दिश्य यो दद्यात्स गतिं परमां लभेत्"॥ इति।

अत्र तोयमपीत्युक्त्या नित्यत्वम्।

शूलपाणिना तु—अस्य शेषस्यालिखनात्काम्यत्वमेवासामुक्तम्। एवं यत्रैतादृशं किंचिन्नित्यत्वद्योतकं साक्षान्नित्यत्वोक्तिरकरणप्रत्यवायश्रवणं वा तन्नित्यं श्राद्धमितरत्काम्यं श्रुतफलं वा तिथिवारनक्षत्रादिष्वर्थवादादिकल्प्यफलं वा युगान्तकल्पाद्यादिषु। अतिविस्तरापत्तेस्तानि न लिख्यन्ते।

# अथ मृततिथिश्राद्धम् ।

पित्रादिमृततिथौ त्वत्यावश्यकं श्राद्धम्—

"प्रतिसम्वत्सरं कार्यं मातापित्रोर्मृ'ताहनि ।
पितृव्यस्याप्यपुत्रस्य भ्रातुर्ज्यैष्ठस्य चैव हि" ॥

इति ब्रह्मपुराणे वीप्साश्रवणात् ।

"सर्वेषामेव श्राद्धानां श्रेष्ठं साम्वत्सरं मतम् ।
क्रियते यत्खगश्रेष्ठ पूजां गृह्णामि नो हरिः ॥
न ब्रह्मा न च वै रुद्रो न चान्ये देवतागणाः ।
तस्माद्यत्नेन कर्त्तव्यं वर्षे वर्षे मृताहनि ॥
न.ण खगशार्दूल भोजकेन विशेषतः" ।

इति भविष्यत्पुराणेऽकरणे दोषश्रवणाच्च । "भ्रातुर्ज्यैष्ठस्य" इति विशेषणादपुत्रस्यापि कनिष्ठस्य नावश्यकम् । अत एवोक्तम्—

"न पुत्रस्य पिता कुर्यान्नानुजस्य तथाग्रजः ।
अपि स्नेहेन कुर्यातां सपिण्डीकरणं विना" ॥ इति ।

अत्र पित्रग्रजाभ्यां सपिण्डीकरणं पुत्रानुजयोर्न कर्त्तव्यमिति प्रतीयते न तु सर्वस्येति । तेन प्रेताभ्युदयकामनायामन्येन तयोस्तदपि कारयित्वा साम्वत्सरिकादि पित्रग्रजाभ्यां स्वयमपि तयोः कर्त्तव्यं न तु नित्यं स्नेहेनेत्युक्तत्वात् । मृताहनीति च मरणाधिकरणतिथिसजातीयायां तिथावित्यर्थः । वत्सरान्ततिथेर्मृतिसम्बन्धाभावादहःपदस्य च तिथिरूपचान्द्राहःपरत्वात् । सजातीयत्वं च तन्मासतत्पक्षगतत्वेन प्रतिपन्नत्वादिना च ।

"मासपक्षतिथिस्पृष्टे यो यस्मिन् म्रियतेऽहनि ।
प्रत्यब्दं तु तथाभूतं क्षयाहं तस्य तं विदुः" ॥ इति व्यासवचनात् ।

अत्राहःपदमहोरात्रपरम्। मरणाधिकरणाहोरात्रस्य तिथिस्पर्शश्च तत्सम्बन्धरूपो मरणकाले विवक्षितो न तूदयास्तमयत्रिमुहूर्त्तादिसत्त्वेन। "पारणे मरणे नृणां तिथिस्तात्कालिकी स्मृता" इतिवसिष्ठवचनात्। साम्वत्सरिकश्राद्धाधिकरणाहोरात्रस्य च तत्तिथ्या स्पर्शः शास्त्रतः श्राद्धयोग्यत्वेन निर्णीतया। वत्सरश्च चान्द्रश्चैत्रादिमासविशेषरूपमासपक्षतिथिसम्बन्धलिङ्गात्। चैत्रादीनां चान्द्राणामेव मुख्यत्वात्। "आब्दिके पितृकार्ये च मासश्चान्द्रमसः स्मृतः" इतिविशेषवचनाच्च। मासशब्दस्य चैत्रादिविशेषपरत्वं च सामान्यपरत्वे आनर्थक्यापत्तेः।

"चक्रवत्परिवर्त्तेन सूर्यः कालवशाद्यतः।
अतः साम्वत्सरं श्राद्धं कर्त्तव्यं मासचिह्नितम्॥
मासचिह्नं तु कर्त्तव्यं पार्वं मासान्तमेव हि।
यतस्तत्र विधानेन स मासः परिकीर्त्तितः"॥

इति लघुहारीतवचनाच्चावगम्यते। सर्वं चैतन्मासतत्त्वविवेचने निष्कक्ष्यते। वत्सरान्तग्रहणाच्च। यद्यपि सजातीयत्वनिरूपिकायामाद्यमरणतिथिव्यक्तावपि "मासपक्षतिथिस्पृष्टे" इतिवचनादाद्यं साम्वत्सरिकश्राद्धं प्राप्नोति मासिकवत्। अत एव "आद्यमेकादशेऽहनि" इतिसाम्वत्सरिकपरत्वेनापि कैश्चिद्व्याख्यातं तथापि सा तिथिः सजातीयत्वनिरूपकतया श्राद्धाधिकरणतिथेरुपलक्षणमेव न तु तदधिकरणमिति दर्शयति। वार्षिकसमाख्या च विध्यनुसारित्वाद्वर्षान्ते भवं वार्षिकमिति व्याख्येया न तु वर्षे भवमिति। मासिके तु वक्ष्यते। वत्सरान्ते जाते मृताहनीति चार्थः। चान्द्रवत्सरस्य पूर्वतिथ्यन्तसमासत्वेन द्वितीयवत्सरादिभूतायास्तत्तिथेः पूर्ववत्सरान्त्यत्वाभावात्। अत एव सपिण्डीकरणं विधाय गोभिलेनाप्युक्तम्—"अत ऊर्ध्वं सम्वत्सरे सम्वत्सरे प्रेतायान्नं दद्याद्यस्मिन्नहनि प्रेतः स्यात्" इति।

नेन साम्वत्सरिकश्राद्धस्य द्वितीयादिसम्वत्सराद्यमृततिथिसम्बन्धेनैवोत्पन्नत्वात्प्रथमसम्वत्सरोपक्रममृतायां मरणाधिकरणतिथौ प्राप्तिरेव नास्तीति न तस्याद्यपदेन ग्रहणम्। युक्तं चैतत्। अन्यथैकमेवाब्दिकश्राद्धं प्रथममृततिथौ प्राप्तवचनादेकादशाहे क्रियमाणं प्रेतदेवत्यं द्वितीयादि तत्तिथौ पितृत्वप्राप्तदेवत्यमिति विरूपं स्यात्।

एतेनैतदपि निरस्तं वेदितव्यं यच्छूलपाणिनोक्तम्। न च प्रथममासिकवार्षिकादिसमाख्याप्रकृतिभूता मासवर्षादिशब्दा अजहत्स्वार्थलक्षणयैकदिनाधिकमासादिपरा इति वाच्यम्। द्वितीयादिमासवर्षेषु तदनुपपत्तेः। तस्मान्मृततिथेर्मृततिथिं यावत्त्रिंशत्तिथ्यात्मको मासश्चान्द्रस्तादृश एव षष्ठ्यधिकशतत्रयतिथ्यात्मकः सम्वत्सरोऽत्र मासवर्षशब्दाभ्यां विवक्षितः। एवं त्रिपक्षशब्दोऽपि तादृशपञ्चचत्वारिंशत्तिथ्यात्मकसार्द्धमासवचनः। मृततिथेरिति च दर्शाद्दर्शश्चान्द्र इतिवदवधौ पञ्चमी। तथाचान्त्यमृततिथेरेव पूर्वमासशब्दार्थत्वं न तु पूर्वमृततिथेरिति द्वितीयादिमृततिथिष्वेव प्रथमवर्षान्तर्गतासु प्रथमादिमासिकानि द्वितीयचैत्रशुक्लादिमृततिथिष्वेव प्रथमादिवार्षिकाणीति। वार्षिकश्राद्धस्य वत्सरान्तमृततिथावेवोत्पन्नत्वेन वर्षे जाते भवमित्येव समाख्याव्युत्पत्तेरौचित्येन प्रथमवार्षिकादेः प्रथमवर्षाद्यधिकरणत्वस्यैवाभावादेतादृशकल्पनानर्थक्यात्। मासिकानि तु प्रथमादिमासादिमृततिथिष्वेवेति वक्ष्यते।

सकललोकव्यवहारविरुद्धं चेदमभिधानम्। द्वितीयादिमृततिथिषु जातस्येव मृतस्याप्यद्य द्वितीयस्तृतीयो मासो लग्नस्त्रयोदशमृततिथौ चाद्य द्वितीयं वर्षं लग्नमित्येवमाबालं व्यवहारात्। मासवर्षाद्यमृततिथेश्चावधिमात्रत्वे पूर्वदर्शवदुत्तरमासवर्षान्तर्गतिव्यवहाराभावप्रसङ्गात्। सर्वथा प्रथमवत्सरान्त्यमृततिथावाद्याब्दिकम्। द्वितीयवत्सरान्त्यमृततिथौ द्वितीयमित्यादि।

## मृततिथिश्राद्धमामान्नेनापि कार्यम् ।

इदं चाब्दिकश्राद्धं ग्रहणकाले तत्पूर्वप्रहरचतुष्टयत्रयरूपवेधकाले वा प्राप्तं भोक्तृब्राह्मणलाभेऽन्नेनैव तदलाभे आमान्नादिनापि तद्दिन एव कर्त्तव्यम् ।

तथा च गोभिलः—

"दर्शे रविग्रहे पित्रोः प्रत्याब्दिकमुपस्थितम् ।
अन्नेनासंभवे हेम्ना कुर्यादामेन वा सुतः" ॥ इति ।

दर्शे पित्रोः सुतो रवीति च सर्वमविवक्षितमुपलक्षणम् । आमपदेन च वितुषं तण्डुलादि गृह्यते न तु सतुषम् ।

"सस्यं क्षेत्रगतं प्राहुः सतुषं धान्यमुच्यते ।
आमं वितुषमित्युक्तं स्विन्नमन्नमुदाहृतम्" ॥

इति वशिष्ठवचनात् । प्रत्याब्दिकग्रहणं च "अन्नेनैवाब्दिकं कुर्याद्धेम्ना वामेन न क्वचित्" इति वार्षिके सर्वथा साधनत्वेन निषिद्धस्यामादेः प्रतिप्रसवार्थम् । अत एव तन्मासिकस्याप्युपलक्षणम् । अमावास्यादिश्राद्धं तु तत्रामेन भवत्येव ।

"श्राद्धविघ्ने द्विजातीनामामश्राद्धं प्रकीर्त्तितम् ।
अमावास्यादिनियतं मासमम्वत्सराद्वते" ॥ इति हारीतवचनात्

श्राद्धस्य पाकश्राद्धस्य विघ्नेऽसंभवे । माससम्वत्सरशब्दाभ्यां मासिकसाम्वत्सरिकोपादानम् । यत्तु "ग्रहणात्तु द्वितीयेऽह्नि रजोदोषात्तु पञ्चमः" इत्यज्ञाः साम्वत्सरिकविषयं वचनं पठन्ति तदनुरूपं चानुतिष्ठन्ति तन्निर्मूलम् । पाकश्राद्धासंभवरूपश्राद्धविघ्नस्यैव प्रपञ्चः कात्यायनेन दर्शितः—

"आपद्यनग्नौ तीर्थे च प्रवासे पुत्रजन्मनि ।
हेमश्राद्धं प्रकुर्वीत भार्यारजसि संक्रमे" ॥ इति ।

बौधायनेनापि—

"संक्रमेऽन्नद्विजाभावे प्रवासे पुत्रजन्मनि ।
हेमश्राद्धं सग्रहे च द्विजः शूद्रः सदाचरेत्" ॥ इति ।

सग्रहवचनात्तत्कालापतितं ग्रहणनिमित्तकश्राद्धातिरिक्तमपि दर्शादिश्राद्धमामान्नादिनैव कर्त्तव्यम् । तत्र ग्रहणपुत्रजन्मनोः पक्वान्नभोक्त्रसंभवकृतः पाकश्राद्धासंभवो द्विजाभावे च । पत्न्यभावतद्रजोदोषैकाकिप्रवासतीर्थप्राप्त्यादिषु पक्त्रभावकृतः । आपदन्नाभावादिषु पाक्याभावकृतः । हेमश्राद्धविधौ चान्नाभाव इत्यामान्नस्यापि ग्रहणम् । अत एव—

"आत्मनो देशकालानां विप्लवे समुपस्थिते ।
आमश्राद्धं द्विजैः कार्यं शूद्राणां तु सदैव हि" ॥

इत्युशनो वचनम्, सुमन्तुवचनं च—

"पाकाभावेऽधिकारः स्याद्विप्रादीनां नराधिप ।
अपत्नीनां महाबाहो विदेशगमनादिभिः ॥
सदा चैव तु शूद्राणामामश्राद्धं विदुर्बुधाः" इति ।

विदेशगमनादिभिः पाकाभाव इत्यन्वयः । अपत्नीनामित्यपि हेतुगर्भविशेषणेनापत्नीकत्वप्रयुक्तः पाकाभाव एव विवक्षितः । तस्मादेवंजातीयकानां पाकश्राद्धासंभवद्वारकमेव द्विजान्प्रत्यामहेमश्राद्धनिमित्तत्वम् । संक्रमाग्न्यभावयोस्तु तदसंभवात्स्वतन्त्रयोरेव । अग्न्यभावे च यद्यप्यग्न्यधिकरणकमग्नौ करणं न संभवति तथापि "अग्न्यभावे तु विप्रस्य पाणावेवोपपादयेत्" इति पाणिहोमेन पाकश्राद्धमपि

संभवत्येव । अन्यथाधिकाराभावेन श्राद्धस्यैवाप्राप्तेस्तत्रामादिरूप-साधनविधिरपि दुःस्थितः स्यात् । अत एव च—

"पाकस्यान्नाग्निसंयुक्त उत्सन्नाग्निरथापि वा ।
आमश्राद्धं तदा कुर्याद्धस्तेऽग्नौ करणं भवेत्" ॥

इति जमदग्निवचने पाणिहोमश्रवणमनुवाद एव ।

स्मृतिरत्नावल्यां तु—

"आमश्राद्धं यदा कुर्याद्विधिज्ञः श्राद्धदस्तदा ।
हस्तेऽग्नौ करणं कुर्याद्ब्राह्मणस्य विधानतः" ॥

इति वचनादामश्राद्धे सानेरपि पाणिहोम इत्युक्तम् । तत्रैव च पत्न्यभावे तद्रजोदोषे ग्रहणतीर्थसंक्रमादिषु च पत्न्यग्निसंनिधानेऽपि पाकासंभवेऽप्यामश्राद्धमेव मुख्यमित्युक्तम् ।

बोधायनादिवचनेषु चामश्राद्धमविधाय हेमश्राद्धस्यैव विधानम् । पुत्रजन्मसमभिव्याहारात् । तत्र तस्यैव मुख्यत्वात् । तथा च संवर्तः—

"पुत्रजन्मनि कुर्वीत श्राद्धं हेम्नैव बुद्धिमान् ।
न पक्वेन न चामेन कल्याणान्यभिकामयन्" ॥ इति ।

पुत्राजन्मातिरिक्तेषु तु यथा पक्वान्नासंभवे आमं तथा तदसंभवे हेम द्रष्टव्यम् । अन्नप्रकृतित्वेनामस्यान्तरङ्गत्वात् ।

"आमान्नस्याप्यभावे तु श्राद्धं कुर्वीत बुद्धिमान् ।
धान्याच्चतुर्गुणेनैव हिरण्येन सुरोचिषा" ॥

इति मरीचिवचनाच्च । धान्यादेकैकब्राह्मणतृप्तिपर्याप्तान्नसिद्धि-समर्थात् ।

"आमं तु द्विगुणं प्रोक्तं हेम तद्वच्चतुर्गुणम्।
अन्नाभावे द्विजातीनां ब्राह्मणस्य विशेषतः" ॥

इति हेमाद्रिधृतधर्मवचनैकवाक्यत्वात्। हेमाद्रिस्तु—आमादिति व्याचख्यौ। हेम्नश्चतुर्गुणत्वं च तावद्धान्यलाभपर्याप्तत्वम्। पूर्वव्याख्याने हेम्न आमद्वगुण्यं विवक्षितम्। तेन तस्य त्रैगुण्यादौ तद्द्विगुणत्वं हेम्नो द्रष्टव्यम्। आमत्रैगुण्यादिकं चोक्तं व्यासेन—

"आमं ददद्धि कौन्तेय तद्दानं द्विगुणं भवेत्।
त्रिगुणं चतुर्गुणं वापि न त्वेकगुणमर्पयेत्" ॥ इति।

तस्यैव वचनान्तरम्—

"आमं ददत्तु कौन्तेय दद्यादन्नाच्चतुर्गुणम्।
सिद्धान्ने तु विधिर्यः स्यादामश्राद्धेऽप्यसौ विधिः ॥
आवाहनादि सर्वं स्यात्पिण्डदानं च भारत।
दद्याद्यच्च द्विजातिभ्यः शृतं वाशृतमेव वा ॥
तेनाग्नौ करणं कुर्यात्पिण्डांस्तेनैव निर्वपेत्" । इति।

पक्वद्विगुणस्यापि धान्यस्य दानेऽशक्तेन तत्पर्याप्तमपि देयम्।

"असमर्थोऽन्नदानस्य धान्यमामं स्वशक्तितः।
प्रदद्यात्तु द्विजातिभ्यः स्वल्पाल्पामपि दक्षिणाम्" ॥

इति वाराहपुराणात्। अत्र स्वशक्तित इत्यस्य पक्षान्तरविधायकत्वात्। अथोक्तद्वैगुण्यादिपक्षाणां शक्तिकृतव्यवस्थानुवादकत्वमात्रे वैयर्थ्यापत्तेः। अश्यत इत्यामिति विशेषणाच्च ब्राह्मणैस्तद्धान्यं स्वगृहे पक्त्वा भोक्तव्यं न तु कार्यान्तरे विनियोक्तव्यमिति सूच्यते। तच्च ब्राह्मणाल्लब्धमेव। क्षत्रियादिलब्धं तु सुखेन यथेष्टं विनियोज्यम्
तथा च व्यासः—

"हिरण्यमामं श्राद्धीयं लब्धं यत्क्षत्रियादितः ।
यथेष्टं विनियोज्यं स्याच्छूद्रीयाद्ब्राह्मणात्स्वयम्" ॥ इति ।

क्षत्रियादित इत्यादिशब्देन वैश्य एव गृह्यते । शूद्राल्लब्धस्य तु भोजन एव स्वीये परकीये वा विनियोगो न यथेष्टं नापि ब्राह्मणलब्धवत्स्वभोजन एव ।

"आमं शूद्रस्य यत्किंचिच्छ्राद्धिकं प्रतिगृह्यते ।
तत्सर्वं भोजनायालं नित्यनैमित्तिके न तु" ॥

इति षट्त्रिंशन्मतात् । हिरण्यं तु ततो लब्धमपि नित्यादावपि विनियोज्यमित्युक्तं तत्रैव—

"हिरण्यं तत्पुनः श्राद्धे गृहीतं नैव दुष्यति ।
तेन नित्यक्रियाः कार्या हिरण्यं नान्नमुच्यते" ॥ इति ।

पिण्डदाने आमात्साधानान्तरमप्युक्तं षट्त्रिंशन्मते—

"आमश्राद्धं यदा कुर्यात्पिण्डदानं कथं भवेत् ।
गृहपाकात्समुद्धृत्य सक्तुभिः पायसेन वा ॥
पिण्डान् दद्याद्यथालाभं तिलैः सह विमत्सरः" इति ।

"गृहपाकात्समुद्धृत्य पिण्डान् दद्यात्"इति प्रधानभूताद्गृहपक्वादोदनादुद्धृतेन तदेकदेशेनेति साधनान्तरविधिः । हेमश्राद्धेऽप्येवमेव ।

"गृहपाकात्समुद्धृत्य सक्तुभिः पायसेन वा ।
पिण्डप्रदानं कुर्वीत हेमश्राद्धे कृते सति" ॥ इति भविष्योत्तरात् ।

शूद्रकर्तृकेऽप्यामादिश्राद्धे पिण्डदानमोदनादिना भवति ।

"शूद्रस्तु गृहपाकेन तत्पिण्डान्निर्वपेत्तथा ।
शाकमूलं फलं तस्य पायसं वा भवेत्स्मृतम्" ॥

इति हेमाद्रिलिखिताद्भविष्योत्तरात्। पिण्डनिर्वपणार्थमिति शेषः। "स्त्रीशूद्राश्च सधर्माणः" इतिवचनात्।

"अन्नाभावे द्विजाभावे प्रवासे पुत्रजन्मनि।
हेमश्राद्धं सग्रहे च सदा स्त्रीशूद्रयोरपि"॥

इति भविष्योत्तरवचनाच्च स्त्रीकर्तृकमपि सर्वं श्राद्धमामादिसाधनकं पायसादिसाधनकपिण्डकं च भवति। पूर्ववचनेषु पिण्डदानग्रहणाच्च तत्रैवामातिरिक्तमप्योदनादिसाधनं भवति विकिरादौ त्वाममेव।

"आमश्राद्धप्रदः पिण्डांस्तथाग्नौ करणं च यत्।
तद्द्यात्तत्र तेनैव यत्किंचिच्छ्राद्धिकं भवेत्"॥

इति प्रचेतोवचनात्। आमादिश्राद्धे च प्राणाहुत्यादिकं लुप्यते। मन्त्रेषु तु केषुचिदूहो (१) मरीचिनोक्तः—

"आवाहने स्वधाकारे मन्त्रा ऊह्या विसर्ज्जने।
अन्यकर्मण्यनूह्याः स्युरामश्राद्धविधिः स्मृतः"॥ इति।

---

(१) ऊहस्वरूपं व्याकरणाध्ययनप्रयोजनप्रसङ्गेन पातञ्जलमहाभाष्ये प्रतिपादितम्। तद् यथा—

ऊहः खल्वपि, न सर्वैर्लिङ्गैर्न च सर्वाभिर्विभक्तिभिर्वेदे मन्त्रा निगदितास्ते चावश्यं यज्ञगतेन पुरुषेण यथासमयं विपरिणमयितव्यास्तान्नावैयाकरणः शक्नोति विपरिणमयितुं तस्मादध्येयं व्याकरणम्" इति महाभाष्ये। कैय्यटप्रदीपे—"ऊहः खल्वपीति—इह-यस्मिन्यागे इति कर्तव्यतोपदिष्टा यागान्तरेणोपजीव्यते सा प्रकृतिः। येन चोपजीव्यते सा विकृतिः। प्रकृतिवद्विकृतिः कर्तव्येति मीमांसकव्यवस्थापिते न्याये प्रकृतिप्रत्ययादीनामूहं वैयाकरणः सम्यग्विजानाति। तत्राग्नेर्मन्त्रोऽस्ति—"अग्नये त्वा जुष्टं निर्वपामि" इति। तत्र "सौर्यं चरुं निर्वपेद्ब्रह्मवर्चसकामः" इति सौर्ये चरौ मन्त्र ऊह्यते "सूर्याय त्वा जुष्टं निर्वपामि" इति।

अयमाशयः—प्रकृतियागोक्तमन्त्राणामतिदेशन्यायेन विकृतियागाङ्गतापादनं मुख्य ऊहः। अत्र श्राद्धे त्वसौ गौण इति।

आवाहने तत्तन्मन्त्रे "पितॄन् हविषे अत्तव" इत्यत्र स्वीकर्त्तव इत्यूहः। विसर्जने तन्मन्त्रे "तृप्ता यात" इत्यत्र तर्प्स्यतेति। "नमो वः पितरः" इति मन्त्रः स्वधाकारः। तत्र "इष" इति पदस्य स्थाने आमायेत्यूह इति हेमाद्रिः। तदयुक्तम्—रसशुष्मादिपदवदिष इति पदस्याशास्यान्नप्रतिपादकत्वेन प्रदेयान्नप्रतिपादकत्वाभावात्।

तेन पूर्वेषां तु स्वधाकार इतिवत्स्वधा पित्र्यहविर्दानं तत्करणं स्वधाकारस्तदङ्गमन्त्र इदमन्नमित्यादिस्तत्रैकब्राह्मणभोजन-पर्याप्तान्ननिष्पादनसमर्थधान्यचतुर्गुणमिदं धान्यमित्यादिरूपेणोहः कार्य इति स्वधाकार इत्यस्यार्थः। इदं च प्रसङ्गादुक्तम्।

## आमश्राद्धाधिकारिनिरूपणम्।

सप्रकारकमामादिश्राद्धं ग्रहणादन्यत्र मृताहे द्विजानां न भवति। "माससम्वत्सरादृते" इति पूर्वलिखितवचनात्।

"अनग्निकः प्रवासी च यस्य भार्या रजस्वला।
आमश्राद्धं द्विजः कुर्यान्न तत्कुर्यान्मृताहनि" ॥ इति।
"पुष्पवत्स्वपि दारेषु विदेशस्थोऽप्यनग्निकः।
अन्नेनैवाब्दिकं कुर्याद्धेम्ना वामेन न क्वचित्" ॥

इति मरीचिलौगाक्षिवचनाभ्यां च। अन्नेनैवाब्दिकं कुर्यात्त-दहरेव। तेन पत्न्यां रजस्वलायामपि तदहरेवान्नेनैवात्मादिपक्वेन सर्वस्यापि साम्वत्सरिकमासिकश्राद्धानुष्ठानमुचितम्।

यत्तु—'मृताहनि तु संप्राप्ते यस्य भार्या रजस्वला।
श्राद्धं तदा न कर्त्तव्यं कर्त्तव्यं पञ्चमेऽहनि' ॥

इति हेमाद्रिमाधवादिलिखितं वचनं तदस्य मृतस्य श्राद्धकर्त्री भार्या रजस्वलेति व्याख्येयम्। न तु यस्य श्राद्धकर्त्तुर्भार्या रजस्वलेति।

हेमाद्रिस्तु "पाणिग्रहणाद्धि सहत्वं कर्मसु" इति वचनेन गृहस्थस्य श्राद्धेऽपि भार्यया सहैवाधिकारात्तस्याश्च रजस्वलादशायामशुचित्वेनानधिकारे व्यासज्यवृत्तेर्भर्तृगतस्याप्यधिकारस्य विघातात्तस्यास्तद्दशापगम एव श्राद्धमुचितमिति यस्य श्राद्धकर्त्तुरित्यादिरेव मृताहनीति वचनार्थः। पुष्पवत्स्वपीति वचनं सहाधिकृतभार्यान्तरसद्भावविषयमित्याह।

ननु दम्पत्योः सहाधिकारप्रतिपादकं "पाणिग्रहणाद्धि" इति वचनं हिशब्दस्वरसादनुवादरूपं न्यायमूलकं श्रौतस्मार्त्ताग्निसाध्यकर्मविषयम्। तेष्वेवोभयसंयोगेनोत्पन्नानामग्नीनमधिकारिविशेषणभूतानामुभयस्वामिकत्वेनोभयसाध्यकर्मघटितप्रयोगकत्वेन च सहाधिकारस्य न्याय्यत्वात्। पूर्त्तव्रतादिषु तु पृथगेवाधिकार इति तावन्मिताक्षराकारादिभिरुक्तं युक्तं च। श्राद्धे च निरग्नीनामप्यधिकारात्पत्नीसाध्यकर्माघटितत्वाच्च निरग्निकर्तृके श्राद्धे कथं पत्न्याः सहाधिकारः।

न च श्राद्धाङ्गपाकस्य मध्यमपिण्डप्राशनस्य च पत्नीसाध्यत्वात्कथं श्राद्धकर्मणस्तत्साध्यकर्माघटितत्वं पत्नीशब्दश्च यज्ञस्वामिवचनोऽधिकाराभावे कथमिति वाच्यम्। पाके आत्मादेः कर्त्रन्तरस्यापि विधानात्पिण्डप्राशनस्य च काम्यत्वेन पाक्षिकत्वात्। पितृपितामहादिगततृप्त्युद्धारादिरूपफलार्थं मृतपित्रादिकस्याभावास्याद्यवच्छिन्नजीवनवतोऽकरणप्रत्यवायपरिहारार्थं वा श्राद्धे पितृत्वाद्यनिरूपिकायास्तस्याः फलभागित्वाभावेन तद्रूपयज्ञस्वामित्वासंभवात्तत्र पत्नीशब्दस्य भार्यामात्रवचनत्वाच्च।

अत्रोच्यते—पत्न्यां रजस्वलायां पञ्चमेऽहनि श्राद्धानुष्ठाने तया सह तत्राधिकारं हेतुमधिकृतभार्यान्तरसद्भावे च कस्यांचिद्रजस्वलायामपि तद्दिन एव तदनुष्ठानं वदतो हेमाद्रेः साग्निककर्तृक-

श्राद्धविषयमेवेदं सर्वमभिमतम्। "मृतेऽहनि" इत्यादि वचनमूलकमेवेदं हेमाद्रेरभिधानम्।

"अपुत्रा तु यदा भार्या संप्राप्ते भर्तुराब्दिके।
रजस्वला भवेत्सा तु कुर्यात्तत्पञ्चमेऽहनि" ॥

इति श्लोके गौतमवचनसमानार्थतयैतस्यापि वचनस्येतरसकलनिबन्धकारवद्व्याख्यानेऽधिकारिण्याः स्त्रिया अशुद्धौ तदन्ते श्राद्धानुष्ठानस्य जननमरणाशौचवन्न्यायात्,

"देये पितॄणां श्राद्धे तु आशौचं जायते यदि।
तदाशौचे व्यतीते तु तेषां श्राद्धं प्रदीयते ॥
शुचीभूतेन दातव्यं या तिथिः प्रतिपद्यते।
सा तिथिस्तस्य कर्त्तव्या न त्वन्या वै कदाचन" ॥

इति ऋष्यशृङ्गवचनाच्च सिद्धेरेतद्वचनवैयर्थ्यापत्तेः।

अत एव निरग्निकविषयमपीति तु हेमाद्र्युक्तार्थसंग्रहग्रन्थमात्रदर्शिनामल्पज्ञानां भ्रम एव। फलभागित्वरूपो ह्यधिकारः श्राद्धे पत्न्या सह न संभवत्येवेत्यधिकारिविशेषणरूपे एवाधिकारे तत्सहत्वम्। तदपि निमित्तरूपे न संभवतीत्यग्निरूप एव तत्।

नन्वेवमावास्यादिश्राद्धमप्यग्निसाध्यं साग्निकस्य पत्न्यां रजस्वलायां न स्यात्। सहाधिकारात्।

नैवम्। भवत्येव तत्तदा। आमादिश्राद्धविधानात्। श्राद्धस्यैवाभावे साधनविधेरसंभवात्। न चाग्निविषयं तत्। तस्य पृथग्ग्रहणात्। "अनग्निकः प्रवासी च यस्य भार्या रजस्वला" इत्यादि।

स्मृतिरत्नावल्युदाहृतेन "आमश्राद्धं यदा कुर्यात्" इति वाक्येनामश्राद्धे पाणिहोमविधानादग्निसाध्यतापि तस्य नास्तीति संभव-

स्येव पत्न्यनधिकारेऽपि तत् । आब्दिकमेव तु "न तत् कुर्यान्मृताहनि" इत्यामप्रतिषेधादन्नेनैव कर्त्तव्यम् । अग्निहोमाङ्गकं पत्न्या अशुद्धौ न संभवति ।

किं च मृताहनीति वचनस्य पत्न्यां रजस्वलायां सहाधिकारिण्यास्तस्या अशुचित्वाद्यच्छ्राद्धं न कर्त्तव्यं तन्मृताहन्येवेति परिसंख्यार्थत्वेन व्याख्यातुं शक्यत्वादमावास्यादिश्राद्धं पत्न्यां रजस्वलायामपि कर्त्तव्यमेव ।

न च परिसंख्यार्थत्वे "पञ्चमेऽहनि" इत्यपि विधानाद्वाक्यभेदः प्रसज्येत । पञ्चमेऽहनीत्येव तु विधौ तदा न कर्त्तव्यमिति निषेधो "न गिरा गिरेति ब्रूयात्" इतिवदनुवादः संभवतीति वाच्यम् ।

परिसंख्याया एव केवलाया विधानात् । पञ्चमेऽहनीत्यस्य "देये पितॄणां श्राद्धे तु" इत्येतद्वचनादेव प्राप्तत्वात् । अत एव तस्य रजोनिवृत्तिकालोपलक्षणतापि । तेन श्राद्धकर्त्तुर्भार्यायां रजस्वलायामतादृशाधिकृतपत्न्यन्तराभावे साग्निककर्त्तृकमेवाब्दिकश्राद्धं पत्न्याः शुद्धौ भवत्येव हेमाद्रेः संमतम् ।

परमार्थतस्त्विदमयुक्तम् । तथाहि—अग्निसाध्येऽपि श्राद्धे न पत्न्या अधिकारः संभवति । फलभागित्वं ह्यधिकारः । स्वाम्यपर्यायोपरिभावार्थकाधिशब्दयोगात्तत्सिद्धयर्थं षष्ठाद्ये सर्वकर्मणां फलवत्स्वस्थापनाच्च । फललाभप्रयोजकत्वावधिकारिविशेषणेऽधिकारशब्दप्रयोगः । न च नित्यनैमित्तिकश्राद्धेषु पत्न्याः फलभागित्वं संभवति । पूर्वोक्तान्न्यायात् । पाणिग्रहणाद्धीति वचनं तु न्यायप्राप्तसहत्वानुवादः । तेन पुत्रकामश्राद्धादौ भवतु पत्न्या अप्यधिकारो न तु सर्वत्राग्निसाध्येऽपि ।

न चैवमाधानगतात्मनेपदादिविरोधः । अग्निस्वामिगतस्यैव फलस्य जननात् । पुरुषस्यापि तत्स्वामित्वात् । अग्न्यस्वामित्वाद् (१)

(१) छ्वि० पु० इदं नास्ति ।

अन्यस्वामिगतं फलं न जनयन्त्यग्निसाध्यानि कर्माणि किन्तु तत्स्वामिगतमेवेत्येतावदात्मनेपदादिनावगम्यते, न तु सर्वस्वामिगतफलजनकता । यत्र दम्पत्योरन्यतर एव रक्षोरोगपापादिगृहीतस्तत्र तत्परिहारार्थराक्षोघ्नीपवित्रेष्ट्यादौ तदसंभवात् । यज्ञस्वामियजमानभार्याकर्तृकत्वेन चावगतानां पदार्थानामाज्यावेक्षणादीनां यजमानभार्याकर्तृकत्वमात्रं तत्र संभवतस्त्यागायोगाद्गृह्यते । सत्रे कस्मिंश्चिद्यजमाने नष्टे प्रतिनिध्युपादानेन सप्तदशकर्तृकत्वमात्रवत् । फलिसंस्कारास्तत्र क्रिया भवन्ति न वेत्येवमादिविस्तरभिया न विचार्यंते ।

तेन यथान्यतरफलार्थान्यप्येवंजातीयकान्यविरोधादुभयस्वामिकेष्वप्यग्निषु भवन्ति तथा श्राद्धमपि भविष्यति । अशुचिभूतया तु पत्न्या स्वसाध्यपदार्थानां कर्त्तुमशक्यत्वात्तद्घटितप्रयोगाणि तानि तस्यां रजस्वलायां माभूवन् । श्राद्धं तु स्वयंपाकादिना कर्त्तुं शक्यमेवेति सहाधिकारवशात्पत्न्यां रजस्वलायां श्राद्धं न भवतीति यत्किंचिदेव ।

ननु भवतु हेमाद्रीयं सहाधिकारन्यायोपन्यसनमयुक्तम् । वचनादेव तु मृताहनीत्यादिकात्सर्वेषामप्ययमर्थोऽस्तु, मृतभार्याविषयत्वे तस्य न्यायादेव तदर्थप्राप्तेरानर्थक्यापत्तेः कर्तृभार्याविषयत्वादिति चेन्न ।

"अपुत्रा तु यदा भार्या" इत्यादिवन्न्यायप्राप्तस्यैवार्थस्योपनिबन्धनात् । एवंजातीयकानां भूयसां वचनानां स्मृतिषूपलब्धेः । वाचनिकत्वे चास्यार्थस्यानृतुमदधिकृतभार्यान्तरसत्त्वेऽपि कस्यांचिदपि तादृश्यां पञ्चमेऽहन्येवानुष्ठानं स्यात् । वचनाविशेषात् ।

इदं च दूषणं सहाधिकारन्यायमूलकत्वेऽपि द्रष्टव्यम् । कस्यांचिदप्यशुचिभूतायां तावद्व्यासक्ताधिकारविघातावश्यंभावात् । ऋत्वि-

च्चद्गुणभाव एव पत्न्याः परं कारणतावच्छेदकावच्छिन्नयत्किञ्चि-त्सत्त्वे कार्योपधानाद्यस्यां कस्यांश्चिदपि मृतायां स्यादनुष्ठानम् । तदा च सहाधिकारोक्तिरनुपपन्ना । मृताहनीति वचनेन तदाननुष्ठानमुक्तम् । पुष्पवत्स्वपीति वचनेन चानुष्ठानम् । तयोरेवं व्यवस्था क्रियते न तु न्यायः कश्चिदुपन्यस्यत इति चेत् । न । भार्यान्तरस्याधिकृतत्वोक्ति-वैयर्थ्यात् । एकभार्येण तस्यां रजस्वलायां तदा श्राद्धं न कर्त्तव्यम् । अनेकभार्येण तु तदापि कस्यांचिदरजस्वलायां तिष्ठन्त्यां कर्त्तव्यम् । ज्येष्ठायां वा रजस्वलायां न कर्त्तव्यम् । तस्यां शुचिभूतायां कनिष्ठायां तादृश्यामपि कर्त्तव्यमित्येवंरूपाया एव व्यवस्थायाः सुवचत्वात् ।

वस्तुतस्तु पूर्वव्याख्याप्रकारेण तयोर्भिन्नविषयत्वान्नैव व्यवस्था-पेक्षास्तीति यत्किञ्चिदेवैतत् । तस्मादेकभार्यः साग्निकोऽपि तस्यां रजस्वलायामन्नेनैव मृताह एवाब्दिकमासिकश्राद्धं कुर्यात् । तद्भिन्नं त्वमावास्यादिश्राद्धमामेनैव । पाकसंभवे पाकेनापि वा । श्राद्धकर्त्री स्त्री रजस्वला चेन्मासिकमाब्दिकं च रजोनिवृत्तौ कुर्यादामावास्यादि निमित्तं तु तस्या लुप्यत एवेति । आशौचे न तु क्षयाहश्राद्धप्रतिबन्धे आशौचान्त्यदिनोत्तरदिने तत्कर्त्तव्यम् ।

"देये पितॄणां श्राद्धे तु" इति पूर्वोक्तादृष्यशृङ्गवचनात् । देयवि-शेषणं मृताहातिरिक्तश्राद्धव्यावृत्त्यर्थम् । तेषाम्—

"दानं प्रतिग्रहो होमः स्वाध्यायः पितृकर्म च ।
प्रेतपिण्डं क्रियावर्जमाशौचे विनिवर्त्तते" ॥

इतिशङ्खवचनाददेयत्वात् । मृताहश्राद्धस्य तु विघ्नमात्रे देयता ।

"श्राद्धविघ्ने समुत्पन्ने मृताहेऽविदिते तथा ।
एकादश्यां प्रकुर्वीत कृष्णपक्षे विशेषतः" ॥

इति लघुहारीतवचनात् । मृताहे इति श्राद्धविघ्ने समुत्पन्न इत्यस्यापि विशेषणं मध्यगतत्वेन विशेषाग्रहणात्साकाङ्क्षत्वाच्च

अत एव तत्रैव कालान्तरानुष्ठानाचारः । यद्यपि चात्र कालविशेषावच्छिन्नादेयतोक्ता न तु देयतासामान्यम् । तथापि त्वर्थादपि तावत्सिद्धं तदुपजीव्यदेयतोक्त्यात्र विशेषलाभो घटत एव । यथा "आग्नेय्याग्नीध्रमुपतिष्ठते" इत्यत्र स्तोत्रादिद्वारविशेषविनियोगेन सिद्धस्य क्रतुसम्बन्धसामान्यस्य लाघवायोपजीवनात्प्रकृताग्नेय्यीविशेषलाभः । तत्रत्यकालविशेषस्य तु "न त्वन्या वै कदाचन" इत्यत्र निषेधाम्मृताहप्रत्यासन्नमुख्याशौचानन्तरदिनापेक्षया गौणत्वम् । निषेधार्थमपुजीव्यस्य तस्य सर्वथा प्रतिषेद्धुमशक्यत्वेन प्रतिषेधस्य संभवविषयत्वात् । तेनाशौचानन्तरदिनेऽपि प्रमादादिनाऽकरणे तदुत्तरायाममावास्यायां तत्रापि कथञ्चिदसंभवे कृष्णैकादश्यां तत्रापि तथात्वे शुक्लायां तस्यात् ।

"मासिकाब्दे तु संप्राप्ते अन्तरा मृतसूतके ।
वदन्ति शुद्धौ तत्कार्यं दर्शे वापि विचक्षणाः" ॥

इति षट्त्रिंशन्मते,

"श्राद्धविघ्ने समुत्पन्ने त्वन्तरा मृतसूतके ।
अमावास्यां प्रकुर्वीत शुद्धावेके मनीषिणः" ॥

इति व्यासवचने चामावास्याया अप्याशौचविघ्ने विधानात् । "कृष्णैकादशी तत्र विशेषतः" इत्युक्त्या सूचिता चानुकल्पभूता शुक्लैकादशी विघ्नसामान्ये विहितापि विशेषविहितकालासंभवे अत्राप्याकाङ्क्षया ग्राह्या । पाकासंभवादिनाब्दिकविघ्ने तु तदुत्तरामावास्यायां कृष्णैकादश्यां वा तत्कर्त्तव्यम् ।

"व्यापन्नोऽप्याब्दिकं नैव कुर्यादामेन कर्हिचित् ।
अन्नेनेदममायां तु कृष्णे वा हरिवासरे" ॥

इति कार्ष्णाजिनिवचनात् । "कृष्णपक्षे विशेषतः" इति वचनाच्छुक्लैकादश्यामपि । व्याध्यादिनाऽशक्तेन तु पुत्रादिना तद्दिन

एवान्नेन कारणीयम्। अनुपादेयकालानुरोधेनोपादेयकर्तृप्रतिनिधे-र्न्याय्यत्वात्। "व्यापन्नोऽपि" इति वचनं तु न व्याध्याद्यापद्विषयम्। तदामेनापि कर्त्तुमशक्यत्वादामनिषेधसाहचर्यात्तस्य पाकासंभव-रूपापद्विषयत्वात्। प्रतिनिधिनाप्यसंभवे सामान्यवचनादमावा-स्यादिषु। यत्तु—

"एकोद्दिष्टं तु कर्त्तव्यं पाकेनैव सदा स्वयम्।
अभावे पाकपात्राणां तदहः समुपोषयेत्" ॥

इति श्राद्धचिन्तामण्यादिषु लिखितं स्वकालाकरणनिमित्तोप-वासरूपप्रायश्चित्तविधायकं सदुत्तरकालकर्त्तव्यतासूचकं स्वयमिति वचनात्प्रतिनिधिनिषेधकं च वचनं तन्मासिकैकोद्दिष्टविषयम्।

"एकोद्दिष्टे तु संप्राप्ते यदि विघ्नः प्रजायते।
मासेऽन्यस्मिंस्तिथौ तस्मिञ्छ्राद्धं कुर्यात्प्रयत्नतः" ॥

इति देवलवचनेन—

'मासिकं चोदकुम्भं च यद्यदन्तरितं भवेत्।
तत्तदुत्तरसातन्त्र्यादनुष्ठेयं प्रचक्षते' ॥

इति वचनैकवाक्यतया मासिकविषयेणैकवाक्यत्वात्। अत एतदहरुपवासेनैव श्राद्धस्थानीयेन तदकरणप्रायश्चित्तेन वा कृतार्थ-त्वादेकोद्दिष्टं पुनर्न कर्त्तव्यमेकादश्यादिषु" इति श्राद्धचिन्तामण्युक्तिः—

"यस्यैतानि न दत्तानि प्रेतश्राद्धानि षोडश।
पिशाचत्वं स्थिरं तस्य दत्तैः श्राद्धशतैरपि" ॥

इति वचनोक्तदोषापादनेन तिथितत्त्वकृता दूषिता। एवं हि वदन् षोडशश्राद्धरूपैकोद्दिष्टविषयमिदं वचनमिति मन्यते।

"तदहश्चेत्प्रदुष्येत केनचित्सूतकादिना ।
सूतकानन्तरं कुर्यात्पुनस्तदहरेव वा" ॥

इत्युत्तरमासगततत्तिथिरूपकालविधायकमत्रिवचनमपि मासिकविषयमेव । पूर्ववचनैकवाक्यत्वात् । यस्य तु मरणतिथिरेव न ज्ञायते तन्मासस्तु ज्ञायते तस्य साम्वत्सरिकं तन्मासगतायाममावास्यायां कर्त्तव्यम् ।

"न ज्ञायते मृताहश्चेत्प्रमीते प्रोषिते सति ।
मासश्चेत्प्रविज्ञातस्तद्दर्शे स्यान्मृताहनि" ॥

इति बृहस्पतिवचनात् । मृताहनि यत्कर्त्तव्यं तदिति शेषः । प्रोषित इति मृततिथ्यज्ञानकारणोपलक्षणम् । अत एव सामान्यतो भविष्यत्पुराणम्—

"मृताहं यो न जानाति मानवो विनतात्मज ।
तेन कार्यममावास्यां श्राद्धं साम्वत्सरं नृप" ॥ इति ।

श्राद्धविघ्न इति मरीचिवचनात्तन्मासकृष्णशुक्लैकादश्योर्वा । यद्यपि चात्र कृष्णपक्षे विशेषत इत्युक्त्या शुक्लैकादश्यनुकल्पस्तथापि शुक्लपक्षे मृत इति ज्ञाने सैव ग्राह्या । पक्षस्याप्यज्ञाने तु सानुकल्प इति द्रष्टव्यम् । यदा तु मरणतिथिरेव ज्ञायते न तन्मासस्तदा मार्गमाघभाद्रमासानामन्यतमे मासि तत्तिथौ कार्यम् ।

"दिनमेव विजानाति मासं नैव तु यो नरः ।
मार्गशीर्षेऽथवा भाद्रे माघे वाथ समाचरेत्" ॥ इति भविष्यत्पुराणात् ।

अत्रापि शुक्लपक्षज्ञाने तद्गता तत्तिथिः । नो चेत्कृष्णपक्षगतैव । तस्य पित्र्ये प्रशस्तत्वात् । तिथिमासयोरुभयोरपि मरणसम्बन्धिनो-

रज्ञाने प्रस्थानोत्तरमेव यस्य जीवनवार्त्ता न ज्ञाता तन्मृताहश्राद्धे प्रस्थानदिनमासौ ग्राह्यौ ।

"दिनमासौ न विज्ञातौ मरणस्य यदा पुनः ।
प्रस्थानदिनमासौ तु ग्राह्यौ पूर्वोक्तया दिशा" ॥

इति बृहस्पतिवचनात् । पूर्वोक्तया दिशेत्ययमर्थः—प्रस्थानस्यापि मासज्ञाने दिनाज्ञाने तन्मासामावास्यादिषु, मासाज्ञाने दिनज्ञाने च मार्गशीर्षादिषु प्रस्थानतिथाविति, शुक्लपक्षतदज्ञानयोः पूर्ववत् ।

यदा प्रस्थानस्यापि दिनमासयोरज्ञानं यस्य वा प्रस्थानोत्तरं बहुकालं जीवनवार्त्ता श्रुतैव पश्चात्तन्मरणं ज्ञातं न तु तद्दिनमासौ तदा मरणश्रवणसम्बन्धिनौ दिनमासौ ग्राह्यौ । "मृतवार्त्ताश्रुतेर्ग्राह्यौ तौ पूर्वोक्तक्रमेण तु" इति भविष्योत्तरात् । पूर्वोक्तक्रमेण त्वित्ययमर्थः—मरणवार्त्ताश्रवणसम्बन्धिमासमात्रस्मरणे तदमावास्यादिषु । तद्दिनमात्रस्मरणे मार्गशीर्षादिसम्बन्धिनि तद्दिने । शुक्लपक्षतदज्ञानयोः पूर्ववत् । यस्य तु मरणतच्छ्रवणप्रस्थानानां सर्वेषामपि दिनमासयोरज्ञानं तदाब्दिकविषये प्रभासखण्डम्—

"मृतस्याहर्न जानाति मासं वापि कथंचन ।
तेन कार्यममावास्यां श्राद्धं माघेऽथ मार्गके" ॥ इति ।

कथंचनेति मरणादिरूपेण केनापि चिह्नेनेत्यर्थः ।

यस्य त्वज्ञातदेशगतस्य जीवनमरणान्यतरानिर्धारणात्पञ्चदशवर्षाणि प्रतीक्ष्य पश्चात्प्रतिकृतिदाहाद्यौर्ध्वदेहिकं क्रियते तस्य दाहकालीनतिथावेवाब्दिकं मासिकं च कार्यम् । तथा च जातूकर्ण्यः—

"पितरि प्रोषिते यस्य न वार्त्ता नैव चागतिः ।
ऊर्ध्वं पञ्चदशाद्वर्षात्कृत्वा तत्प्रतिरूपकम् ॥

कुर्यात्तस्य च संस्कारं यथोक्तविधिना ततः ।
तदानीमिव सर्वाणि प्रेतकर्माणि संचरेत्" ॥ इति ।

तदानीमिव तदानीं मृतस्येव । अनेन सर्वत्र दाहदिनस्यावधित्वमुक्तम् । भविष्योत्तरे तु तदादीन्येवेति पाठः । इयं च पञ्चदशवर्षप्रतीक्षा पितृविषया पितरीतिवचनात् ।

यत्तु—
"यस्य न श्रूयते वार्ता यावद्द्वादशवत्सरम् ।
कुशपुत्रकदाहेन तस्य स्यादवधारणम्" ॥

इति बृहस्पतिवचनम्—

"प्रोषितस्य यदा कालो गतश्चेद्द्वादशाब्दिकः ।
प्राप्ते त्रयोदशे वर्षे प्रेतकार्याणि कारयेत् ॥
जीवन् यदि स आगच्छेद्घृतकुम्भे नियोजयेत् ।
उद्धृत्य स्नपयित्वास्य जातकर्मादि कारयेत् ॥
द्वादशाहं व्रतचर्या त्रिरात्रमथवास्य तु ।
स्नात्वोद्वहेत तां भार्यामन्यां वा तदभावतः ॥
अग्नीनाधाय विधिवद्व्रात्यस्तोमेन वा यजेत् ।
अथैन्द्राग्नेन पशुना गिरिं गत्वा च तत्र तु ॥
इष्टिमायुष्मतीं कुर्यादीप्सितांश्चक्रतूंस्ततः" ।

इति वृद्धमनुवचनं च तत्पित्रतिरिक्तविषयम् । जीवन्नित्यादि तु पितर्यपि भवत्येव । व्रतचर्या ब्रह्मचर्यारूपा । पञ्चाशद्वर्षन्यूनवयस्कस्य पञ्चदशवर्षप्रतीक्षा तदधिकवयस्कस्य द्वादशवर्षाणीति केचित् । "तस्य स्यादवधारणम्" इतिवचनाच्च भर्तृमरणरूपनिमित्तावधारणप्रयुक्तं तद्भार्याया एकचित्यारोहणेन पृथक्चित्यारोहणेन वा मरणमपि भवत्येव । न च वस्तुतो मरणाभावेऽपि तस्याः प्रत्यवायः । शास्त्रीयत्वात्तदवधारणस्येति दिक् ।

# अथ पार्वणश्राद्धकालाः ।

एते चामावास्यादयः क्षयाहातिरिक्ता नियमेन पार्वणश्राद्धकालाः। एतेषु यानि श्राद्धानि विहितानि तानि पार्वणविधिना त्रिपुरुषोद्देशेनैव कार्याणीत्यर्थः। अत एवोक्तं कण्वेन—

"एकमुद्दिश्य यच्छ्राद्धमेकोद्दिष्टमुदीरितम्।
त्रीनुद्दिश्य तु यत्तद्धि पार्वणं समुदीरितम्" ॥ इति।

यद्यपि पार्वणशब्दः पर्वणि भवमिति व्युत्पत्त्या दर्शश्राद्ध एव मुख्यः, तद्धर्मकत्वात्, इतरत्र गौणस्तथाप्येकोद्दिष्टेऽपि तद्धर्मातिदेशे सत्यपि तत्राप्रयोगात्तद्व्यावृत्तः केषुचिदेव श्राद्धेषु प्रयोगे निमित्तमूलोऽभिधेयदर्शश्राद्धगुण एवानेन वचनेन प्रदर्श्यते।

ते च त्रयः पुरुषाः पितृपितामहप्रपितामहा एव। सत्यपि दर्शश्राद्धद्वये मातामहश्राद्धस्य ततो भिन्नस्य पितृश्राद्धविकृतित्वादितरश्राद्धेषु पितृश्राद्धधर्मातिदेशस्यैव युक्तत्वादिति पूर्वमुक्तम्। मातामहश्राद्धप्राप्तिश्च यथैतेषु तदपि पूर्वमेवोक्तम्। पार्वणविकृतित्वं च सर्वश्राद्धानां श्राद्धशब्दवत्त्वाख्यचोदनासामान्याद्वचनाच्च। तथा च मत्स्यपुराणे—

"एतदग्निमतः प्रोक्तमन्वाहार्यं तु पार्वणम्।
यथेन्दुसंक्षये तद्वदन्यत्रापि निगद्यते" ॥

यद्यपि द्वितीयं मत्स्यपुराणवचनम्—

"ततः प्रभृतिसंक्रान्तावुपरागादिपर्वसु।
त्रिपिण्डमाचरेच्छ्राद्धमेकोद्दिष्टं मृताहनि" ॥ इति।

तत्रापि पिण्डग्रहणस्योपलक्षणत्वात्पार्वणधर्मकत्वमेवाभिप्रेतम् (१)। एवं सति संक्रान्तिग्रहणमप्युपपद्यते।

"अयनद्वितये श्राद्धं विषुवद्द्वितये तथा।
संक्रान्तिषु च सर्वासु पिण्डनिर्वपणादृते"॥

इति पद्मपुराणे तच्छ्राद्धे पिण्डदाननिषेधाद्यथाश्रुतेऽनुपपत्तेः। पुनर्वचनं च "एकोद्दिष्टं मृताहनि"त्येतद्विधानार्थम्। ततः प्रभृति-सपिण्डीकरणोत्तरम्। एतदभिधानं च तत्पूर्वभाविष्वेकोद्दिष्टश्राद्धेषु पार्वणातिदेशो नास्तीत्येवमर्थम्। तेष्वपि तद्धर्मातिदेशस्यावश्यं वक्तव्यत्वात्। अन्यथा केषांचित्तद्धर्माणां पर्युदासानुपपत्तेः।

यथा याज्ञवल्क्यः—

"एकोद्दिष्टं दैवहीनमेकार्घ्यैकपवित्रकम्।
आवाहनाग्नौ करणरहितं ह्यपसव्यवत्॥
उपतिष्ठतामक्षय्यस्थाने विप्रविसर्जने।
अभिरम्यतामिति वदेद्ब्रूयुस्तेऽभिरताः स्म ह"॥ इति॥

तथाश्वलायनगृह्यपरिशिष्टम्—

"प्रेतश्राद्धेषु सर्वेषु न स्वधा नाभिरम्यताम्।
स्वस्त्यस्तु विसृजेदेवं सकृत्प्रणववर्जितम्॥
एकोद्दिष्टस्य पिण्डे तु अनुशब्दो न युज्यते।
पितृशब्दं न कुर्वीत पितृहा चोपजायते"॥ इति।

अत्र दैवाग्नौ करणावाहनादीनां वाचनिकः पर्युदासः। पितृपदोपेतमन्त्रनिवृत्त्येकार्घ्यपिण्डत्वादीनामर्थप्राप्तानामनुवादः। उपतिष्ठतामित्यादीनां प्राकृतप्रत्याम्नानेन विधिः। किन्तु तेषु कृत्स्नानां पार्वणधर्माणामनुष्ठानं नास्तीत्येतावन्मात्रेण।

(१) अभिप्रेयमिति द्वि० पु० पाठः।

"प्रदानं यत्र यत्रैषां सपिण्डीकरणात्परम् ।
तत्र पार्वणवज्ज्ञेयं श्राद्धमभ्युदयादृते" ॥

इतिशातातपवचनेऽभ्युदयश्राद्धपर्युदासवत्। तत्रापि प्राचीनावीतादिबहुपार्वणधर्माणामनुष्ठानाभावात्। अत एव मिताक्षरायां "ऋयुस्तेऽभिरताः स्म ह"इति हशब्दः प्रसिद्धिवाची प्रसिद्धपार्वणसम्बन्धिशेषधर्मप्रापकत्वेन व्याख्यातः। एवम्—

"सपिण्डीकरणादूर्ध्वं यत्र यत्र प्रदीयते ।
तत्र तत्र त्रयं कुर्याद्वर्जयित्वा मृताहनि" ॥

इत्यादिशङ्खादिवचनेष्वपि सपिण्डीकरणोर्ध्वकालग्रहणमेवमभिप्रायकमेव। मृताहनि यत्कर्तव्यं तद्वर्जयित्वेत्यर्थः। मृताहशब्दश्च निरुपपदो मासपक्षतिथिस्पष्ट इति परिभाषितक्षयाहपरः। माससम्बन्धितिथिपरस्तूपपदात्प्रतिमासमित्यादि। एवंविधानि च वचनानि न श्राद्धान्तरेषु पार्वणधर्मातिदेशविधायकानि किन्तु वचनान्तरसिद्धतदनुवादेन तत्र क्षयाहपर्युदासार्थानि। तेनैवंविधैर्वचनैः—

"एकोद्दिष्टं परित्यज्य पार्वणं कुरुते यदि ।
अकृतं तद्विजानीयात्स मातृपितृघातकः ॥
प्रतिसंवत्सरं तस्मादेकोद्दिष्टं समाचरेत् ।
एकोद्दिष्टं परित्यज्य पार्वणं यः समाचरेत् ॥
सदैव पितृहा स स्यान्मातृभ्रातृविनाशकः ।
मृताहे पार्वणं कुर्वन्नधोऽधो याति मानवः ॥
संपृक्तेष्वाकुलीभावः प्रेतेषु तु यतो भवेत्" ।

इत्यादियममत्स्यपुराणादिवचनैश्चैकोद्दिष्टविधानेनाब्दिकं श्राद्धमुक्तम्।

"ये सपिण्डीकृताः प्रेता न तेषां तु पृथक्क्रिया ।
यस्तु कुर्यात्पृथक्पिण्डं पितृहा सोऽभिजायते ॥
पार्वणेन विधानेन साम्वत्सरिकमिष्यते ।
प्रतिसम्वत्सरं कार्यं विधिरेष सनातनः" ॥ इति ।
"सपिण्डीकरणं कृत्वा कुर्यात्पार्वणवत्सदा ।
प्रतिसम्वत्सरं विद्वाञ्छगलेयोदितो विधिः ॥

इत्यादिभिश्च कूर्मपुराणशातातपादिवचनैर्बहुभिः पार्वणविधानेन तदुक्तम् । अत्र च—

"राजन् सम्वत्सरपूर्णे सपिण्डीकरणे कृते ।
निराशाः पितरो यान्ति एकस्यावाहने कृते ॥
एकोद्दिष्टं तु कर्त्तव्यं यावत्पित्रोः सपिण्डनम् ।
राजन् सपिण्डनादूर्ध्वमेकोद्दिष्टं निवर्त्तते ॥
न पृथक् पिण्डदानं तु तस्मादूर्ध्वं विधीयते ।
प्रेतानामिह सर्वेषां यो मन्त्रैस्तु नियोजितः ॥
प्रेतत्वं चैव निस्तीर्णः प्राप्तः पितृगणं तु सः ।
च्यवते पितृलोकात्तु पृथक्पिण्डनियोजने ॥
परिणीता यथा योषिन्न गच्छेत्पैतृकं कुलम् ।
प्रेतोऽप्येवं महाराज संयुक्तः पितृभिः सह ॥
सम्वत्सरं भवेद्यावदेकोद्दिष्टं कथंचन ।
सम्वत्सरे व्यतीते तु त्रिभिः सामान्यमुच्यते ॥
कृतार्थास्त्विह निर्वृत्ताः सपिण्डीकरणे कृते ।
ते गताः पितृलोकं तु यथाह भगवाञ्छिवः ॥
सपिण्डीकरणं कृत्वा कुर्यात्पार्वणवत्सदा ।
प्रतिसम्वत्सरं विद्वानित्येवं मनुरब्रवीत्" ॥

इत्यादिभविष्यत्पुराणादिषु पार्वणविधानस्य भूयःप्रशंसादर्शनात्

"कर्त्तव्यं पार्वणं राजन्नैकोद्दिष्टं कदाचन।
सुबहून्यत्र वाक्यानि मुनिगीतानि चक्षते॥
अल्पानि चैव राजेन्द्र एकोद्दिष्टं प्रचक्षते।
तस्माद्बहुवचनसामर्थ्यात्पार्वणं स्यान्मृताहनि"॥

इति सुमन्तुवचनाच्च, विप्रतिषिद्धधर्मसमवाये भूयसां स्यात्स्वधर्मत्वमिति न्यायेन पार्वणप्रकारानुष्ठानस्यैवोचितत्वाच्च केवलं मातापितृविषयाणामेव पितृव्यादिविषयाणामपि क्षयाहैकोद्दिष्टविधीनाममनुष्ठानलक्षणमप्रामाण्यमेव केचिन्मन्यन्ते। प्रत्यक्षश्रुतिविरोधाच्च।

तथा च हेमाद्र्युदाहृतं श्रुतिद्वयम्—

"देवा वा असुरान् हत्वा पितृत्वं समाविदन्तः
सन्तोऽनवरुन्धाः सहैवेत्य ब्रुवन्।
ये नः समानास्ते वः परस्यानु
स्वं भागं प्रतिगृह्णन्त्येवमेवाभूत्" इति।

"मासि मास्यृतावृतौ प्रतिहेमन्तग्रीष्मवर्षासु।
प्रतिसम्वत्सरे च, देवाश्च पितरश्च सहास्ताम्" इति च।

ये पितरो नोऽस्माकं समानाः सदृशाः सपिण्डीकृता इति यावत्। ते वयं देवास्ते पितरश्च वो युष्माकं पार्श्वात्परस्य पितृभागस्य देवभागस्य चानु सहैवेति यावत्स्वं स्वं भागं प्रतिगृह्णन्ति इति हेतोरेवमेव देवयागसाहित्येनैव सदैव पार्वणविधानेनैव पितृयागानुष्ठानमभूदित्याद्यश्रुतेरर्थः। देवाश्च पितरश्च श्राद्धं भोक्तुं सह तिष्ठन्तीति द्वितीयायाः।

"असपिण्डक्रियाकर्म द्विजातेः संस्थितस्य च।
अदैवं भोजयेच्छ्राद्धं पिण्डमेकं च निर्वपेत्"॥

"अनेन विधिना श्राद्धं कुर्य्यात्संवत्सरं सकृत् ।
द्विश्चतुर्वा यथाश्रद्धं मासे मासे दिने दिने" इति ।

सम्वत्सरपर्यन्तमेव मासे मासे द्वादशवारमिति यावत् । चतुर्वारं द्विवारं सकृद्वा यथाश्रद्धमनेन पूर्वोक्तपार्वणविधिना श्राद्धं कुर्यात् । यदा सकृत्तदा कन्यायाम् । तस्याः पित्र्येऽतिप्रशस्तत्वात् । दिने दिने अहरहःश्राद्धमपि सम्वत्सरमेवानेनैव विधिना कुर्यादिति हि तस्यार्थः ।

अत एवापस्तम्बेनापि नित्यश्राद्धं प्रक्रम्योक्तम्—'एवं सम्वत्सरम्' इति । मनुना च दर्शश्राद्धं प्रक्रम्य—

"अनेन विधिना श्राद्धं त्रिरब्दस्येह निर्वपेत् ।
हेमन्तग्रीष्मवर्षासु पाञ्चयज्ञिकमन्वहम्" ॥ इति ।

तेन श्रुतेः क्षयाहविषयत्वाभावात्स्मार्त्तानामेव तद्विषयाणां पार्वणैकोद्दिष्टविधीनां विरोधे, स्मृतिद्वैधे तु विषयः कल्पनीयः पृथक् पृथगिति विषयव्यवस्थाकल्पनमेवोचितम् ।

तत्र शूलपाणिप्रभृतयस्त्वेवमेवं मन्यन्ते—

"मृताहनि तु कर्त्तव्यं प्रतिमासं तु वत्सरम् ।
प्रतिसम्वत्सरं चैवमाद्यमेकादशेऽहनि" ॥ इति,
"प्रतिसम्वत्सरं चैवमेकोद्दिष्टं मृताहनि" इति,
'ततः प्रभृतिसंक्रान्तावुपरागादिपर्वसु ।
त्रिपिण्डमाचरेच्छ्राद्धमेकोद्दिष्टं मृताहनि" ॥ इति,
"सपिण्डीकरणादूर्ध्वं यत्र यत्र प्रदीयते ।
तत्र तत्र त्रयं कुर्याद्वर्जयित्वा मृताहनि" ॥

इत्यादियाज्ञवल्क्यव्याघ्रमत्स्यपुराणशङ्खादिवचनैस्तावन्मृताहशब्दोपेतैस्तस्य मासपक्षतिथिस्पृष्ट इतिपरिभाषितक्षयाहपरत्वात्,

कश्चिच्च प्रतिसंवत्सरशब्देनैव तस्य विशेषणात् क्षयाहश्राद्ध एवैकोद्दिष्टं विधीयते ।

"प्रदानं यत्र यत्रैषां सपिण्डीकरणात्परम् ।
तत्र पार्वणवच्छ्राद्धं तेषामभ्युदयाहृते ॥
अर्वाक्संवत्सराद् वृद्धौ पूर्णे संवत्सरेऽपि वा ।
ये सपिण्डीकृताः प्रेता न तेषां तु पृथक्क्रिया ॥
न पृथक्पिण्डदानं तु तस्मादूर्ध्वं विधीयते ।
प्रेतानामिह सर्वेषां ये मन्त्रैस्तु नियोजिताः ॥
कृतार्थास्ते तु संवृत्ताः सपिण्डीकरणे कृते ।
प्रेतत्वाच्चेह निस्तीर्णाः प्राप्ताः पितृगणं तु ते ॥
यः सपिण्डीकृतं प्रेतं पृथक्पिण्डेन योजयेत् ।
विधिघ्नस्तेन भवति पितृहा चोपजायते" ॥ इति,

"सपिण्डीकरणे वृत्ते पृथक्त्वं नोपपद्यते ।
पृथक्त्वे तु कृते पश्चात्पुनः कार्या सपिण्डता" ॥ इति,

"असपिण्डीकृतं प्रेतमेकोद्दिष्टेन तर्पयेत् ।
सपिण्डीकरणादूर्ध्वं त्रिभिः सामान्यमिष्यते" ॥

इत्यादिशातातपलघुहारीतजाबालादिवचनैस्तु सपिण्डीकृतानां सामान्यतः पार्वणं विधीयते । मृताहशब्दाभावात् ।

तेन सामान्यविशेषन्यायेन तेषां मृताहेतरविषयत्वान्मृताहे सर्वेषामेकोद्दिष्टस्यैव पूर्ववचनैः प्राप्तौ—

"औरसक्षेत्रजौ पुत्रौ विधिना पार्वणेन तु ।
प्रत्यब्दमितरे कुर्युरेकोद्दिष्टं सुता दश" ॥

इति जाबालवचनादौरसक्षेत्रजाभ्यां स्वपित्रोः क्षयाहश्राद्धं पार्वणविधिनैव कर्तव्यम् ताभ्यामपि साग्निकाभ्यामेव ।

"यत्र यत्र प्रदातव्यं सपिण्डीकरणात् परम् ।
पार्वणेन विधानेन देयमग्निमता सदा" ॥

इति मत्स्यपुराणे विशेषणात् । ततश्च निरग्निकयोरौरसक्षेत्रजयोरपि । अन्येषां तु पुत्राणां साग्नीनां निरग्नीनां च विशेषविहितमेकोद्दिष्टमेव क्षयाहे भवति ।

न च सदेत्युक्तत्वात्साग्निकयोर्नित्यं निरग्निकयोस्त्वौरसक्षेत्रजयोः पाक्षिकपार्वणमपि न त्वेकोद्दिष्टनियम इति वाच्यम् ।

तयोः पार्वणविधौ वैयर्थ्यापत्तेः । एक एव हि स विधिः साग्निकयोस्तयोर्नित्यवत्पार्वणं विदधाति निरग्निकयोस्तु पाक्षिकमिति । सामान्यरूपाणां पार्वणविधीनां नु... विधिभिः स्वविषयानुक्तकालिनानां तद्दिनगविषयत्वेन मृताहे पार्वणविधेरन्यस्याभावात् । येन तद्बलादेवं विकल्पः स्यात्, निरग्निकस्य साग्निकस्य च पार्वणनियममात्रार्थोऽयं विधिः स्यात् । अत एव "देयमग्निमता सदा" इति न सर्वपुत्राणां विशेषणार्थम् । औरसक्षेत्रजभिन्नानां पार्वणप्राप्त्यभावेन यद्दत्तकादिभिः पार्वणं कर्त्तव्यं तदग्निमतैवेति विशेषणासंभवात् । संभवति तु यत् क्षेत्रजौरसाभ्यां पित्रोर्मृताहे पार्वणं कार्यं तदग्निमतैवेति । एवं सति—

"आपाद्य सह पिण्डत्वमौरसो विधिवत्सुतः ।
कुर्वीत दर्शवच्छ्राद्धं मातापित्रोर्मृताहनि ॥
पुत्राणामौरसः पुत्रः पुत्रमात्रस्तथापरे ।
पितुः पितृगणस्थस्य नित्यं कुर्यात्स पार्वणम्" ॥

इतिजमदग्निवाक्ये औरसग्रहणं क्षेत्रजस्याप्युपलक्षणम् ।

औरसक्षेत्रजयोः साग्निकयोरेव पार्वणनियमो हेमाद्रेरपि संमतः । स्पष्टं चात्रार्थे भविष्यत्पुराणमुदाहृतम्—

"निरग्नेरौरसस्यैकमेकोद्दिष्टं मृताहनि ।
प्रत्यब्दं पार्वणं साग्नेरन्येषां न तु पार्वणम्" ॥ इति ।

औरसग्रहणं वाक्यान्तरे साग्निकस्य क्षेत्रजस्याप्युपलक्षणम् । "तत्समः पुत्रिकासुतः" इत्यौरससमत्वात्पुत्रिकापुत्रस्यापीत्यधिकमुक्तं तेन ।

"अग्निप्रधानं सर्वेषामनुग्रहं मृताहनि ।
तद्योगात्फलसामर्थ्यात् सर्वत्र हन्ति पार्वणम् ॥
वर्षे वर्षे तु कुर्वीत पार्वणं योऽग्निमान् द्विजः ।
कुर्यादनग्निमान् धीर एकोद्दिष्टं मृताहनि" ॥

इत्यादीनि च कार्ष्णाजिनिभविष्यत्पुराणादिवचनान्यधिकानि लिखितानि ।

अन्येषामेकोद्दिष्टनियमं तु शूलपाण्यादिवद्धेमाद्रिर्न मन्यते । किन्तु—

"परं संनयनात्पित्रोर्मृताहन्यपि पार्वणम् ।
सपिण्डीकरणादूर्ध्वं वर्षे वर्षे मृताहनि ॥
कर्तव्यं पार्वणं राजन्नैकोद्दिष्टं कदाचन" ।

इत्यादिबहुभिर्मृताहशब्दोपेतैर्विशेषवचनैस्तदुपोद्बलितैश्च सामान्यवचनैरपि पूर्वोदाहृतैः पार्वणस्यापि प्रासङ्गिकत्वमेव—

"येनास्य पितरो याता येन याताः पितामहाः ।
तेन यायात्सतां मार्गं तेन गच्छन्न दुष्यति" ॥

इति वचनाद्वंशपरम्परायातसमाचारव्यवस्थितं मन्यते ।

यथानारभ्याधीतस्य सामिधेनीसप्तदश्यविधेः प्रकृतेः प्रकरणाधीतपाञ्चदश्यावरुद्धत्वाद्विकृतिविषयस्य साक्षात्सामिधेनीलक्षणद्वारसम्बन्धमात्रबोधकस्य तावतैव चार्थवतस्तन्मात्रसम्बन्धे आनर्थक्यादव्यभिचरितक्रतुसम्बन्धसामिधेनीद्वारोपस्थितसर्वविकृतिक्रत्वपूर्वसम्बन्धकल्पनोन्मुखस्य पशुमित्रविन्दादिप्रकरणपठितेन तत्तत्क्रत्वपूर्वसम्बन्धबोधकेन साप्तदश्यविधिनोपसंहारः। यथा वा शाखान्तरगतस्य तच्छाखाध्येतॄन् प्रत्यर्थवतः "पुरोडाशं चतुर्द्धा करोति" इत्यस्य सर्वविशेषाक्षेपोन्मुखस्य शाखान्तरगतेन "आग्नेयं चतुर्द्धा करोति" इत्यनेन।

न च प्रकृते मृताहमात्रविषयाणां पार्वणैकोद्दिष्टवाक्यानां कथञ्चिदर्थवत्ता संभवति। ग्रन्थान्तरगतत्वेऽपि स्मृतिग्रन्थानां शाखान्तरवद् व्यवस्थितप्रमाणत्वाभावात्। तेन—

"अमावास्यां क्षयो यस्य प्रेतपक्षेऽथवा पुनः।
सपिण्डीकरणादूर्ध्वं तस्योक्तः पार्वणो विधिः"॥

इति शङ्खवचनवदौरसक्षेत्रजतदितरसाधारणरूपतत्तद्विषयविशेषालिङ्गितपार्वणैकोद्दिष्टवचनानां व्यवस्थितरूपत्वेऽप्येतेषां पार्वणमेव, एतेषामेकोद्दिष्टमेवेति वचनव्यक्त्या नियमार्थतापरं स्यात्।

वस्तुतस्तु तेषामव्यवस्थितरूपत्वात्सापि न।

"एकोद्दिष्टं तु कर्त्तव्यमौरसेन मृताहनि।
सपिण्डीकरणादूर्ध्वं मातापित्रोर्न पार्वणम्"॥

इति पैठीनसिनौरसस्याप्येकोद्दिष्टविधानात्।

'बह्वग्नयस्तु ये विप्रा ये चैकाग्नय एव च।
तेषां सपिण्डनादूर्ध्वमेकोद्दिष्टं न पार्वणम्'॥

इति च भृगुणा साग्नीनामपि तद्विधानात् । बृहन्नारदीये "विप्रः क्षयाहपर्वसु" इत्यादिग्रन्थेन क्षयाहे पार्वणमभिधाय "अग्न्यभावे तु विप्रस्य पाणौ होमो विधीयते" इति निरग्निकस्य पाणिहोममात्ररूप-विशेषविधानेन तस्यापि तत्र पार्वणाभ्यनुज्ञाप्रतीतेश्च ।

एतेन तेषामेकोद्दिष्टं न किन्तु पार्वणमिति किन्तुशब्दा-ध्याहारेण स्वरसभङ्गेनापि हेमाद्रेः पूर्वग्रन्थव्याख्यानमभ्युपगम्य तदविरोधसंपादनेन "वर्षे वर्षे तु कुर्वीत पार्वणं योऽग्निमान्द्विजः" इत्यादिभिः साग्नेः पार्वणनियमकरणाभ्युपगमेऽपि "निरग्निरग्निमान्वापि धीर एकोद्दिष्टं मृताहनि" इत्यादिना निरग्नेरेकोद्दिष्टनियमः कर्तुं न शक्यत इति द्रष्टव्यम् । वाक्यभेदप्रसङ्गाच्च । इदं च निरग्नेरेकोद्दिष्ट-नियमाकरणं तस्य पार्वणैकोद्दिष्टविकल्पाभिधायिनो हेमाद्रेरपि संमतमेव ।

एतेन चौरसस्य साग्नीनां चैकोद्दिष्टविधानेन निरग्नीनामपि च पार्वणविधानेन मिताक्षराहेमाद्रीयमदनरत्नादिग्रन्थलिखितेन साग्न्यौ-रसक्षेत्रजयोरेव पार्वणम्, अन्येषां त्वेकोद्दिष्टमेवेति शूलपाण्यादि-मतमप्यपहस्तितं वेदितव्यम् ।

"यः सपिण्डीकृतम्" इत्यादिसामान्यवचनैरेव मृताहेऽपि पार्वणे प्राप्यमाणे मृताहविषयैरेकोद्दिष्टवचनैर्बाधने प्रतिप्रसवस्तु साग्निकयोरौरसक्षेत्रजयोस्तस्येति तदुक्तिस्तु मृताहविषयैरेव पूर्वलिखितेषु भूयःसु वचनेषु सत्सु न हायं स्थाणोरपराधो यदेनमन्धो न पश्यतीति न्यायेनापेक्षणीयैव ।

किञ्च सामान्यवचनान्यपि प्रयोजनविरहान्मृताहविषयाण्येव । अन्यविषयत्वे निःप्रयोजनत्वात् । तथा हि किमेतैः श्राद्धेषु पार्वण-प्रकारो विधीयते तस्य सपिण्डीकरणोत्तरकालिकत्वं वा ? नाद्यः । तस्य पार्वणातिदेशादेव सिद्धेः । एकोद्दिष्टविधानेन कश्चित्परं तस्य

बाधः। न द्वितीयः। ततः पूर्वमेकोद्दिष्टविधानेन पितृत्वप्राप्त्यभावादेव तत्रत्यश्राद्धेषु कृत्स्नपार्वणप्रकारासंभवेन च तदुत्तरकालिकेष्वेवार्थात्तदतिदेशस्य तदनुष्ठानस्य च सिद्धत्वात्। कृत्स्न्याभिप्रायैव च पार्वणवद्भावस्य सपिण्डीकरणोत्तरकालिकत्वोक्तिर्न तु तत्पूर्वभाविषु तदभावाभिप्राया किञ्चित्पार्वणधर्मपर्युदासानुपपत्तेरित्युक्तम्। "पृथक्त्वे तु कृते पश्चात्पुनः कार्या सपिण्डता। यः सपिण्डीकृतं प्रेतम्" इत्यादिका पार्वणविधिशेषभूतैकोद्दिष्टनिन्दापि तस्य क्षयाहविषयत्वं द्योतयति। अप्रसक्तस्य तस्य निन्दानुपपत्तेर्मृताह एव च सपिण्डनोत्तरं तस्य प्रसक्तेः। यत्र चापौरुषेयवेदगतापि किञ्चित्पक्षविधिशेषभूता किञ्चित्पक्षनिन्दा तत्प्रसक्त्यपेक्षा भवति। येन तद्बलेन तस्यापि विधिमुन्नीय तमपि पक्षं कल्पसूत्रकाराः पाक्षिककर्त्तव्यत्वेन निबध्नन्ति तत्र किमु वक्तव्यं पौरुषेयस्मृतिगता तत्प्रसक्त्यपेक्षेति।

तेनैकोद्दिष्टनिन्दोपोद्बलितः पार्वणविधिरपि परस्परनिन्दोपोद्बलितोदितानुदितहोमवन्निन्दितसमानविषयत्वौचित्यान्निन्दितस्य चैकोद्दिष्टस्य क्षयाहविषयत्वात्सोऽपि तात्पर्यतः क्षयाहविषय एव। क्षयाहकटाक्षेणैव प्रवृत्तेषु तु तेषु यः संक्रान्त्यादिपरामर्शी यत्र यत्रेति वीप्सावादश्च स प्रासङ्गिकः। तेनामावास्याप्रेतपक्षक्षयाहयोरेव पार्वणनियमः। इतरत्र तु साग्नीनां निरग्नीनां चौरसक्षेत्रजयोर्दत्तकादीनां च सर्वेषां पार्वणैकोद्दिष्टयोर्विकल्प एव। स च वंशपरम्परायातसमाचारव्यवस्थित इत्येव मिताक्षरोक्तं युक्तम्।

यदि च साग्निकौरसविषयैकोद्दिष्टविध्यारनाश्वासस्तदा तस्यापि पार्वणनियमो भवत्वितरेषां तु विकल्पोऽप्रतिहत एवेति। अस्मिंश्च पक्षे—

"पितुर्गतस्य देवत्वमौरसस्य त्रिपूरुषम्।
सर्वत्रानेकगोत्राणामेकस्यैव मृताहनि"॥

इति पराशरवचनमप्यौरसदत्तकादिविषयमेव व्याख्येयम्।

एवं हि तदा तस्यार्थः । औरसक्षेत्रजेन दैवत्वं गतस्य सपिण्डीकृतस्य पितुः सर्वत्र दर्शादौ मृताहनि च श्राद्धं त्रिपूरुषं पार्वणविधानेन कर्त्तव्यम् । दृष्टान्तार्थं च सर्वग्रहणम् । मृताह एव तु कदाचितः । अनेकगोत्राणामेकगोत्राणामौरसक्षेत्रजकादिनाम्यगोत्रं प्रविष्टैर्दत्तकादिभिरिति यावत् । पितुर्मृताहन्येकोद्दिष्टमेव कर्त्तव्यं दर्शादौ तु यथाप्राप्तं पार्वणमिति । अत्र चौरसस्य पार्वणनियम एव विधेयः । दत्तकादिष्वेकोद्दिष्टांशे त्वनुवाद एव ।

मिताक्षराकारमते त्वनेकगोत्राणां कर्त्रा सह भिन्नगोत्राणां मातुलादीनां मृताहनि श्राद्धमपि कार्यन्तराभावे भागिनेयादिभिरेकस्यैव कार्यमित्यर्थः । अयमपि न विधिरेव ।

अत्र पितृग्रहणं मातुरप्युपलक्षणम् । पुत्रैर्निमित्तवचनानां केषुचित्पित्रोर्मातापित्रोरिति स्पष्टं मातुरप्युपादानात् । किञ्चौरसादिपुत्रोपादानादेव तत्प्रतिसम्बन्धितया पितुरिव मातुरपि श्राद्धदेवतात्वेनोपस्थितिसिद्धेः ।

"प्रत्यब्दयोर्यथा कुर्यात्पुत्रः पित्रे सदा द्विजः ।
तथैव मातुः कर्त्तव्यं पार्वणं चाप्यदैव वा" ॥

इति कात्यायनवचनाच्च । "पितुर्गतस्य देवत्वम्" इति वचनस्य स्वमतेन व्याख्यानार्थं मिताक्षराग्रन्थे चन्मातामहग्रहणवत्येन मातुलादिग्रहणं तेनापुत्रमातामहश्राद्धमपि मृताहे पितृवत्पार्वणैकोद्दिष्टप्रकारविकल्पेन कर्त्तव्यं न त्वेकोद्दिष्टप्रकारेणैवेति गम्यते ।

"पितृव्यभ्रातृमातृणामपुत्राणां तथैव च ।
मातामहस्यापुत्रस्य श्राद्धानि पितृवद्भवेत्" ॥

इति हेमाद्रिधृतजातूकर्ण्यवचनात्, "अपिण्डेन कर्त्तव्यम्" इति वचनाच्च । अत एवात्र मातामहस्यापि गृहीतं । दौहित्रस्याधिकाराच्च ।

मातृशब्देनात्र मातृसपत्नीस्वौरसपुत्ररहिता गृह्यते। इतरथा मातुः श्राद्धं कुर्यादित्युक्ते प्रतिसम्बन्धिनः पुत्रस्यैव श्राद्धकर्तुरुपस्थितेस्तस्या अपुत्रविशेषणव्याघातात्। उपदेशादेव जननीश्राद्धे पार्वणादिसिद्धेरतिदेशानपेक्षणाच्च।

यत्तु—

"सपिण्डीकरणादूर्ध्वं पित्रोरेव हि पार्वणम्।
पितृव्यभ्रातृमातॄणामेकोद्दिष्टं सदैव हि"॥

इति कात्यायनवचनं तत्कर्त्रपेक्षया कनीयःपितृव्यादिविषयम्।

"पितृव्यभ्रातृमातॄणां ज्येष्ठानां पार्वणं भवेत्।
एकोद्दिष्टं कनिष्ठानां दम्पत्योः पार्वणं मिथः"॥

इति दाक्षिणात्यनिबन्धधृताचारसंवादिचतुर्विंशतिमतवचनात्, "ज्येष्ठो भ्राता पितुः समः" इति वचनाच्च।

अत्रापि सर्वत्र मातृपदं मातृसपत्नीपरमेव। पूर्वत्रैव जनन्याः पार्वणविधानादेकोद्दिष्टविधानानुपपत्तेः।

यत्तु पितृव्याद्येकोद्दिष्टवचनानां तीर्थमहालयश्राद्धविषयत्वम्—

"उपाध्यायगुरुश्वश्रूपितृव्याचार्यमातुलाः।
श्वशुरभ्रातृतत्पुत्रपुत्रर्त्विक्याज्यपोषकाः॥
भगिनीस्वामिदुहितृजामातृभगिनीसुताः।
पितरौ पितृपत्नीनां पितुर्मातुश्च या स्वसा॥
सखिद्रव्यदशिष्याद्यास्तीर्थे चैव महालये।
एकोद्दिष्टविधानेन पूजनीयाः प्रयत्नतः"॥

इति हेमाद्रिधृतवचनसंवादात्प्रयोगपारिजातादावुक्तम्, तत्सांवत्सरिकप्रकरणपठितस्य कात्यायनवचनस्य सदाशब्दयोगान्म-

हास्यादिविषयत्वस्यापि संभवेऽपि प्रकरणाबाधाय सांवत्सरिक-विषयत्वस्याप्यवश्यं वाच्यत्वादयुक्तम् । पितृपत्नीनां मातृपत्नीनां मातापितरौ ।

"अपुत्रा ये मृताः केचित्स्त्रियो वा पुरुषास्तथा ।
तेषामपि च देयं स्यादेकोद्दिष्टं न पार्वणम् ॥
इति सपिण्डीकरणादूर्ध्वं यत्र यत्र प्रदीयते ।
भ्रात्रे भगिन्यै पुत्राय स्वामिने मातुलाय च ।
मित्राय गुरवे श्राद्धमेकोद्दिष्टं न पार्वणम्" ॥

इति गर्गसुमन्तुवचनस्यादिकात्यायनवचनाविरोधाय भ्रातृ-कर्त्र्यवचने पितृवद्भ्रात्रवचनमावश्यकत्वार्थम् । न तु पार्वणधर्मातिदेशार्थमिति । यच्चेमाद्रिणोक्तं तदपि वाचनिकव्यवस्थयैव पितृव्यादि-त्रयविषयपार्वणैकोद्दिष्टयोरविरोधसंपादनान्निरस्तं वेदितव्यम् । मातामहपितृव्यभ्रातृमातृसपत्नीश्राद्धावश्यकत्वस्य "पुत्रादिरेव चोत्तराः" इत्यनेनैव सिद्धेश्च । तथाहि विष्णुपुराणे—

"पूर्वाः क्रिया मध्यमाश्च तथा चैवोत्तराः क्रियाः ।
त्रिप्रकाराः क्रिया ह्येतास्तासां भेदं शृणुष्व मे ॥
आदाहाद् द्वादशाहाच्च मध्ये याः स्युः क्रिया मताः ।
ताः पूर्वा मध्यमा मासि मास्येकोद्दिष्टसंज्ञिताः ॥
प्रेते पितृत्वमापन्ने सपिण्डीकरणादनु ।
क्रियन्ते याः क्रियाः पित्र्याः प्रोच्यन्ते ता नृपोत्तराः" ॥

इति पितृकर्मणस्त्रैविध्यमभिधाय—

"पितृमातृसपिण्डैस्तु समानसलिलैस्तथा ।
तत्संघातगतश्चैव राज्ञा वा धनहारिणा ॥

पूर्वाः क्रियाश्च कर्त्तव्याः" इति राजान्तैः पूर्वक्रिया अवश्यं कर्त्तव्या इत्यभिधाय "पुत्रःद्यैरेव चोत्तराः। "दौहित्रैर्वा नरश्रेष्ठ कार्यास्तत्तनयैर्यथा"इत्यनेन 'पुत्रः पौत्रः प्रपौत्रो वा भ्राता वा भ्रातृसन्ततिः" इति विष्णुपुराण एव पूर्वं निर्दिष्टानां पुत्रादीनां भ्रातृसन्तत्यन्तानां दौहित्राणां च कर्तॄणां स्वप्रतिसम्बन्धिनाम्, उत्तराश्चशब्दात्पूर्वा मध्यमाश्चावश्यकर्तव्यत्वेनोक्ताः। अत्र ह्येवकारः कार्या इत्यनेन सम्बध्यते यद्यप्यन्यदेवत्यः पशुः "आग्नेय्येव मनोता कार्या" इत्यत्रेव। यथाश्रुतनियमे स्वामिमातुलमित्रादिश्राद्धप्रकारोपदेशानुपपत्तिप्रसङ्गात्। पुत्रादीनामावश्यकत्वोक्तौ तु करुणयान्येषामपि सम्बन्धिश्राद्धप्रसक्तौ तत्प्रकारविधानमुपपद्यते। अत एवोक्तं संग्रहे—

"कारुण्यात्क्रियते श्राद्धं यस्य दाता न विद्यते।
एकोद्दिष्टं भवत्येषां सर्वदा न तु पार्वणम्" ॥ इति।

सर्वदा क्षयाहे तीर्थमहालयादौ चेत्यर्थः। अत एव च राजान्तानां पूर्वक्रियामात्रावश्यकत्वोक्तेर्मध्यमास्वनियम इति निबन्धकाराः। प्रेतसम्बन्धिप्रभूतधनहारिणो यस्य कस्यापि तदुत्तरक्रियाणामप्यवश्यकर्त्तव्यतोक्ता स्कन्दपुराणे—

"मलमेतन्मनुष्याणां द्रविणं यत्प्रकीर्त्तितम्।
तद्गृह्णन्मलमादत्ते दुर्विधाज्ञानिनामपि ॥
ऋषिभिस्तस्य निर्दिष्टा निष्कृतिः पावनी परा।
आदेहपतनात्तस्य कुर्यात्पिण्डोदकक्रियाम्" ॥ इति।

दुर्विधा दरिद्राः। दरिद्राणामज्ञानिनां मूर्खाणामपि तद्गृह्णन्नित्यन्वयः। तेनामावास्यामहालयक्षयाहयोर्मातृक्षयाहे च यस्य कस्यापि येन केनापि केषांचिन्मते औरसक्षेत्रजाभ्यां साग्निकाभ्यां मातापितृक्षयाहे च पार्वणमेव कार्यम्। इतरत्र क्षयाहे साग्निकौरसाद्यतिरिक्तैश्च मातापित्रोरपि पार्वणमेकोद्दिष्टं वा विकल्पेन। मातामहयो-

ज्येष्ठानां भ्रातॄणां मातृसपत्नीपितृव्यादीनां च [illegible] पार्वणं तथैव। ज्येष्ठानामपि पितृव्यादीनां पत्न्याश्च [illegible]। अज्येष्ठानां पितृव्यादीनामाचार्यादीनां भ्रातॄणां श्राद्धं तीर्थे चैकोद्दिष्टमेव। मातामहानां मातृसपत्न्याश्च तीर्थे पार्वणमेव सर्वं। यत्र मातृश्राद्धं पृथक्। मातृशब्दस्य पितृपत्नीसामान्येन जननी-सपत्न्यामपि प्रवृत्तेः। तदभावेऽपि वा "पितुःपत्न्यः सर्वा मातरः" इत्यस्माद्वचनात्। न हीदं वचनं केवलं स्वापितृत्वधर्मेण किन्तु मातृत्वप्रयुक्तकार्यप्राप्त्यर्थं च मातृशब्देनैव तस्या निर्देशार्थं च। विनिगमनाविरहात्।

एवं सति सूत्रकारेणान्वष्टकास्वेव पृथङ्मातृश्राद्धाभिधाना-द्वृत्तिकारादिभिः सर्वैस्तदुक्तं पत्न्यागमूलकं जनन्या सहैव तत्सपत्न्या अपि श्राद्धप्रकारो न्यायतुल्यत्वात्तीर्थमहालयादावपि प्राप्तोऽविरुद्धो भविष्यति। यत्र पत्नी भर्तुरन्यामन्यापत्र मृता तत्र, भर्तुस्तस्याश्च तिथिभेदेन मरणे तत्तत्तिथौ तस्य तस्याश्च पृथगेव सांवत्सरिकम्।

यदा तत्र तिथ्यैक्यं तदा यद्यप्येकदेशकालकर्तृकत्वेनानुष्ठानमात्र-विशेषत्वाद्देवताभेदेन पृथक्क्रियमाणयोरपि प्रधानयोरङ्गानां तन्त्रं प्राप्नोति।

न च भिन्नप्रयोगविधिपरिगृहीतानां प्रधानानां कथं तन्त्रं तत्तत्प्रयोगविधिपरिगृहीतपदार्थानां प्रयोगविध्यन्तरोपसंगृहीतपदार्थ-व्यवधानेन प्रयोगप्राशुभावभङ्गापत्तेरिति वाच्यम्। एककालानां भिन्नप्रयोगविधिविहितानामपि प्रधानानां भेदेन प्रयोगे मुख्यकाल-बाधापत्तेस्तदनुरोधेन प्रयोगप्राशुभावभङ्गेनापि तन्त्रानुष्ठानस्यैवौ-चितत्वात्। तथापि—

"एककाले गतासूनां बहूनामथवा द्वयोः।
तन्त्रेण श्रपणं कृत्वा श्राद्धं कुर्यात्पृथक् पृथक्॥

पूर्वकस्य मृतस्यादौ द्वितीयस्य ततः पुनः ।
तृतीयस्य ततः कुर्यात्संनिपातेष्वयं क्रमः" ॥

इति भृगुवचने साम्वत्सरिकाणां क्रमस्य प्रयोगभेदाख्यस्य पृथक्त्वस्यैव चाहत्य विधानात्पाकमात्रत्वे तन्त्रत्वोक्तेश्च पृथगेव दम्पत्योः श्राद्धं प्राप्नोति दैवादेकतिथौ मृतानामितरेषामिव । तत्र तद्बाधेन प्रकारविशेषो विहितो लौगाक्षिणा—

"मृताहनि समासेन पिण्डनिर्वपणं पृथक् ।
नवश्राद्धं च दम्पत्योरन्वारोहण एव तु" ॥ इति ।

समासेन संक्षेपेण यथा द्विपितृकः पितृद्वयोद्देशेनैकं पिण्डं ददाति "एकस्मिन्पिण्डे द्वौ द्वावुपलक्षयेत्" इति वचनात् । तथात्रापि दम्पत्योः स्त्रिया अन्वारोहणे । अत एव च ब्राह्मणोऽप्येक एव द्वयोः । प्रकरणादेव श्राद्धरूपविशेष्यलाभेन पिण्डनिर्वपणस्योपलक्षणत्वात् । अत एव न मृताहविशिष्टश्राद्धानुवादनिबन्धनवाक्यभेदोऽपि । दम्पत्योरिति तु विशेषणं विधेयस्य समासस्यानेकापेक्षस्यैकश्राद्धे विधातुमशक्यत्वात्मृष्यामह इति न्यायेन विवक्षितमेव ।

अन्वारोहणं तु विधेयसमासविशेषणं हविषो द्विरितिवत् । पृथङ्नवश्राद्धं चेत्यन्वयः । चस्त्वर्थे । नवश्राद्धं त्वन्वारोहणे दम्पत्योः पृथगेव कुर्यात् । पृथक्त्वं च पूर्वोक्तसमासविपर्यय एव । तेन प्रधानमात्रभेदः, अङ्गतन्त्रता भवत्येव । अत एव वचनान्तरं "नवश्राद्धं युगपत्तु समापयेत्" इति । समाप्तिग्रहणमुपक्रमस्याप्युपलक्षणं तद्यौगपद्येन विना समाप्तियौगपद्यासंभवात् ।

ननु च मृताहश्राद्धमात्रे समासे विहिते नवश्राद्धे कथं तत्प्राप्तियेन तद्विपर्ययरूपं पृथक्त्वं विधीयते ।

न च मृताहग्रहणस्योद्देश्यविशेषणत्वेनाविवक्षितत्वात्तत्रैव विधि-नैव तत्रापि तत्प्राप्तिरिति वाच्यम्। संनिधिनैव श्राद्धमात्रस्य मृताह-स्यैवोद्देश्यत्वात्। अन्यथा एकत्वपृथक्त्वादावपि समासविध्यापत्तेः। सत्यमनुवाद एवायं पूर्वविहितसमासविपर्ययस्य। अत एव नवश्राद्ध-ग्रहणमुपलक्षणमत्रयत्रपिण्डषोडशश्राद्धानाम्। एकवाक्यतायामेवं सति लभ्यते। साङ्गप्रधानतन्त्रत्वरूपसमासविपर्ययो पाकमात्रतन्त्रत्वरूपो वाक्यभेदेन विधीयताम्।

पक्षान्तरमपि गार्ग्येणोक्तम्—

"एकचित्यां समारूढौ दम्पती निधनं गतौ।
पृथक् श्राद्धं तयोः कुर्यादोदनं च पृथक् पृथक्" ॥ इति।

ओदनमदनपिण्डम्। पाकतन्त्रत्वस्य व्याघातात् "एकपाके पत्नीनाम्" इति वचनात्—

"एकचित्यां समारूढौ म्रियेते दम्पती यदि।
तन्त्रेण श्रपणं कुर्यात्पृथक्पिण्डं समापयेत्"।

इति विशेषवचनाच्च प्राप्तेः। श्राद्धशब्देन च ब्राह्मणभोजनमुच्यते। तेन ब्राह्मणपिण्डदानात्मकं प्रधानमात्रं भेदेन कर्त्तव्यम्, अङ्गानि तु तन्त्रम्। पितृमातामहपार्वणद्वयवदित्यर्थः।

न चेदं वचनं नवश्राद्धविषयं तेन साम्वत्सरिके पूर्ववचनोक्त एक एव पक्ष इति वाच्यम्।

"या समारोहणं कुर्याद्भर्तुश्चित्यां पतिव्रता।
तां मृताहनि संप्राप्ते पृथक् पिण्डे नियोजयेत् ॥
प्रत्यब्दं च नवश्राद्धं युगपत्तु समापयेत्"।

इति भृगुणा मृताहश्राद्ध एव पृथक्पिण्डदानस्योक्तत्वात्। पिण्डग्रहणं ब्राह्मणभोजनस्याप्युपलक्षणम्। चकारो नवश्राद्धं चेति योजनीयः। तुशब्दः समापयेदिति। पृथक्पिण्डदाने उक्ते प्रयोगभेदशङ्का स्यात्तन्निवृत्तये इदमुच्यते प्रत्यब्दश्राद्धं नवश्राद्धं च समापयेत्तु युगपदिति। या त्वस्य वचनस्य साम्वत्सरिकैकोद्दिष्टपक्षविषयता हेमाद्रिणोक्ता सा निर्बीजा।

न च पिण्ड इत्येकवचनादेवमिति वाच्यम्। तस्यानुवाद्यविशेषणत्वेनाविवक्षितत्वात्। यत्पिण्डे नियोजयेत्तत्पृथगित्येव ह्यत्र विधीयते न तु पिण्डोऽपि। तेन प्रधानेऽपि तन्त्रमङ्गेष्वेव वा तन्त्रमिति पक्षद्वयमन्वारोहणे मृताहैक्ये। तच्च शक्त्यशक्तिव्यवस्थितम्। अत एव प्रयोगपारिजाते वचनम्—

"एकचित्यां समारुह्य मृतयोरेकबर्हिषि।

पित्रोः पिण्डान् पृथग्दद्यात्पिण्डं वापत्सु तत्सुतः" इति।

बर्हिर्ग्रहणं सकलाङ्गोपलक्षणम्।

यत्तु तिथिभेदेनाप्यन्वारोहणे भर्तृतिथावेव पत्न्या अपि श्राद्धस्यानुष्ठानं केषांचिद्दाक्षिणात्यानां तदतिभ्रान्त्येति।

इत्थं पार्वणश्राद्धकाला दर्शिताः।

## अथैकोद्दिष्टकालाः प्रदर्श्यन्ते।

यानि श्राद्धान्येकोद्दिष्टप्रकारेण कर्त्तव्यानि तानि प्रदर्श्यन्त इत्यर्थः। तानि च त्रिविधानि नवानि नवमिश्राणि पुराणानि च। तथा चाश्वलायनः—

"नवश्राद्धं दशाहानि नवमिश्रं तु षड्ऋतून्।

अतः परं पुराणं वै त्रिविधं श्राद्धमुच्यते"॥ इति

श्राद्धमेकोद्दिष्टम्।

## एकोद्दिष्टश्राद्धे नवश्राद्धविवेचनम् ।

तत्र नवानि तावत् । तान्यनेकविधान्युक्तानि ।

तत्र हेमाद्र्युदाहृते नागरखण्डे—

"त्रीणि संचयनस्यार्थे तानि वै शृणु साम्प्रतम् ।
यत्र स्थाने भवेन्मृत्युस्तत्र श्राद्धं तु कारयेत् ॥
एकोद्दिष्टं ततो मार्गे विश्रामो यत्र कारितः ।
ततः संचयनस्थाने तृतीयं श्राद्धमिष्यते ॥
पञ्चमे सप्तमे तद्वदष्टमे नवमे तथा ।
दशमैकादशे चैव नवश्राद्धानि तानि वै" ॥ इति ।

कात्यायनोऽपि—

"चतुर्थे पञ्चमे चैव नवमैकादशेऽहनि ।
यत्तु वै दीयते जन्तोस्तन्नवश्राद्धमुच्यते" ॥ इति ।

संज्ञाकरणं च चान्द्रायणं नवश्राद्ध इति प्रायश्चित्तविशेषविधानार्थम् । एवमन्यत्रापि । यद्यप्यनेकविधानि तान्युक्तानि तथापीदानीं शिष्टाचारे—

"प्रथमेऽह्नि तृतीये च सप्तमे नवमे तथा ।
एकादशे पञ्चमे स्युर्नवश्राद्धानि षट् तथा" ॥

इति वृद्धवसिष्ठोक्तानि प्रचरन्ति ।

बौधायनेन तु पञ्चैवोक्तानि । नवमदिवसकर्त्तव्यस्य च तत्रासंभवे एकादशदिनकर्त्तव्यतोक्ता । मरणाद्विषमेषु दिनेष्वेकैकं नवश्राद्धं

कुर्यादानवमात्, यत्र नवमं विच्छिद्यत एकादशेऽह्नि तत्कुर्यादिति। अनयोपक्षयोर्व्यवस्थाप्युक्ता शिवशर्मणा—

"नवश्राद्धानि पञ्चाहुराश्वलायनशाखिनः।
आपस्तम्बाः षडित्याहुर्विभाषामैतरेयिणः" ॥ इति।

अत्रिणा त्वेकमेवोक्तम्—"नवश्राद्धनिमित्तं तु एकमेकादशेऽहनि" इति। "आद्यं श्राद्धमशुद्धोऽपि कुर्यादेकादशेऽहनि" इति यच्छङ्खोक्तमाद्यं तदपि नवमिति हेमाद्रिणा कालकाण्डे ( खण्डे ) व्याख्यातम्।

कात्यायनगृह्ये इदं नावमित्युक्तम्। तदपि नवमेव। स्वार्थेऽण्करणात्।

एवं सति यदि गृह्येषु नवश्राद्धान्युक्तानि भवन्ति तदा यथागृह्यं कर्त्तव्यानि। नो चेत्सर्वाणि पुराणाद्युक्तानि कर्त्तव्यानि। तेषां प्रेतत्वनिवर्त्तकत्वात्। यथाह वृद्धवसिष्ठः—

"अलब्ध्वा च नवश्राद्धं प्रेतत्वान्न विमुच्यते।
अर्वाक् द्वादशाहस्य लब्ध्वा तरति दुष्कृतम्" ॥ इति।

वाचनिकस्तु केषांचिद्विकल्पो यथा शिवस्वामिवचनात्।

एतेषां च सर्वेषां यद्यपि—

"नवश्राद्धानि कुर्वीत प्रेतोद्देशेन यत्नतः।
एकोद्दिष्टविधानेन नान्यथा तु कदाचन" ॥

इति ब्रह्माण्डपुराणात्सपिण्डनपूर्वभावित्वाच्चैकोद्दिष्टरूपत्वं तथापि ब्राह्मणा युग्मसंख्या भवन्ति।

"पञ्चमे नवमे चैव तथैवैकादशेऽहनि।
युग्मांस्तु भोजयेद् विप्रांस्तन्नवश्राद्धं तु तद्विदुः" ॥

इति कूर्मपुराणात्।

"नव श्राद्धं तु तद्विदुः" इत्युक्तत्वादेतद्वचनानुरोधेऽपि युग्म-द्विजा एव। शूलपाणौ तु "अयुग्मान् भोजयेद्विप्रान्नवश्राद्धमुच्यते" इति पाठः। एकादशाहिके त्वेकोऽपि ऋषिवचनात्।

कात्यायनोक्तचतुर्थाहनवश्राद्धे यदन्यदपि देयमुक्तं बृहस्पतिना—

"चतुर्थेऽहनि विप्रेभ्यो देयमन्नं हि बान्धवैः।
गावः सुवर्णं वित्तं च प्रेतमुद्दिश्य शक्तितः॥
यदिष्टं जीवतश्चासीद्दद्यात्तस्य प्रयत्नतः" ॥ इति।

क्षत्रियादिभिस्तु पञ्चमादिषु। तथा च ब्रह्मपुराणे—

"चतुर्थे ब्राह्मणानां च पञ्चमेऽहनि भूभृताम्।
नवमे वैश्यजातीनां शूद्राणां दशमात्परः" ॥ इति।

शय्यादिकं त्वेकादशाहिके। तथा च बृहस्पतिः—

"एकोद्दिष्टविधानेन यदेकस्य प्रदीयते।
आवाहनाग्नौ करणरहितं दैववर्जितम्॥
वस्त्रालङ्कारशय्यादं पितुर्यद्वाहनायुधम्।
गन्धमाल्यैः समभ्यर्च्य श्राद्धभोक्त्रे तदर्पयेत्॥
भोजनं चानेकविधं कारयेद्व्यञ्जनानि च।
यथाशक्त्या प्रदद्याच्च गोभूहेमादिकं तथा" ॥ इति।

नवशय्यापि तदा देया—

"सूतकान्तद्वितीयेऽह्नि शय्यां दद्यात्सुलक्षणाम्।
काञ्चनं पुरुषं तद्वत्फलवस्त्रसमन्वितम्॥
सम्पूज्य द्विजदाम्पत्यं नानाभरणभूषणैः।
वृषोत्सर्गं च कुर्वीत देया च कपिला शुभा" ॥

इति मत्स्यपुराणात्।

यद्यपि चैकादशेऽह्नि नवश्राद्धमपि विहितं "मृतेऽहनि तु कर्त्तव्यं प्रतिमासं तु वत्सरम्" इत्यभिधाय "आद्यमेकादशेऽहनि" इति याज्ञवल्क्येनाभिधानान्मासिकानां च तत्तन्माससम्बन्धिमृताहाधिकरणकानां तत्तन्मासाद्यदिनेष्वेव कर्त्तव्यत्वेन मरणदिने प्राप्तस्याद्यमासिकस्यैवैकादशेऽहन्युत्कर्षस्योचितत्वादाद्यमासिकमपि तत्र प्राप्तं तथापि श्राद्धभोक्त्रे प्रेतवस्त्रालङ्कारादिदानं यत्र विहितं तदेकादशाहश्राद्धं ताभ्यां भिन्नमेव। कूर्मपुराणे—"एकादशेऽह्नि कुर्वीत प्रेतमुद्दिश्य भावतः" इत्यादिना सधर्मकमेकादशश्राद्धं विधाय "एवं मृताह्नि कर्त्तव्यं प्रतिमासं तु वत्सरम्" इत्यनेन तद्धर्मातिदेशेन मासिकानामुत्पादनात्।

मत्स्यपुराणेऽपि—

"ततस्त्वेकादशाहे तु द्विजानेकादशैव तु।
क्षत्रादिः सूतकान्ते तु भोजयेदयुजो द्विजान्" ॥

इत्यादिना सधर्मकं तद्विधाय "अनेन विधिना सर्वमनुमासं समाचरेत्" इति तथैव तेषामुत्पादनात्। तथा—

"एकादशाहे यच्छ्राद्धं तत्सामान्यमुदाहृतम्।
एकादशभ्यो विप्रेभ्यो दद्यादेकादशेऽहनि" ॥ इति भविष्योत्तरे।

"एकादशाहे कर्त्तव्यं श्राद्धं प्रेताय यत्नतः।
श्वः करिष्य इति ज्ञात्वा ब्राह्मणामन्त्रणक्रिया" ॥

इति वराहपुराणे चात्यन्ताबुद्धिस्थे मासिकश्राद्धे विधीयमानमेकादशाहश्राद्धं ततो भिन्नमेव भवति। तस्मिंश्चैकस्यैव प्रेतस्य स्थाने एकादश ब्राह्मणा इति मुख्यः कल्पो मत्स्यपुराणादिवचनात्। प्रातरुत्थाय प्रेतब्राह्मणानेकादशामन्त्र्यापराह्णे नानाभक्ष्यान्नरसविन्यासैरित्यादि सत्यव्रतवचनाच्च।

विष्णुना तु यथाशक्ति बहव उक्ताः। "अथा (१) शौचक्षयगमे प्रातः सुप्रक्षालितपाणिपादः स्वाचान्त एवंविधानेव ब्राह्मणान् यथाशक्त्युदङ्मुखान् गन्धमाल्यवस्त्रालङ्कारादिभिः पूजितान् भोजयेत्" इति। वराहपुराणे तु—

"गतोऽसि दिव्यलोकं त्वं कृतान्तविहितात्पथः।
मनसा वायुभूतेन विप्रे त्वाहं नियोजये॥
पूजयिष्यामि भोगेन एवं विप्रं निमन्त्रयेत्"। इति।

"स्नापनाभ्यञ्जनं दद्याद्विप्राय विधिपूर्वकम्" इति ब्राह्मणं शीघ्रमानयेत्। "आगतं च द्विजं दृष्ट्वा कर्त्तव्या स्वागतक्रिया" इति।

"आवरणार्थं छत्रं तद्ब्राह्मणाय प्रदीयते।
पश्चादुपानहौ दद्यात्पादस्पर्शकरे शुभे॥
संतप्तवालुकाभूमिं महीं कण्टकितां तथा।
संतारयति दुर्गाणि प्रेतं ददुपानहौ॥
तिलोपचारं कृत्वा तु विप्रस्य नियतात्मवान्"।

इति चैकस्यैव ब्राह्मणस्य तत्र तत्र परामर्शादेकोऽप्युक्तः। बहुपक्षेऽपि प्रेतोपभुक्तवस्त्रादिकं नवशय्या च तन्मध्ये एकस्मा एव गुणवते देयमितरेभ्यो यथाशक्ति दक्षिणामात्रम्। तथा च भविष्योत्तरे"—एकादशेऽहनि" इत्यनन्तरम्—

"भोजनं तत्र चैकस्मै ब्राह्मणाय महात्मने।
वस्त्रालङ्कारशय्याद्यं पितुर्यद्वाहनादिकम्॥
गोगृहाशनदासीस्तु दद्यात्संपूज्य भक्तितः" इति।

बृहस्पतिवचनेऽपि "श्राद्धभोक्त्रे तदर्पयेत्" इत्येकस्मा एव वस्त्रादिदानमुक्त्वा "प्रदद्याद्दक्षिणां तेषां सर्वेषामनुरूपतः" इत्युक्तम्।

(१) आशौच० इति द्वि० पु० पाठः।

सत्यव्रतेनाप्युक्तम्—"तेषामेकस्मै गुणवते शय्या देया" इति। इदमेव च "सर्वैकोद्दिष्टप्रकृतिभूतत्वादाद्यम्" इति मिताक्षरादिग्रन्थेषु व्यवहृतं हेमाद्रिणापि श्राद्धखण्डे।

यद्यपि कात्यायनयाज्ञवल्क्यादिभिः सामान्येनैकोद्दिष्टधर्मा उपदिष्टास्तथापि मत्स्यपुराणबौधायनविष्णुस्मृत्यादिष्वेकादशाहश्राद्धमेव प्रस्तुत्यातिदेशप्राप्तेषु पार्वणधर्मेषु "विशेषरूपानपूर्वांश्चानेकविधान् धर्मानुपदिश्य पश्चान्मासिकसाम्वत्सरिकाद्येकोद्दिष्टेषु तेऽतिदिष्टाः। अत्र च बहुषु वाक्येष्वेकादशाहग्रहणं ब्राह्मणाभिप्रायकमाशौचोत्तरदिनोपलक्षणम्। "अथाशौचव्यपगमे" इति विष्णुवचनात्। "क्षत्रादिः सूतकान्ते तु भोजयेदयुजो द्विजान्" इति मत्स्यपुराणाच्च।

तेन क्षत्रियादिभिः स्वस्वाशौचान्ते त्र्यहैकाहाशौचिभिश्च तन्मध्य एव दशाहकृत्यानुष्ठाने तदन्ते एवैकादशाहश्राद्धं कर्त्तव्यमिति शूलपाणिप्रभृतयः। एवं सपिण्डीकरणमपि षोडशश्राद्धेष्वेकाहे द्वादशाश्चेति पक्षाश्रयणे आद्यश्राद्धोत्तरदिने सर्वेषामिति।

विज्ञानेश्वरहेमाद्रिप्रभृतयस्तु सर्वं—

"एकादशेऽह्नि यच्छ्राद्धं तत्सामान्यमुदाहृतम्।
सर्वेषामेव वर्णानां सूतकं तु पृथक् पृथक्"॥

इति पैठीनसिवचनात्,

"आद्यं श्राद्धमशुद्धोऽपि कुर्यादेकादशेऽहनि।
कर्त्तुस्तात्कालिकी शुद्धिरशुद्धः पुनरेव सः"॥

इति शेषवचनाच्च क्षत्रियादिभिरपि वचनादाशौचे सत्यपि मरणादेकादशाह एवाद्यश्राद्धं कर्त्तव्यमिति वदन्ति। तथा त्र्यहैकाहा-

शौचयोरपि तत्रैव सर्वैः। (१) सद्यःशौचग्रहणं स्वारसिकाशौच-संकोचोपलक्षणम्। अत्रैतस्मिन् पक्षे विष्णुवचनविरोधस्तावन्नास्ति। तस्य ब्राह्मणाभिप्रायेणाप्युपपत्तेः। संकोचमात्रं हि तदा न तु कस्य-चिल्लक्षणा। उपलक्षणत्वे त्वेकादशाहशब्दे विधौ सा स्यात्। नापि मात्स्यविरोधः। ब्राह्मण एकादशाहे आद्यश्राद्धे एकादश द्विजान् भोजयेदेव क्षत्रियादिस्तु तत्रैव तत्कुर्वन्नपि न पक्वेनान्नेन ब्राह्मणान् तदा भोजयेत्। किन्तु तदा त्वपक्वेन तावद्ब्राह्मणभोजनपर्याप्तेनामेन सूतकान्ते पक्त्वा भोजयेदित्येवमर्थकेन तेनास्यैव पक्षस्य प्रसाधनात्।

एवं सत्येकादशाहसूतकान्तरूपकालद्वयोपेतं ब्राह्मणक्षत्रियादि-विषयं विधिद्वयमर्थवद्भवति। अन्यथा विष्णुवचनवत्सूतकान्तरूप-कालोपेतेनैकेनैव विधिना सर्ववर्णसाधारणाद्याश्राद्धविधिसिद्धौ तदनर्थकं स्यात्। अयुग्ग्रहणं च "श्रोत्रिया भोजनीयास्तु नव सप्त त्रयोदश" इति बृहस्पत्युक्त्या युग्मसंख्यान्तरस्याप्युपसंग्रहविषयम्।

अत्रैतावच्चिन्त्यम्। गात्रपूरकाणां पिण्डानामसमाप्तौ क्षत्रियादी-नामेकादशाहे कथमाद्यं श्राद्धमिति।

यदा हि "यावदाशौचं प्रेतस्योदकं पिण्डमेकं च दद्युः" इति विष्णुवचनेन—

"ब्राह्मणे दश पिण्डाः स्युः क्षत्रिये द्वादश स्मृताः।
वैश्ये पञ्चदश प्रोक्ताः शूद्रे त्रिंशत्प्रकीर्त्तिताः"॥

इति पारस्करवचनेन चोक्तः पक्षः समाश्रीयते तदा पिण्डा-समाप्तिः स्पष्टैव। यदापि "सर्वेभ्यः प्रेतवर्णेभ्यः पिण्डान् दद्याद्दशैव तु" इति पारस्करेणैवोक्तो द्वितीयः पक्ष आश्रीयते तदापि—

(१)—"सद्यःशौचेऽपि दातव्यं प्रेतस्यैकादशेऽहनि।
स एव दिवसस्तस्य श्राद्धशय्यासनादिषु" इति शङ्खवचनात्।
इति द्वि० पु० पाठोऽधिकः।

"राज्ञस्तु दशमः पिण्डो द्वादशेऽहनि दीयते ।
वैश्यस्य पञ्चदशमे ज्ञेयस्तु दशमस्तथा ।
शूद्रस्य दशमः पिण्डो मासे पूर्णेऽहि दीयते" ॥ इत्यादिपुराणात्,

"पिण्डः शूद्राय दातव्यो दिनान्यष्टौ नवाथवा ।
सपूर्णे तु ततो मासे पिण्डशेषं समापयेत्" ॥

इति प्रचेतोवचनाच्च स्वस्वाशौचान्त्यदिने दशमपिण्डदानस्य सर्वेषां विधानात्सास्त्येवेति । एतावांश्चात्र परिहारो नास्ति वचनस्यातिभार इति ।

यदा हि याज्ञवल्क्योक्तः पिण्डत्रयदानपक्षः समाश्रीयते ।

"सर्वेषामेव वर्णानां सूतके मृतकेऽथवा ।
दशाहाच्छुद्धिरेतेषामिति शातातपोऽब्रवीत्" ॥

इत्यङ्गिरसोक्तं क्षत्रियादीनामपि दशरात्राशौचं वा, इदानीन्तनभूयःशिष्टक्षत्रियशूद्राचारसम्वादि सदा तावत्सम्यगेव ।

यदापि द्वादशाहाद्याशौचपक्षस्य पूर्वोक्तयोश्च पिण्डदानपक्षयोः समाश्रयणं तदापि वचनवशादेकादशाहश्राद्धं कृत्वापि पिण्डसमाप्तौ न काचित् क्षतिः । मिताक्षराकारादिमत एव शूद्रस्य मृताहावधिकद्वादशाहे षोडशश्राद्धपूर्वकं सपिण्डीकरणं कृत्वेव ।

यत्तु—

"शिरस्त्वाद्येन पिण्डेन प्रेतस्य क्रियते सदा ।
द्वितीयेन तु कर्णाक्षिनासिकास्तु समासतः ॥
अन्त्रांसभुजवक्षांसि तृतीयेन तु सर्वदा ।
चतुर्थेन तु पिण्डेन नाभिलिङ्गगुदानि च ॥

ऊरू जङ्घे तथा पादौ पञ्चमेन विधीयते ।
षष्ठेन सर्वमर्माणि सप्तमेन च नाडयः ॥
दन्तलोमाद्यष्टमेन वीर्यं तु नवमेन च ।
दशमेन तु पूर्णत्वं तृप्तत्वं तृड्विपर्ययः" ॥

इति ब्रह्मपुराणादिषु दशपिण्डदानस्यावयवनिष्पादकत्वश्रवणं तदर्थवादमात्रम् । अत एव मिताक्षरायामिदं किमपि नोट्टङ्कितम् ।

किञ्च यद्येतेषां पिण्डानां "प्रेतलोके तु वसतिर्नृणां वर्षं प्रकीर्त्तिता" इत्येतदर्थवादप्रमाणकप्रेतशरीरावयवनिष्पादकत्वं स्यात्तत उत्तरश्राद्धसहकारेण तद्विनाशफलकस्याद्यश्राद्धस्य तत्पूर्वकपितृत्वप्राप्तिफलकानां सपिण्डीकरणान्तानां वा दशमपिण्डात्पूर्वं करणं विरुध्येत । न तु तत्संभवति । प्रेतशरीरस्य "क्षुत्तृष्णे प्रत्यहं तत्र भवेतां भृगुनन्दन" इति वचनाद् दुःखैकभोगहेतुत्वेन तन्निष्पत्तेर्वैधकर्मफलत्वासंभवात् । अवशिष्टकर्मफलाय भोगार्थजरायुजादिशरीरावयवारम्भकत्वे तु सत्यपि न कोऽपि विरोधः ।

वस्तुतस्तु तदपि न संभवति । शुक्रशोणिताहारपरिणामविशेषादिभिर्दृष्टैरेतच्छरीरपातावशिष्टकर्मभिश्च तदारम्भोपपत्तेरेतत्पिण्डदानानपेक्षणात् । अन्यथा चण्डालतिर्यगादिशरीरपातानन्तरं शरीरान्तरारम्भो न स्यात् । तत्र पिण्डदानाभावात् । तेनार्थवादिकमपि नावयवनिष्पत्तिः पिण्डदानस्य फलं किन्तु तदकरणनिमित्तप्रेतनरकप्राप्तिपरिहारः ।

तथा च ब्रह्मपुराणे—

"ग्रामाद्बहिश्च कर्त्तव्यं जलाशयसमीपतः ।
पिण्डदानं दशाहानि प्रेतायारण्यमाश्रितैः ॥
अरण्ये पिण्डदानं तु मोहाच्च क्रियते यदि ।
तदा रौरवमायाति प्रमीतः प्रथमेऽहनि ॥

पुंन्नामसंज्ञं त्वपरे महारावं तृतीयके ।
तामिस्राख्यं चतुर्थे तु प्रयात्यथ सुदारुणम् ॥
पञ्चमे चान्धतामिस्रं षष्ठे घोरं च सुप्रभम् ।
अमेध्यभूमिसंपूर्णं सप्तमेऽहनि घातकम् ॥
असिपत्रवनं घोरमष्टमेऽहनि सर्वथा ।
महारौरवसंज्ञं तु नवमे याति मानवः ॥
अवीचिरिति विख्यातं दशमेऽहनि भीषणम्" इति ।

प्रथमेऽहनि पिण्डदानं यदि न क्रियते इत्यनुषङ्गः । एवमग्रेऽपि । इयं चाकरणे निन्दा नारण्यरूपदेशसम्बन्धस्य किन्तु पिण्डदानस्यैव । तस्यैव पूर्वनानाविशेषणविशिष्टस्य विहितत्वात् । अत एव तस्यैव करणे हेतुत्वेनेदं परामृश्यते ।

"तन्दुलैः सक्तुभिः शाकैः फलैर्वा श्रद्धया ततः ।
देशकालानुसारेण कुर्यात्प्रेतस्य तर्पणम्" ॥ इति ।

तेन पिण्डदानस्याकरणनिमित्तनरकप्राप्तिरूपप्रेतानिष्टपरिहारार्थत्वाच्छाकेङ्गुदीपिण्याकपर्यन्तनिःसारद्रव्यविधानेन चावश्यकत्वावगमाद्ब्राह्मणसोमरणादिनिमित्तकमुक्तभावेन नरकादर्शनफलकप्रबलकर्मणा वा प्रेतगतानिष्टासंभवेऽपि कर्त्तुरेवाकरणे प्रत्यवायकल्पनया तत्परिहारार्थत्वाद्दशमपिण्डदानात् पूर्वमपि प्रेतत्वनिवर्त्तकस्यैकादशाहश्राद्धस्य सर्वैः शूद्रेण वा द्वादशाहे सपिण्डीकरणपर्यन्तानामपि करणे न कश्चिद्विरोध इति । यद्वा पिण्डदानस्यापि—

"स्वगोत्रान्य (१) गोत्रा वा स्त्रियो वा पुरुषास्तथा ।
प्रेतास्तु पिण्डसम्बन्धान्मुच्यन्ते तेन कर्मणा ॥

(१) "स्वगोत्रा वान्यगोत्रा वा" इति द्वि० पु० पाठः ।

वायुभूतास्तु तिष्ठन्तः कालक्षेपेण सर्वदा" ।

इत्यादित्यपुराणात्प्रेतत्वावस्थानिवृत्तिरेव फलम् । अत एव फलप्रतिपादकत्वेनेदमेव वाक्यमवतारितं हेमाद्रिणा । तथात्वे तदकरणे नरकप्राप्तिः करणाच्चानरकप्राप्तिरपि पूर्ववचनोक्ता सङ्गच्छते । अधर्मारब्धं हि प्रेतशरीरं दुःखैकभोगहेतुस्तन्निवर्त्तकाभावे दुःखभोगार्थं तांस्तान्नरकान् गच्छति । पिण्डदानेन च तदारम्भकाधर्मनाशद्वारा तच्छरीरनिवृत्तौ तदप्राप्तिरिति । तथात्वेऽपि च नोत्तरश्राद्धैः सह विकल्पः किन्तु समुच्चय एव । अदृष्टार्थत्वात् क्रमविधानाच्च । भाष्यकारमते आधानपवमानहर्विवत् । एवं च कृतेऽपि पूर्वमेवाद्यश्राद्धे सपिण्डनपर्यन्ते च प्रेतत्वनिवृत्तिर्दशमपिण्डोत्तरमेव भविष्यति । पौर्वापर्यमात्रे वैपरीत्यम् । प्रेतशरीरावयवपूरकत्वाभिधानं त्वर्थवादमात्रमप्यस्मिन्नेव पक्षे सालम्बनम् । पूर्णस्य ज्ञानवतो विनाशने ह्युत्कर्षातिशय इति पूर्णं ज्ञानवच्च कृत्वा विनाश्यत इति । तथा च "शिरस्त्वाद्येन पिण्डेन प्रेतस्य क्रियते तदा" इत्युपक्रम्य "दशमेन तु पूर्णत्वं तृप्तत्वं क्षुद्विपर्ययः" इत्युक्तम् । "दशाहप्रेतपिण्डेन ज्ञानं प्रेतेषु जायते" इति च । एवं च यथा—

"अर्वाक् संवत्सराद्यस्य सपिण्डीकरणं भवेत् ।
प्रेतत्वमिह तस्यापि ज्ञेयं संवत्सरं नृप" इत्यग्निपुराणात्,
"कृते सपिण्डीकरणे नरः सम्वत्सरात्परम् ।
प्रेतदेहं परित्यज्य भोगदेहं प्रपद्यते" ॥

इति विष्णुधर्मोत्तराच्चाशक्त्यादिना वृद्ध्यतिरिक्तेन निमित्तेन षोडशश्राद्धसपिण्डनापकर्षेऽपि वत्सरान्तोऽपि प्रेतदेहनिवृत्तावपेक्ष्यते तथात्रैकादशाहादावाद्यश्राद्धादिकरणेऽप्याशौचान्त्यदिने क्रियमाणदशमपिण्डदानमपीति तदन्त एव समस्तनिवर्तकसंपत्त्या प्रेतदेहनिवृत्तिरुपपन्नेति ।

मम तु प्रतिभाति । दुःखैकभोगहेतुनोत्सर्गतो यावदेकसम्वत्सरस्थायिना वायवीयेन प्रेतदेहेन भोग्यं यद्दुःखं तद्धर्मकनाश्यं नियमेन

तद्देहारम्भको मनुष्यशरीरारम्भकाधर्मशेषः पितृत्वप्राप्तिप्रतिबन्धकः सर्वमनुष्याणामस्ति यैश्चतुर्थाश्रमः—

"शुक्लाङ्गारकयुक्ता च चतुर्थी जायते यदा ।
श्रद्धया श्राद्धकृद्विप्रो न प्रेतो जायते मृतः" ॥

इति पद्मपुरादिविहितं कर्म वा न कृतम् । ततश्च प्रेतशरीरारम्भं विना तदेकसाध्यदुःखभोगासंभवात्तं च विना तदेकनाश्याधर्मनाशासंभवात्तदारम्भोपेक्षित एतन्नाधर्मनाशोपकारहेतुत्वादिति वैधस्यापि पिण्डदानस्य दुःखैकभोगहेतोरपि प्रेतदेहस्यावयवद्वारारम्भः फलं संभवत्येव । अत एव दुःखहेतोरप्युपवासादिरूपस्य तपसः फलनाश्यकर्मफललाभप्रतिबन्धकाधर्मनाशोपकारेण कर्माङ्गत्वमुक्तं "तपश्च फलसिद्धित्वाल्लोकवत्"इत्यत्र । अत एव चैकादशाहादिश्राद्धानामेव पूर्णप्रेतशरीरनिवृत्तिः फलत्वेनावगम्यते ।

"यस्यैतानि न दत्तानि प्रेतश्राद्धानि षोडश ।
पिशाचत्वं स्थिरं तस्य दत्तैः श्राद्धशतैरपि" ॥ इति यमवचनात्,

"एकादशादिभिः श्राद्धैर्मृतस्याप्यायनं भवेत् ।
सम्यक् सम्वत्सरे पूर्णे पितॄणां स्थानमृच्छति" ॥

इति देवलवचनाच्च, आप्यायनं तुष्टिः प्रेतत्वपरिहार इति शूलपाणिना व्याख्यातम् ।

यत्तु "स्वगोत्रा वान्यगोत्रा वा" इति वचनं तच्चिरकालमृताकृतौर्ध्वदेहिककेवलदुरितप्राप्तप्रेतदेहविषयम् । अत एव "कालक्षेपेण तिष्ठन्तः" इति तत्रोक्तम् । यत्तु त्रिरात्रं दशरात्रं वा प्रेतोद्देशेनोदकं क्षीरं च स्नानपानार्थं दीयते तन्नासौ तदानीमेव स्नाने पाने वा

विनियुङ्क्ते तस्य प्रत्यक्षतो नाशदर्शनात् । किन्तु तद्दानजनितापूर्वेण तस्य स्नानपानयोग्यदेहलाभोत्तरं तत्सजातीयं नीरक्षीरान्तरमुपतिष्ठतीति न कोऽपि विरोधः ।

यद्यप्यन्यज्ञातीनां सहभोजनादि प्रेताप्यायकत्वेन दशाहमध्यगतं श्रूयते तस्याप्येषैव गतिः । यथा वा गर्भिण्योपयुक्तं दोहदान्नपानाद्यपूर्णस्यैव गर्भस्याप्यायकं तथेदमपि क्षीरोदकदानाद्यपूर्वद्वारेण प्रेतदेहपुष्टिकरं भविष्यति । तेन गात्रपूरकसमाख्यातैरेतैरविकारिभिर्मरणानन्तरमेव दत्तैः पिण्डैः क्षिप्रमक्लेशेन प्रेतभावयोग्यानां प्रेतशरीरं जायते । तदभावे तु विलम्बेन क्लेशेन च गर्भशरीरवदेव । कीकटादिदेशविशेषसूतिकाद्यवस्थाविशेषमरणेन दुर्मरणावैधबुद्धिपूर्वमरणादिना वा क्षिप्रमप्यतिमूढं जडवृक्षादिवत्पिण्डदानदैवतात्वेऽप्यनधिकृतम् । तत्र प्रायश्चित्तविशेषादिना तदधिकारे संपादिते मोहापनयनेन तत्तदवयवगतज्ञानविशेषसंपादनेन ज्ञानवद्दुःखानुभवयोग्यं तच्छरीरमाशौचपिण्डदानेन क्रियत इत्याद्यलमतिदूरं गत्वा ।

तेन प्रेत शरीरसंपादकत्वे न काप्यनुपपत्तिरिति तदेव प्रयोजनं यावत्संभवमाशौचपिण्डानाम् । अत एव पितृव्याणां तत्तदवयवनिष्पत्त्यर्थत्वोल्लेखेनैव प्रथमादिदशमान्तपिण्डदानप्रयोगलिखनम् । तेन दशमपिण्डदानात्पूर्वं प्रेतदेहस्यैवानिष्पन्नत्वात्तन्निवृत्त्यर्थानामेकादशाहादिश्राद्धानां तत्र करणमनुचितमेवेत्येकादशाहग्रहणमाशौचान्त्यदिनोत्तरदिनोपलक्षणमेव युक्तं विष्णुवचनैकवाक्यतया ।

पैठीनसिवचनं त्वाशौचोत्तरदिनभूते एकादशेऽह्नि बहुषु वचनेषूत्पन्नं यच्छ्राद्धं तत्तस्मादेव हेतोर्न ब्राह्मणमात्रविषयं मन्तव्यम्, किन्तु सर्ववर्णविषयम्, श्राद्धस्वरूपवत्कालोऽपि किं तथा नेत्याह "सूतकं तु पृथक पृथक्" इति हेतोस्तत्तदुत्तरदिने कर्त्तव्यमिति व्याख्येयम् । शङ्खवचनं तु शूलपाण्यादिभिरेवं लिखितम्—

"ततः श्राद्धमशुद्धौ तु कुर्यादेकादशे तथा ।
कर्त्तुस्तात्कालिकी शुद्धिरशुद्धः पुनरेव सः" इति ॥
अशुद्धौ प्रथमादिनेष्वेकादशे चैकोद्दिष्टश्राद्धं कुर्यात् ।

नन्वशुद्धौ कथं श्राद्धं कर्त्तव्यमत आह—'श्राद्धकर्त्तुस्तात्कालिकी शुद्धिः कर्मान्तरे पुनः सोऽशुद्ध एव" इति च व्याख्यातम् । अशुद्धावित्येवोक्ते श्राद्धमस्यैकादशे न प्राप्नोतीति पृथगेकादशग्रहणम् । तस्मात्सर्वैकोद्दिष्टप्रकृतिभूतमाद्यसंज्ञकमेकादशाहश्राद्धमन्यदपि चैकादशाहकृत्यं स्वस्वाशौचोत्तरदिन एव सर्वैराशौचान्त्यदिने दशमपिण्डदानानन्तरं कर्तव्यमित्युचितम् । एकादशाहग्रहणं च तस्यैवोपलक्षणम् । तदपि सम्पूर्णपर्यायद्वादशाहादिरूपजात्याशौचोत्तरदिनस्यैव । तेषामेवावान्तरसाजात्येन द्रागबुद्धिस्थत्वात् । अत एवोद्गातृप्रातिपदिकेन बहुवचनान्वयार्थं लक्ष्यमाणा अन्ये न सर्वर्त्विजो नापि सर्वे सामगाः किं त्वपसुब्रह्मण्यास्त्रय एव स्तोत्रकारिण इत्युक्तं तृतीये (१)। "दशमेऽह्नि पतेद्यस्याहर्द्वयात्स विशुद्धयति"इत्यत्र च संपूर्णाशौचान्त्यदिनोपलक्षणमेवोक्तमाशौचग्रन्थेषु । तेन त्र्यैहकाहाशौचयोस्तन्मध्ये दशपिण्डदानानुष्ठानेऽप्येकादशाहकृत्यमेकादशाह एव भवति । तथा च "सद्यःशौचेऽपि"इति शङ्खवचनं पूर्वमुदाहृतम् । अत एव च क्वचित्तद्बाधार्थं "तृतीये तूदकं कृत्वा चतुर्थे श्राद्धमाचरेत्"इत्युक्तम् ।

---

(१) अपसुब्रह्मण्याः सुब्रह्मण्यरहिता अवशिष्टाः प्रस्तोतृ-उद्गातृ-प्रतिहर्तृसामगास्त्रय एव स्तोत्रकारिणश्चमसं भक्षयेयुरिति तन्त्रवार्तिककृतः कुमारिलाभट्टस्य मतमत्रोदाहृतं ग्रन्थकर्त्रा ।

तथाहि—ज्योतिष्टोमे श्रूयते—"प्रैतु होतुश्चमसः, प्र ब्रह्मणः, प्रोद्गातॄणाम्" । अत्रायं संदेहः—किमेक एव एनं सोमचमसमुद्गाता भक्षयेत्, उत सर्वे भक्षयेयुः । अथ सुब्रह्मण्यवर्जिताश्छन्दोगा भक्षयेयुः, अथ वा सह सुब्रह्मण्येनेति । अत्र त्रयः पक्षाः प्रस्फुरन्ति । उद्गातैक एव "चमसेन प्रोद्गातॄणाम्" इति श्रुत्या संयुज्यत इति स

द्वादशाहाशौचकारिणां क्षत्रियाणां मासाशौचकारिणां शूद्राणां चाचारोऽप्येवमेव। यदाशौचान्त्यदिनोत्तरदिने, आद्यश्राद्धादि तदुत्तरदिने च सपिण्डीकरणमिति। प्रायस्त्विदानीं क्षत्रियैः शूद्रैश्च दशाहाशौचपक्ष एवानुष्ठीयत इति तेषामेकादशाहद्वादशाहयोराद्यादिश्राद्धानुष्ठानमस्मिन्नपि पक्षे न विरुध्यते। शूद्राणां द्वादशाह एव सपिण्डीकरणविधायकं विष्णुवचनं तु न मरणावधिकद्वादशाहपरमित्यनुपदमेव वक्ष्यते।

एवं नवश्राद्धरूपाण्येकोद्दिष्टानि दर्शितानि।

## एकोद्दिष्टश्राद्धे नवमिश्रश्राद्धकालविवेचनम्।

इदानीं नवमिश्राणि प्रदर्श्यन्ते। यानि षोडशश्राद्धानीत्येवं प्रसिद्धानि। तान्यप्यनेकविधानि स्मर्यन्ते। तत्र ब्रह्मपुराणे तावत्—

"नृणां तु त्यक्तदेहानां श्राद्धाः षोडश संख्यया।
चतुर्थे पञ्चमे चैव नवमैकादशे तथा॥
तथा द्वादशभिर्मासैः श्राद्धा द्वादश संख्यया।

---

एव भक्षयेत् सोमचमसमित्येकः पक्षः। एकस्मिन्नुद्गातरि भक्षयति सति बहुवचनमनर्थकं स्यादिति हेतोः षोडशर्त्विजः सर्वे वा भक्षयेयुरिति द्वितीयः। उत्कर्षेण गायन्तीत्युद्गातार इति क्रियायोगेन प्रस्तोता-उद्गाता-प्रतिहर्ता चैते त्रयो भक्षयेयुरिति तृतीयः पक्षः। अत्रेदं समाधानम्—"रूढिर्योगमपहरति" इति न्यायादेक एवोद्गातात्र गृह्यते। बहुवचनोपपत्तये च प्रत्यासन्ना उपलक्ष्यन्ते। प्रत्यासत्तिश्च प्रस्तोतृ-प्रतिहर्त्रोरिव सुब्रह्मण्यस्याप्यस्ति। सामवेदाध्यायित्वेन सुब्रह्मण्याह्वानरूपे तदीयकर्मण्यप्यौद्गातृसमाख्यायाः सत्त्वात्। तस्मात् सुब्रह्मण्येन सहिताश्चत्वारः सामगाश्चमसं भक्षयेयुरिति शाबरभाष्याशयः।

वार्त्तिककाराणामाशयस्तु—चमसभक्षणस्थाने सदसि सुब्रह्मण्यस्याप्रवेशात्तेन विरहिता अवशिष्टाः प्रस्तोतृ-उद्गातृ-प्रतिहर्तृसामगाश्चमसं भक्षयन्तीति।

कर्त्तव्याः शुचिभिस्तेषां तत्र विप्रांस्तु भोजयेत्" ॥ इति।

भविष्यत्पुराणेऽपि—

"अस्थिसंचयने श्राद्धं त्रिपक्षे मासिकानि च।
रिक्तयोश्च तथा तिथ्योः प्रेतश्राद्धानि षोडश" ॥ इति।

रिक्तयोः—(१) तिथ्या न्यूने षष्ठे द्वादशे च मासे।

छन्दोगपरिशिष्टे—

"द्वादश प्रतिमास्यानि आद्यं षाण्मासिके तथा।
सपिण्डीकरणं चैव इत्येतच्छ्राद्धषोडशम्" ॥ इति।

आद्यमैकादशाहिकम्। षाण्मासिके ऊनषाण्मासिके। एकं पूर्वषट्कान्तर्गते षष्ठमासे, अपरमुत्तरषट्कान्तरगते तत्र। कियत्तिथिन्यूनयोस्तयोस्ते इत्यपेक्षायां तत्रैव—

"एकाहेन तु षण्मासा यदा स्युरपि वा त्रिभिः।
न्यूनाः सम्वत्सरश्चैव स्यातां षाण्मासिके तदा" ॥ इति।

अत्रैकाहन्यूनपक्षे पञ्चम्यां मृतस्य तृतीयायां त्र्यहन्यूनपक्षे प्रतिपद्यूनं षाण्मासिकद्वयमिति केचित्। मासो ह्यत्राद्यमृताहं गृहीत्वोत्तरमृताहपूर्वतिथिपर्यन्तत्रिंशत्तिथिसमुदायात्मकश्चान्द्रः। तथैव लोकप्रसिद्धेः। तस्य चैकाहन्यूनतोपान्त्यतिथावेव। अन्त्यायां पूर्त्तेः। एवं त्र्यहन्यूनताप्यन्त्यपूर्वचतुर्थ इति। तदयुक्तम्। "षाण्मासिकाब्दिके श्राद्धे स्यातां पूर्वेद्युरेव ते" इति हेमाद्रिमाधवाद्युदाहृतपैठीनसिवचनविरोधात्। अत्र हि षाण्मासिकाब्दिकशब्दावूनतत्परौ पूर्वेद्युशब्दश्च मृताहपूर्वतिथिपरः। "मासिकानि स्वकीये तु दिवसे द्वादशेऽपि वा" इत्युत्तरत्राभिधानात्। एतत्संरक्षणार्थमेव द्वितीयादिमृताहेषु

(१) रिक्तयोस्तिथ्योरेकया तिथ्येति द्वि० पु० अधिकः पाठः।

क्रियमाणानां प्रथमादिमासिकत्वं च तत्तन्मासाधिकरणकत्वाबाधेन सिध्यत्वित्येतदर्थं शूलपाण्यादयः पूर्वमृततिथ्यवधिकोत्तरमृततिथिपर्यन्तत्रिंशत्तिथिसमुदायात्मकं मासमत्र वदन्ति। तत्तु तेषामेवाभिप्रेतम्। एतादृशमेव षष्ठ्यधिकशतत्रयतिथ्यात्मकं सम्वत्सरं दूषयद्भिरस्माभिरुत्तरमासवर्षादित्वस्यैव सकललोकप्रसिद्धिविषयत्वात्तद्विरोधेन साम्वत्सरिकप्रकरण एव दूषितम्॥

तेनाद्यमृततिथिं गृहीत्वैव त्रिंशत्तिथ्यात्मको मासः प्रथमादिः। तत्र प्रथमादिमासिकानि मासे भवं मासिकमिति व्युत्पत्त्या प्रथमादिमासाद्यमृततिथिषु वा भवन्तु मासेऽतीते भवं मासिकमिति व्युत्पत्त्या वा द्वितीयादिमासाद्यमृततिथिषु। तेषां मृताहाधिकरणकत्वात्।

ऊनानि तु तत्तन्मासान्त्यतिथावेवोत्तरमासाद्यमृताहात्पूर्वेद्युरेकाहन्यूनतापक्षे। तदानीमेव तथात्वात्। अन्त्यतिथ्यन्त्यक्षणे हि मासपूर्त्तिः। निमन्त्रणरूपश्राद्धारम्भकाले तत्प्रयोगकाले चैकाहन्यूनतैव। उपान्त्यतिथौ तु तत्काले द्व्यहन्यूनता। तेन यदेकतिथ्यभावप्रयुक्ता मासस्यैकाहन्यूनता तस्यां तिथावित्येकाहन्यून इत्यस्यार्थः। यत्तिथित्रयाभावप्रयुक्ता त्र्यहन्यूनता तन्मध्ये प्रथमतिथाविति त्रिभिर्न्यून इत्यस्य। हेमाद्रौ परिशिष्टवचनद्वयं जातूकर्ण्यवचनत्वेन पठितम्। कालादर्शमदनरत्नादिषु जातूकर्ण्यवचनमेवं पठितम्।

"द्वादश प्रतिमास्यानि आद्यषाण्मासिके तथा।
त्रैपक्षिकाब्दिके चेति श्राद्धान्येतानि षोडश"॥

इत्येतावदेव। अत्राद्यषाण्मासिकाब्दिकशब्दा ऊनमासिकोनषाण्मासिकोनाब्दिकपराः। द्वादशानामपि मासिकानां पृथग्ग्रहणादिति च व्याख्यातम्। तत्र त्रैपक्षिकम्—

"सूतकान्ते गृहे श्राद्धमेकोद्दिष्टं प्रचक्षते।
द्वादशेऽहनि मासे च त्रिपक्षे च ततः परम्" ॥

इति ब्रह्मपुराणात्, "त्रैपक्षिकं भवेद् वृत्ते त्रिपक्षे तदनन्तरम्" इति भविष्यत्पुराणाच्चावगम्यते। त्रिपक्ष इत्यधिकरणसप्तम्यनुरोधाद्वृत्ते प्रवृत्ते इति कैश्चिद्व्याख्यातम्। कैश्चिदेतदनुरोधेन तत्रैवातीत इति शेषः कृतः। तद्भोजने प्रायश्चित्तविधानादपि त्रैपक्षिकं श्राद्धं गम्यते।

तथा च शङ्खः—

"चान्द्रायणं नवश्राद्धे पराको मासिके स्मृतः।
पक्षत्रयेऽतिकृच्छ्रः स्यात् षण्मासे कृच्छ्र एव हि ॥
आब्दिके पादकृच्छ्रः स्यादेकाहः पुनराब्दिकः" इति।

आब्दिके न्यूनाब्दिके। ऊनाद्यमासिकं द्व्यहत्रिभागोनपक्षौ च त्रिष्वपि मासेषु श्लोकगौतमगालववचनयोः कालादर्शाद्युदाहृतयोरवगम्यते।

"एकद्वित्रिदिनैरूनैस्त्रिभागेनोन एव वा।
श्राद्धान्यूनाब्दिकादीनि कुर्यादित्याह गौतमः" ॥ इति।
"त्रिभिर्वा दिवसैरूने द्वाभ्यामेकेन वा तथा।
आद्यादिषु च मासेषु कुर्यादूनाब्दिकादिकम् ॥ इति च।

ऊने ऊनत्वे। आदिशब्दाभ्यां षष्ठद्वादशमासयोरूनषाण्मासिकोनाद्यमासिकयोश्च ग्रहणम्। ऊनाद्यमासिकस्य द्वादशाहोऽपि काल उक्तो गोभिलेन—"मरणाद्द्वादशाहे स्यान्मास्यूने वोनमासिकम्" इति। इदमेव चोनमासिकं द्वादशाहपक्षमेवाश्रित्य द्वादशेऽहनि मासे चेति ब्रह्मपुराणवचने एकादशाहश्राद्धमभिधाय "द्वितीयेऽह्नि पुनस्तद्वदेकोद्दिष्टं समाचरेत्" इति मत्स्यपुराणवचने च विहितं द्रष्टव्यम्। द्वादशमासिकानां च "मृतेऽहनि तु कर्त्तव्यं प्रतिमासं तु

वत्सरम्" इति वचनान्मृततिथ्यधिकरणकानां मासेऽतीते भवमिति व्युत्पत्तावेवाद्यमृताहावधिकोत्तरमृतत्तिथिपर्यन्तमासाश्रयणेन वा द्वितीयप्रभृतितत्तन्मासीयमृततिथ्यधिकरणकत्वात्प्रथममासस्सम्बन्धि—सर्वाद्यमृततिथौ मासिकं प्राप्नोत्येव न यथा "वत्सरान्ते मृताहनि" इत्युत्पन्नं वार्षिकश्राद्धम्। किन्त्वाद्यमासिकं द्वितीयमृततिथौ द्वितीयं तृतीयमृतितिथावित्यादिक्रमेण द्वादशमासिकं प्रथमाब्दिकतिथौ। आद्यश्राद्धं त्वेकादशेऽह्नि क्रियमाणं मासिकाद्भिन्नमेवेति प्राच्यग्रन्थेषु स्पष्टमेवोक्तम्। मिताक्षरादिष्वपि विशेषानभिधानान्मासिकेष्वाद्यशब्दस्य चान्यथा व्याख्यानादेवमेव प्रतीयते।

परमार्थतस्तु लोकप्रसिद्ध्यनुगुण आद्यमृततिथिं गृहीत्वैव त्रिंशत्तिथ्यात्मकश्चान्द्रो मासो न तु तस्या अवधित्वमात्रमुत्तरमृततिथिर्मासघटिकेति। मासे भवं मासिकमित्येव च मासिकाद्यमासिकादिशब्दव्युत्पत्तिः। समुदायान्तर्गतयत्किञ्चित्तिथ्यधिकरणकत्वेऽपि च मासिकत्वं भवत्येव ज्योतिष्टोमस्येव वसन्तकालत्वं श्राद्धस्येवापरपक्षिकत्वम्। तत्र प्रथमातिक्रमकारणाभावात्, "मृताहनि तु कर्त्तव्यम्" इत्यादिवचनाच्च तन्मासाद्यभूतायां मृततिथावेवाद्यादिमासिकानि कर्त्तव्यानि।

तेन सर्वाद्यमृततिथावेवाद्यनवश्राद्धवत्कर्त्तव्यत्वेन प्राप्तं प्रथममासिकमेकादशे, आशौचोत्तरदिने वोत्कृष्यते याज्ञवल्क्यवचने— "आद्यमेकादशेहनि" इति। युक्तं चैतत्। मासिकानां पूर्वविहितत्वात्। यद्यपि च साम्वत्सरिकमप्येतत्पूर्वं विहितम—"प्रतिसम्वत्सरं चैवम्" इति। सम्वत्सरोऽपि च मासवत्पूर्वमृततिथिमेव गृहीत्वा। तथापि तस्य वचनान्तरेषु सम्वत्सरान्त एवोत्पन्नस्य सर्वाद्यमृततिथौ प्राप्तिरेव नास्तीति तदुत्कर्षपरत्वेनापि "आद्यमेकादशेऽहनि" इत्यस्य व्याख्यानमयुक्तमित्युक्तं साम्वत्सरिकप्रकरणे। एवं च "प्रथममासिकोनमासिकद्वितीयमासिकत्रैपक्षिकतृतीयमासिकचतुर्थपञ्चमषाण्मासिकान-

षाण्मासिकसप्तमाष्टमनवमदशमैकादशद्वादशमासिकोनाब्दिकानि षोडशश्राद्धानि क्रमेण दद्यात्”इति हेमाद्र्युदाहृतसूत्रबोधितः श्राद्धक्रमोऽप्युपपद्यते। अन्यथोनानां तत्तन्मासिकोत्तरत्वं त्रैपक्षिकस्य च द्वितीयोत्तरत्वं न स्यात्।

यत्तु “ततो द्वादशभिर्मासैः श्राद्धा द्वादश संख्यया” इतिवचनान्मासान्तभवत्वं मासिकानां प्रतीयते। प्रथमस्याप्येकादशाहिकोत्तरप्रतीतेः।

तदप्यापाततः। मदनरत्नादिषु तावत् “तथा द्वादशभिर्मासैः”इत्येवंपाठो लिखितः। पूर्वपाठेऽप्येकादशाहानां तदुत्तरत्वाद्भूम्ना तदुपपत्तिः। विश्वादर्शेऽप्याद्यमृततिथिकालीनत्वमेव “मासिकानामाद्यं चैकादशे” इति स्पष्टमुक्तम्।

“मासेषूक्तं यदेकादशसु मृतदिनेष्वाद्यमेकादशाहे।
न्यूनाब्दे यत्तदर्द्धे यदपि तदपरं द्वादशाहे त्रिपक्षे” इति॥

कालादर्शस्मृत्यर्थसारादिष्वप्येवमेव। अत एव च षोडशश्राद्धपक्षेषु बहुषूक्तेष्वप्ययमेव पक्षो बहुभियुक्तादृतत्वात्संप्रतिशिष्टैराद्रियते। युक्तश्चायम्। तथाहि परिशिष्टोक्तः सपिण्डीकरणान्तर्भावेन षोडशश्राद्धपक्षः “श्राद्धानि षोडशापाद्य विदधीत सपिण्डताम्” इति वचनेन शूलपाण्यादिभिरपि लिखितेन विरुद्धः। ब्रह्मपुराणभविष्यत्पुराणोक्तपक्षावपि—

“नवश्राद्धादिश्राद्धानि न कृतानि तु यस्य वै।
नाधिकारी भवेत्तत्र मासषाण्मासिकाब्दिके”॥

इति वचनात् षोडशश्राद्धाधिकारसिद्ध्यर्थानां नवश्राद्धानामस्थिसञ्चयनाङ्गश्राद्धस्य च षोडशश्राद्धान्तर्भावस्यासमञ्जसत्वादसमञ्जसौ।

यत्तु—"अलब्ध्वा तु नवश्राद्धं प्रेतत्वान्न विमुच्यते" इति प्रेतत्व-निर्वर्त्तकत्वं वृद्धवसिष्ठेन नवश्राद्धानामुक्तं तदपि साक्षात्प्रेतत्वनिव-र्त्तकषोडशश्राद्धाधिकारसम्पादकद्वारकमेव ।

अत एव व्याघ्रपात्—

"देयानि वेश्मशुद्ध्यर्थं नवश्राद्धानि यत्नतः ॥
ततः प्रेतविशुद्ध्यर्थं मृताहनि तु वत्सरम्" ॥ इति ।

मृताहनीति मासिकग्रहणं षोडशानामप्युपलक्षणम् । वेश्म-शुद्ध्यर्थता च नागरखण्डोक्तनवसंख्यश्राद्धपक्षे लिङ्गसमवायेन । तत्र मृत्युस्थाने श्राद्धविधानात् । एवं सत्येकादशाहे श्राद्धत्रयं नवश्राद्ध-माद्यमासिकं महैकोद्दिष्टं चेति । तत्र महैकोद्दिष्टं ब्राह्मणालाभेऽग्नौ कर्त्तव्यम् । तत्करणप्रकारश्च तथैकैकरुद्ररूपप्रेतोद्देश्यकान्येकादश, मिलितैकादशरुद्ररूपप्रेतोद्देश्यकमेकं वा, तथैकैकवसुरूपप्रेतोद्देश्यका-न्यष्टौ मिलिताष्टवसुरूपप्रेतोद्देश्यकमेकं वकोद्दिष्टमित्याद्यधुनातन-ग्रन्थेषु दृश्यमानमपि प्रामाणिकमूलादर्शनादुपेक्षितम् ।

इत्युक्तानि नवमिश्राणि षोडशश्राद्धानि ।

## नवनवमिश्रश्राद्धयोः प्रासङ्गिकविवेचनम् ।

तन्मध्ये त्रैपक्षिकपर्यन्तान्याहिताग्नेर्दाहदिनादारभ्यैकादशाहादिषु भवन्ति । अनाहिताग्नेस्त्वेकाग्नेर्निरग्नेर्वा मरणदिनादारभ्य । तदू-र्ध्वानि तूभयोरपि मरणदिनादेव । तथा छन्दोगपरिशिष्टे—

"श्राद्धमग्निमतः कार्यं दाहादेकादशेऽहनि ।
ध्रुवाणि तु प्रकुर्वीत प्रमीताहनि सर्वदा" ॥ इति ।

अग्निमत इति बह्वग्निक एव गृह्यते ।

"मरणादेव कर्तव्यं संयोगो यस्य नाग्निभिः ।
दाहादूर्ध्वमशौचं स्याद्यस्य वैतानिको विधिः" ॥

इति शङ्खवचनैकवाक्यत्वात्। अत एवैकादशग्रहणं नवश्राद्धादीनामप्युपलक्षणम्। ध्रुवपदेन च त्रैपक्षिकादूर्ध्वानि गृह्यन्ते।

"ऊर्ध्वं त्रिपक्षाद्यच्छ्राद्धं मृताहन्येव तद्भवेत्।
अधस्तु कारयेद्दाहादाहिताग्नेर्द्विजन्मनः" ॥

इति जातूकर्ण्यवचनात्। एतानि च षोडशश्राद्धानि स्वस्वकाले कर्त्तव्यानीति मुख्यः कल्पः। अनुकल्पमाह मरीचिः—

"मुख्यश्राद्धं मासि मासि अपर्याप्तावृतुं प्रति।
द्वादशाहेन वा कुर्यादेकाहे द्वादशाथवा" ॥ इति।

अपर्याप्तौ प्रतिमासं श्राद्धकरणासामर्थ्ये ऋतुमुख्यस्य चान्द्रस्य सौरस्य वा ऋतोरत्रासंभवात्पूर्वमृततिथिमारभ्योत्तरमृततिथ्यवधिकत्रिंशत्तिथिसमुदायात्मकमासद्वयं प्रत्येकैकं मृताहमतिक्रम्य तदुत्तरमृताहेऽतिक्रान्ते प्राप्तकालं च श्राद्धद्वयं कर्त्तव्यम्। क्वचित्त्रयमपि। तत्रैकादशाहे आद्यं निर्वर्त्त्योनमासिकं च स्वकाले द्वितीयमासिकं त्रैपक्षिकं च सह तृतीयमासिकेन, चतुर्थं सह पञ्चमेन, षष्ठमूनषाण्मासिकं च सप्तमेन, अष्टमं नवमेन, दशममेकादशेन, द्वादशं चोनाब्दिकेन सह, तत्तत्काल इति क्रमः। पूर्वमप्युक्तम्—"नवमिश्रं तु षड्तून्" इति। आशौचोत्तरदिनमारभ्यानवच्छेदेन द्वादशभिर्दिनैरपवृक्तानि वा षोडशकर्त्तव्यानि। "अपवर्गे तृतीया" इति स्मरणात्। तत्राप्येकादशाहे आद्यम्, तदुत्तरदिने ऊनाद्यं द्वितीयं च, तदुत्तरदिने त्रैपक्षिकं तृतीयं च, तदुत्तरदिनेषु चतुर्थपञ्चमषष्ठानि, तदुत्तरदिने ऊनषाण्मासिकं सप्तमं च, तत्तदुत्तरदिनेष्वष्टमनवमदशमैकादशानि, तदुत्तरदिने द्वादशमूनाब्दिकं चेति द्वादशभिर्दिनैः षोडशश्राद्धानि निर्वर्त्त्य तदुत्तरदिने सपिण्डीकरणं कार्यम्। अथवैकास्मिन्नेवाह्नि द्वादशे एकादशे एव वा द्वादशापि। मध्यवर्त्तीन्यूनमासिकादीन्यपि द्वादशग्रहणेनैव गृह्यन्ते। द्वादशग्रहणं चैकादशाहरूपैकाहाभिप्रायेण।

द्वादशाहरूपे तस्मिन्नाद्यन्यूनान्येकादशैव । तस्यैकादशाहे कृतत्वात् । एवं वृद्धिपूर्वदिनादौ यदा सपिण्डीकरणार्थं क्रियन्ते तदा यावन्ति स्वकालकृतावशिष्टानि तावन्त्येव द्रष्टव्यानि । इदं पक्षद्वयं सपिण्डीकरणापकर्षनिमित्तं तच्चाग्रे विवेक्ष्यते । तदभावे तु प्रतिमासं प्रत्यृतु वा । तथैकादशाहादारभ्य सम्वत्सरपर्यन्तं प्रतिदिनमेकस्मै ब्राह्मणाय भोजनपर्याप्तान्नसहित उदकुम्भो देयः । तथा च पद्मपुराणे—

"उदकुम्भश्च दातव्यो भक्ष्यभोज्यसमन्वितः ।
यावद्वर्षं नरश्रेष्ठ सतिलोदकपूर्वकम्" ॥ इति ।

हेमाद्र्युदाहृतस्मृतिसमुच्चयेऽपि—

"एकादशाहात्प्रभृति घटस्तोयान्नसंयुतः ।
दिने दिने प्रदातव्यो यावत्स्याद्वत्सरः सुतैः" ॥ इति ।

अत्र पिण्डदानमपि पाक्षिकमुक्तं पारस्करेण "अहरहरन्नमस्मै ब्राह्मणायोदकुम्भं च दद्यात्पिण्डमप्येके निपृणन्ति" इति । अस्मै प्रेताय प्रेतोद्देशेनेत्यर्थः ।

हारीतेनापि—

"मृते पितरि वै पुत्रः पिण्डं मेध्यं समावपेत् ।
अन्नं कुम्भं च विप्राय प्रेतनिर्देशधर्मतः" ॥ इति ।

प्रेतनिर्देशधर्मत इति प्रेतशब्देन प्रेतोद्देशरूपेण धर्मेणेत्यर्थः । एतच्च वर्षान्तसपिण्डीकरणपक्षे । अत एव वचनम्—

"प्रेतलोके तु वसतिर्नृणां वर्षं प्रकीर्त्तिता ।
क्षुत्तृष्णे प्रत्यहं तत्र यतो हि भृगुनन्दन ॥
तदर्थमिह दातव्यं जलान्नमभिवत्सरम्" ॥ इति ।

यदा तु द्वादशाहादौ सपिण्डीकरणं कृतं तदा "अस्मै" इत्येकवचनस्य विवक्षितत्वादेकस्यैवोद्देशेऽपि नात्र प्रेतशब्देनोद्देशः। अनुमासिकवत्। सपिण्डीकरणापकर्षेऽपि च षोडशश्राद्धापकर्षः। "श्राद्धानि षोडशादत्त्वा न तु कुर्यात्सपिण्डताम्" इतिवद्वचनाभावात्। प्रत्युतानपकर्षमेवाह याज्ञवल्क्यः—

"अर्वाक्सपिण्डीकरणं यस्य सम्वत्सराद्भवेत्।
तस्याप्यन्नं सोदकुम्भं दद्यात्संवत्सरं द्विजः" ॥ इति।

एतद्वशादेव सपिण्डनोत्तरं पूर्वप्रयोजनासंभवेऽपि प्रयोजनान्तरं कल्प्यम्। गोभिलीयश्राद्धकल्पभाष्ये त्वपकर्षकं स्कन्दपुराणवचनं लिखितम्—

"अन्नं चैव स्वशक्त्या तु संख्यां कृत्वाब्दिकस्य तु।
दातव्यं ब्राह्मणेभ्यस्तु यद्वा तन्निष्क्रयं च यत् ॥
अपि श्राद्धशतैर्दत्तैरुदकुम्भं विना नराः।
दरिद्रा दुःखिनस्तात भ्रमन्ति च भवार्णवे ॥
ततोऽपकृष्य दातव्यं प्रेतस्याप्युदकुम्भकम्" ॥ इति।

तद्यद्यपि समूलं तथापि न सपिण्डीकरणनिमित्तापकर्षविधायकम्। याज्ञवल्क्यवचनविरोधात्। किन्तु यदा कदापि सपिण्डीकरणे प्रत्यहं सोदकुम्भान्नदानाशक्तेनैकस्मिन्नेव दिने आमेन निष्क्रयेणापि वापकृष्यापि तावत्तत्कर्त्तव्यमित्येवं व्याख्येयम्। अत्र च क्वचिदुदकुम्भस्यान्नसाहित्यं यद्यपि श्रुतं तथापि गुणप्रधानभावाविवक्षयान्नं चोदकुम्भश्च देय इत्येतावन्मात्रं विवक्षितमित्येष उदकुम्भ इदमन्नमिति पृथगेव त्यागः कर्त्तव्यः।

अयं च सोदकुम्भान्नत्यागः श्राद्धरूप एव प्रेतोद्देशेनान्नस्य तत्स्थानीयस्य वा द्रव्यस्य श्रद्धया त्यागः श्राद्धमिति मिताक्षरोक्तस्य,

ब्राह्मणस्वीकारपर्यन्तः पितॄनुद्दिश्य द्रव्यत्यागः श्राद्धमिति कल्पतरूक्तस्य, संबोधनपदोपनीतान् पित्रादींश्चतुर्थ्यन्तपदेनोद्दिश्य हविस्त्यागः श्राद्धमिति शूलपाणियुक्तस्य वा, श्राद्धलक्षणस्यात्रापि सत्त्वात्। यद्याप्याद्यन्त्ययोः पिण्डपितृयज्ञपित्र्येष्टिसोमयागगतपिण्डदानेषु पूर्वयोश्च पित्राद्युद्देश्यकभारतादिप्रसिद्धहिरण्यादिदानेषु चातिव्यापकत्वात्संन्यासाद्यङ्गभूतदैवार्षादिश्राद्धेषु चाव्यापकत्वान्मयान्यत्र प्रपञ्चितं मन्त्रत्वचदभियुक्तश्राद्धप्रसिद्धिविषयत्वं श्राद्धलक्षणमङ्गीक्रियते तदापि हारीतपारस्करादिभिः श्राद्धप्रकरणपाठेन तत्प्रसिद्ध्यवगमाच्छ्राद्धत्वमस्यापि भवत्येव। सत्यपि च श्राद्धत्वे पिण्डदानस्य वचनादेव पाक्षिकत्वेऽप्यन्येऽर्घ्यदानादयः श्राद्धधर्मा अत्र न भवन्ति। अस्यापि सम्वत्सरं यावदहरहः क्रियमाणत्वेन नित्यत्वात्। "अहन्यहनि यच्छ्राद्धं तन्नित्यमभिधीयते" इति भविष्यत्पुराणात्, नित्यश्राद्धे च "नित्यश्राद्धमदैवं स्यादर्घ्यपिण्डविवर्जितम्" इति बृहस्पतिवचनात्, "नित्यं तावत्प्रवक्ष्यामि अर्घ्यावाहनवर्जितम्" इति मत्स्यपुराणाच्च श्राद्धधर्मनिषेधावगतेरिति शूलपाणिः।

तदयुक्तम्। अहन्यहनि यच्चोदितं तन्नित्यमित्यभिधाने "कुर्यादहरहः श्राद्धम्"इति तादृशश्चोदनाचोदितस्यैवावधिविशेषानुपादानाच्च। जीवतो नियोज्यत्वासंभवेन जीवनावधिक सकलाहर्व्यापिन एव प्रतीतेः। अस्य च तादृशत्वाभावात्। अन्यथा—

"अश्वयुक्कृष्णपक्षे तु श्राद्धं कुर्याद्दिने दिने।

कार्त्तिकं सकलं वापि"इत्यादिविहितश्राद्धानामपि नित्यश्राद्धत्वप्रसङ्गात्।

निर्णयामृते तु—

"अदैवं पार्वणश्राद्धं सोदकुम्भमधर्मकम् ।
कुर्यात्प्रत्याब्दिकाच्छ्राद्धात्संकल्पविधिनान्वहम्" ॥

इति गौतमवचनमर्घ्यावाहनादिश्राद्धीयधर्मनिवर्त्तकमुदाहृतम् । सपिण्डीकरणात्पूर्वं चैतत्क्रियमाणमेकोद्दिष्टविधिना तदूर्ध्वं पार्वणविधिनेति चोक्तम् । पितृव्यैरप्येवमेव । अधर्मकं कर्तृभोक्तृनियमरहितम् । आप्रत्याब्दिकात् । यदा पार्वणं तदाऽदैवमित्यर्थः । संकल्पविधिश्च—

"सांकल्पं तु यदा कुर्यान्न कुर्यात्पात्रपूरणम् ।
नावाहनाग्नौ करणेन पिण्डान्विकिरन्न च" इत्यादिः ।

मया तूच्यते । कृत्स्नविधानत्वात्प्रायश्चित्ताङ्गविष्णुश्राद्धवदत्र श्राद्धधर्मानतिदेशः । या हि क्रिया विधीयते सा क्रिया यैर्विना न निष्पद्यते तत्साधनसामस्त्यं कृत्स्नविधानत्वम् । अत्र च पात्रस्वीकारपर्यन्तो यागविशेषो ददातिना विधीयते । तत्र च त्याज्यं देवताविशेषः पात्रविशेषश्चापेक्षितः । तच्च सर्वमत्रोक्तमेव । "नामगोत्रे पितृणां तु प्रापके हव्यकव्ययोः" इत्यादिभिः सामान्यतः पित्र्यकर्माङ्गत्वेनोक्तानि नामगोत्रविशिष्टोद्देशप्राचीनावीतित्वदक्षिणामुखत्वानि । दानरूपत्वाच्च दानसामान्याङ्गभूता गन्धमाल्यादिभिः पात्रपूजेत्येतावत्परं भवति । एक एव च समनन्तरमृत उद्देश्यः सपिण्डीकरणादूर्ध्वमपि । "तस्याप्यन्नं सोदकुम्भं दद्याद्वर्षं द्विजन्मनः" इति तस्यापीत्येकवचनात्, "पिण्डमप्येके निपृणन्ति" इत्येकपिण्डोपदेशाच्च "यः सपिण्डीकृतम्" इत्यस्यापवादात् । वचनं त्वनाश्वसनीयम् । अनन्वितार्थत्वात्प्रसिद्धगौतमीये श्लोकरूपत्वेनासंभावितत्वात् । श्लोकगौतमस्यापि कैश्चिल्लिखनेऽप्यत्रान्यसम्वादाभावात् ।

एवं नवानि नवमिश्राणि चैकोद्दिष्टानि दर्शितानि

# एकोद्दिष्टश्राद्धे पुराणश्राद्धकालविवेचनम् ।

पुराणानि तु पाक्षिकाब्दिकतीर्थमहालयादिश्राद्धगतानि । एवं च सर्वेष्वप्येकोद्दिष्टेष्वितिकर्त्तव्यताकाङ्क्षया "अदैवम्"इत्यादिकिञ्चित्पार्वणधर्मपर्युदासदर्शनाच्च पार्वणधर्मातिदेशे सति तत्र विशेषा विहिताः ।

यथा याज्ञवल्क्यः—

"एकोद्दिष्टं दैवहीनमेकार्घ्यैकपवित्रकम् ।
आवाहनाग्नौ करणरहितं ह्यपसव्यवत् ॥
उपतिष्ठतामक्षय्यस्थाने विप्रविसर्जने ।
अभिरम्यतामिति वदेद्ब्रूयुस्तेऽभिरताः स्म ह" ॥ इति ।

कात्यायनोऽपि—"एकोऽर्घ एकं पवित्रमेकः पिण्डो नावाहनं नाग्नौ करणं नात्र विश्वेदेवाः स्वदितमिति तृप्तिप्रश्नः सुस्वदितमित्यनुज्ञावचनमुपतिष्ठतामित्यक्षय्यस्थाने अभिरम्यतामिति विसर्गो अभिरताः स्म इत्यपरे" इति ।

अत्र चार्घ्यपिण्डैकत्वश्रवणं न्यायप्राप्तानुवाद एव दैवतैक्यादेव सिद्धेः । यद्यपि त्वेकत्वश्रवणमपि तथेति केचित् । तथा हि "पवित्रान्तर्हितेष्वप आसिच्य"इत्युक्तत्वात्पात्रद्वारा अर्घ्योदकसंस्कारकं पवित्रम् । तच्च "अस्त्री कुशं कुशो दर्भः पवित्रम्" इति कुशसामान्यपर्यायत्वे सत्यपि नात्र तन्मात्रम् । किन्तु—

"अनन्तर्गर्भिणं साग्रं कौशं द्विदलमेव च ।
प्रादेशमात्रं विज्ञेयं पवित्रं यत्र कुत्रचित्" ॥

इति स्वरूपविशेषेण पवित्रसंशब्दनात्तत्कर्माङ्गत्वेन च परिभाषितं कुशदलविशेषद्वयात्मकम् । वाक्येन होमप्रकरणपाठबाधात् । तच्च

दलद्वयात्मकमेव न तु दलद्वयोपेतकुशत्रयात्मकमिति साधितं मयाश्वलायनसूत्रविवरणे। तत्र प्रकृतौ पितृपार्वणे पात्रत्रये पवित्रत्रयसद्भावेऽप्यत्रार्घ्यपात्रैक्यादेकमेव पवित्रं भवति। द्वयोरर्थलोपेन बाधात्।

यत्तु शूलपाणिना—"एककरणसाध्ये एकोद्दिष्टापूर्वे प्राकृतैककर्मधर्माणामेवापेक्षणात्पितृयागाङ्गस्यैकस्यैव पवित्रस्यात्रातिदेशः पितामहप्रपितामहयागाङ्गयोस्तु पवित्रयोरतिदेश एव न" इत्युक्तम्। तदभ्यासरूपत्वाज्ञानात्पितृपितामहप्रपितामहयागानां शास्त्रीयभेदभ्रान्त्या। पवित्रषट्कस्यौत्सर्गिकातिदेशाभिधानं च तदीयं मातामहादियागानां पितामहयागतुल्यत्वभ्रान्त्या। तेनाभ्यस्तैककरणभूतपितृपार्वणधर्मान्तर्गतानां त्रयाणां पवित्राणां संभावितातिदेशानां मध्ये द्वयोर्द्वारलोपाद्बाध इत्येव वक्तव्यम्। तेनैकं पवित्रमित्यप्यनुवाद एवेति।

तदयुक्तम्। दलैक्यस्याप्राप्तेस्तद्विधायकत्वात्। पवित्रशब्दो हि "अथ पवित्रे करोति" इति वाजसनेयिब्राह्मणे अर्थवदासाद्यपवित्रे कृत्वा अत एव "बर्हिषः प्रादेशमात्रे पवित्रे कुरुते, पवित्राभ्यामाज्यस्योत्पवनम्" इत्यादिषु पारस्करगोभिलाश्वलायनादिसूत्रेषु "पवित्रेस्थो वैष्णव्यौ" इति मन्त्रे च द्विवचनान्तः प्रयुज्यमान एकैकदलवचन एव गम्यते। तेन परिशिष्टगतमेकवचनं समुदायाभिप्रायं राजसूयवत्। न तु तद्वशाद्दलद्वयसमुदाय एव तस्य वाच्यः। श्रुत्यादिषु बहुषु लक्षणाप्रसङ्गात्। एतेन परिशिष्टवचनाद्दलद्वयव्यासक्तमेव पवित्रत्वं द्विवचनान्त एव तु विधिगते मन्त्रगते च पवित्रशब्देऽवयवभूतदललक्षणेति शूलपाण्युक्तिर्निरस्ता।

न च होमाङ्गपवित्रादेकैकदलरूपाद्भिन्नमेवेदं सांकेतिकं दलद्वयरूपं पवित्रं तस्यैव प्रसङ्गेनान्यत्रापि विनियोगसंभवेन भेदे प्रमाणाभावात्। ततश्च यद्यपि द्वित्वविशिष्टस्यैव दलरूपस्य पवित्रस्योत्पन्नत्वात्परिभाषारूपपरिशिष्टवचनाच्च पार्वणेऽपि पवित्रशब्दात्प्रतिपात्रं

दलद्वयरूपं पवित्रं गृह्यते। तथाप्येकोद्दिष्ट एकस्मिन् पात्रे द्वे दले आप्नुयातां न त्वेकं तद्विधानार्थमेकं पवित्रमिति।

वस्तुतस्तु सामान्यतः पित्र्येऽयुग्मसंख्याविधानात्, "तिस्रस्तिस्रः शलाकास्तु पितृपात्रेषु पार्वणे" इति चतुर्विंशतिमताच्च पार्वणे प्रतिपात्रमेकैकदलात्मकानि त्रीणि त्रीणि पवित्राणि। मन्त्रस्तु तत्रापि द्विवचनान्त एव भवति। प्रकृतावेव "अथापि त्रीणि स्युः" इति त्रयाणां पवित्राणां श्रुतौ विधानात्। तत्रापि च 'कुशौ छिनत्ति पवित्रे स्थौ" इति "त्रीन्वा" इति कात्यायनेन मन्त्रस्य विनियोगात्। गुणभूतवचनानुरोधेन समवेतार्थप्रातिपदिके संकोचादेः पाशमन्त्रवदन्याय्यत्वाच्च। प्रकृतौ चोहाभावात्। तद्वदेव पार्वणेऽप्युपपत्तेः। तथा च दलत्रयप्राप्तावेकदलविधिरेकोद्दिष्टे।

तथा च चतुर्विंशतिमतम्—"एकोद्दिष्टे शलाकैका निधायोदकमाहरेत्" इति।

हेमाद्रिणापि"एकं पवित्रमेकशिखं पवित्रम्"इति व्याख्यातम्।

विष्णुरपि—"अथाशौचव्यपगमे सुस्नातः सुप्रक्षालितपाणिपाद आचान्तस्त्वेवंविधान् ब्राह्मणान्यथाशक्त्युदङ्मुखान् गन्धमाल्यवस्त्रालङ्कारादिभिः पूजितान् भोजयेदेकवन्मन्त्रानूहेतैकोद्दिष्ट उच्छिष्टसंनिधावेकमेव तन्नामगोत्राभ्यां पिण्डं निर्वपेत्, भुक्तवत्सु ब्राह्मणेषु दक्षिणयाभिपूजितेषु प्रेतनामगोत्राभ्यां दत्ताक्षय्योदकेषु चतुरङ्गुलपृथ्वीस्तावदन्तरास्तावदधःखाता वितस्त्यायतास्तिस्रः कर्षूः कुर्यात्। कर्षूणां समीपे चाग्नित्रयमुपसमाधाय परिस्तीर्य तत्रैकैकस्मिन्नाहुतित्रयं जुहुयात्सोमाय पितृमते स्वधा नमः, अग्नये कव्यवाहनाय स्वधा नमः, यमायाङ्गिरस्वते स्वधा नमः, स्थानत्रये च प्राग्वत्पिण्डनिर्वपणं च कुर्यात्। ततो दधिघृतमांसैः कर्षूत्रयं पूरयित्वा एतत्त इति जपेत्। एवं मृताहे प्रतिमासे कुर्यात्" इति।

अत्र च "एकवन्मन्त्रानूहेत" इति बहुवचनान्तपितृपदोपेतेषु मन्त्रेष्वेकवचनान्तो होम उक्तः स न प्रकृतैकादशाहिकैकोद्दिष्टाभिप्रायः। नाप्येवं मृताह इत्युक्तसपिण्डीकरणपूर्वभाविमासिकैकोद्दिष्टाभिप्रायः। तदानीमवस्थाविशेषरूपपितृत्वालाभेन तद्वाचिपितृपदोपेतानां मन्त्राणां तेष्वप्रवृत्तेः। अत एव प्रेतश्राद्धेषु पितृशब्दनिषेधद्वारा तद्युक्तमन्त्रनिषेधो वक्ष्यमाणो न्यायप्राप्तानुवाद एव।

न च जनकपुरुषवचन एव मन्त्रगतः पितृशब्दोऽस्तीति वाच्यम्। तथा सति बहुवचनान्वयार्थं पितामहप्रपितामहलक्षणापत्तेः। तस्याश्चैकेनैव पितृत्वेन सर्वेषु मुख्यत्वोपपत्तावन्याय्यत्वात्। अत एव मातृश्राद्धे पितृप्रातिपदिकस्यानूह उक्तोऽन्वष्टक्ये वृत्तिकारादिभिः। यत्र तु जनकपुरुषवाचिबहुवचनान्तपितृशब्दोपेते शुन्धनमन्त्रे अन्यत्र चैवंजातीयके ऊहप्रसङ्गस्तस्यापि प्रेतश्राद्धेष्ववनेजनादिनिषेधात्प्रेतशब्देनैवोद्देशविधानाच्च तेष्वप्रवृत्तिः।

तथा चाश्वलायनगृह्यपरिशिष्टे—

"प्रेतश्राद्धेषु सर्वेषु न स्वधा नाभिरम्यताम्।
स्वस्त्यस्तु विसृजेदेवं सकृत्प्रणववर्जितम्॥
एकोद्दिष्टस्य पिण्डे तु अनुशब्दो न युज्यते।
पितृशब्दं न युञ्जीत पितृहा चोपजायते"॥ इति।
"अनुदकमधूपं च गन्धमाल्यविवर्जितम्।
नवश्राद्धममन्त्रं च पिण्डोदकविवर्जितम्"॥ इति।

अनुदकमनर्घ्यम्, पिण्डोदकमवनेजनप्रत्यवनेजनरूपं तेन विवर्जितमिति हेमाद्रिणा व्याख्यातम्। हेमाद्र्युदाहृतस्मृत्यन्तरेऽपि—

"आशिषो द्विगुणा दर्भा अपाशीः स्वस्तिवाचनम्।
पितृशब्दश्च सम्बन्धः शर्मशब्दस्तथैव च॥

तेन साग्निकेन पिण्डपितृयज्ञार्थं दर्शश्राद्धार्थं वाशौचापगमोत्तर-द्वादिनानन्तरत्रयोदशदिने मृताहाद्द्वादशाहे दर्शरूपे मृताहावधिकैकादशाहे वा द्विजातिना सपिण्डनं कार्यम्। यद्यस्य प्रतिबन्धकवशादेषु कालेषु तन्न जातं तदा त्रिपक्षादिषु वक्ष्यमाणेषूत्तरकालेषु तत्कर्त्तव्यम्। तदाह साग्निकं प्रकृत्य गोभिलः—

"द्वादशाहादिकालेषु प्रमादादननुष्ठितम्।
सपिण्डीकरणं कुर्यात्कालेषूत्तरभाविषु" ॥ इति।

इदं च वचनं प्रकरणात्सामर्थ्याच्च साग्निककर्त्तृविषयमेव। तस्यैव दर्शकर्त्तव्यानुरोधेन द्वादशाहादयो मुख्याः काला इत्यनुकल्पत्वेनोत्तरे विधातुं युज्यन्ते न तु निरग्निकस्य। तस्य हि वर्षान्त एव मुख्यः, पूर्वं एव त्वशक्तिवृद्ध्याद्यनुरोधोपाधिका अनुकल्पा इति। निरग्निकेन त्वाहिताग्नेः प्रेतस्य सपिण्डीकरणं मृतितिथ्यवधिकतृतीयपक्षे कर्त्तव्यम्। तथा च सुमन्तुः—

"प्रेतश्चेदाहिताग्निः स्यात्कर्त्तानग्निर्यदा भवेत्।
सपिण्डीकरणं तस्य कुर्यात्पक्षे तृतीयके" ॥ इति।

लघुहारीतोऽपि—

"अनग्निस्तु यदा वीर भवेत्कुर्यात्तदा गृही।
प्रेतश्चेदग्निमांस्तु स्यात्त्रिपक्षे वै सपिण्डनम्" ॥ इति।

अत्र चाधिकरणसप्तमीवशात्तृतीयः पक्षः सकलः सपिण्डीकरणकालो न तु तत्पूर्त्यनन्तरामृततिथिसजातीया तिथिः। तस्यास्तद्बाह्यत्वात्। एवं त्रिमासषण्मासादिष्वपि। प्रेतश्राद्धनिषिद्धतिथिनक्षत्रादिकं तु परिहृत्य तत्र तत्कार्यम्। अमुमाहिताग्निप्रेतविषयं कालं प्राच्या न लिखन्ति। एतस्य च कालस्य यथा साग्निककर्त्तृनिमित्तेन कालेनान्तरङ्गनिमित्तकत्वाद्बाध इति कर्त्तुरनग्निकत्वं न्यायप्राप्तं

विशेषणं तथा वक्ष्यमाणेन वृद्ध्युपस्थितिनिमित्तकेनापि कालेन बाधो द्रष्टव्यः। उभयानिरग्निकत्वे सम्वत्सरपूर्त्यनन्तरमृततिथिर्मुख्यः कालः।

तदुक्तं भविष्यत्पुराणे—

सपिण्डीकरणं कुर्याद्यजमानस्त्वनग्निमान्।
अनाहिताग्नेः प्रेतस्य पूर्णेऽब्दे भरतर्षभ" ॥ इति।

अत्र च पूर्णे इति पूर्तिक्षणविशिष्टस्याधिकरणत्वप्रतीतेः क्षणस्य चाधिकरणत्वासंभवात्कारकविभक्तिबलीयस्त्वेन च "यस्य च भावेन भावलक्षणम्" इत्यनुशासनलभ्यस्य पूर्णे सतीत्यर्थस्यानुचितत्वात्प्रत्ययार्थप्रधानभूताधिकरणत्वानुरोधेन प्रातिपदिके पूर्त्तिस्तिथिलक्षणा यद्यपि न्यायात्प्राप्नोति तथाप्यत्र वचनवशात्पूर्णे सत्यनन्तरदिन इत्येवार्थः। तथा चोशनाः—

"पितुः सपिण्डीकरणं वार्षिके मृतिवासरे।
आधानाद्युपसंप्राप्तावेतत्प्रागपि वत्सरात्" ॥ इति।

नागरखण्डेऽपि—

"पितुः सपिण्डीकरणं वत्सरादूर्ध्वतः स्थितम्।
वृद्धिरागामिनी चेत्स्यात्तदार्वागपि कारयेत्" ॥ इति।

शूलपाणिप्रभृतयोऽपि सम्वत्सरान्त्यमृताहे सपिण्डीकरणं मन्यन्त एव। किन्तु "सम्वत्सरे तु विज्ञेयम्, ततः सम्वत्सरे पूर्णे, समाप्ते सम्वत्सरे" इत्यादिष्वधिकरणत्व एव सप्तमी। पूर्णसमाप्तशब्दाभ्यां च न सम्यक्समाप्तिर्विवक्षिता। अन्त्यकलारूपायां तस्यां श्राद्धासंभवात्। किन्तु—

"सम्पूर्णे तु ततो मासे पिण्डशेषं समापयेत्।
मृतस्य दशमः पिण्डो मासे पूर्णेऽह्नि दीयते" ॥

इत्यादिवद्दीषत्समाप्तिस्तेन पूर्त्तिदिनलाभः। अन्त्यमृताहोऽपि च सम्वत्सरान्तर्गत एव न तद्बाह्यः। आद्यमृताहस्यावधिमात्रत्वेन तस्यैव षष्ठ्यधिकशतत्रयदिनात्मकसम्वत्सरपूरकत्वात्। अजहत्स्वार्थलक्षणया सम्वत्सरपदस्यैव दिनाधिकसम्वत्सरपरत्वाद्वा। "सम्वत्सरान्ते प्रेताय" इति विष्णुवचनेऽपि "दशाहान्ते पुनः क्रिया" इतिवदन्तःशब्दो न समीपवचनः, किन्तु दशान्तः पट इतिवदन्तिमावयववचनोऽन्त्यमृताहपर एवेति मन्यन्ते। तत्त वार्षिकप्रकरणे आद्यमृताहं गृहीत्वैव सम्वत्सरव्यवस्थापनाद् "वत्सरादूर्ध्वतः" इति वचनविरोधाच्चायुक्तम्।

स्मृत्यर्थसारे तु—"द्वितीयसम्वत्सराद्यमृताहपूर्वभाविनि प्रथमवत्सरान्त्यदिने सपिण्डीकरणं प्रतीयते। एवं हि तत्र श्राद्धक्रम उक्तः। एकादशाहमारभ्य द्वादशमासाद्यमृताहं यावद् द्वादशमासिकान्तानि श्राद्धानि कृत्वा द्वादशमासोपान्त्यदिने ऊनाब्दिकं तदन्त्यदिने सपिण्डीकरणं तदुत्तरमृताहे प्रथमाब्दिकम्" इति।

तदपि—

"षाण्मासिकाब्दिके श्राद्धे स्यातां पूर्वेद्युरेव ते।
पितुः सपिण्डीकरणं वार्षिके मृतिवासरे"॥

इत्यादिवचनविरुद्धम्।

तेन सम्वत्सर इत्यादिः सति सप्तम्येव। मृताह एव सपिण्डीकरणम्। प्रथमसाम्वत्सरिकस्य तु तदा का गतिः—किंकर्त्तव्यमुत नेति।

पृथ्वीचन्द्रोदयादिषु तावन्न कर्त्तव्यमित्युक्तम्। मुख्यकालस्य सपिण्डीकरणेनावरुद्धत्वाच्छ्राद्धशेषभोजनरूपमुत्तराङ्गं विना सपिण्डीकरणप्रयोगस्यासमाप्तेर्गौणकालेऽपि तदसंभवात्। "मलमासेऽपि

कर्त्तव्यमाब्दिकं प्रथमं द्विजैः" इत्यादि तु तदनुष्ठानद्योतकं द्वादशाहादिसपिण्डीकरणपक्ष इति। यद्यपि च—

"एकोद्दिष्टस्य शेषं तु ब्राह्मणेभ्यः समुत्सृजेत्।
ततः स्वयं तु भुञ्जीत पुनर्मङ्गलभोजनम्"।

इति बृहस्पतिवचनेन प्रेतैकोद्दिष्टशेषभोजनं निषिद्धं तथापि पार्वणांशशेषभोजनमावश्यकम्। अत एव सपिण्डीकरणे पार्वणैकोद्दिष्टांशयोः पाकभेदाचारः शिष्टानाम्। वृद्धिदिनसपिण्डने त्वगत्या शेषभोजनं विनापि तत्समाप्तिः। श्रीदत्तवाचस्पत्यादयो मथिला अप्येवम्।

तदिदमयुक्तम्। विसर्जनेन समाप्ते श्राद्धप्रयोगे पश्चादागतोऽनियमेन प्राप्तस्य भोजनस्य नियमः श्राद्धशेषप्रतिपत्त्यर्थो वा कार्यापेक्षतत्साधनको वा तद्दिनरात्रिगतब्रह्मचर्यादिनियमवत्प्रयोगबहिर्भूत एव श्राद्धाङ्गम्। व्यवधानकारणाभावात्त्वव्यवधानमात्रं श्राद्धप्रधानेन सह तस्य तत्र प्रतिसम्वत्सरकर्त्तव्यतया विहितेन सपिण्डनवत्यां द्वितीयसम्वत्सराद्यमृततिथावप्यवश्यं प्राप्तेन वार्षिकश्राद्धेनोत्कृष्टं शेषभोजनं यदि तदुत्तरं श्राद्धद्वयाङ्गतया तन्त्रेण क्रियते न कापि क्षतिः। "पूर्वकस्य मृतस्यादौ द्वितीयस्य ततः पुनः" इति वचनादेकस्मिन् दिने क्रमेण क्रियमाणेषु वार्षिकश्राद्धेष्विव नित्यत्वाच्च गौणकालेप्यनुष्ठानमदोषः।

वस्तुतस्तु पार्वणविधिना साम्वत्सरिकानुष्ठानेन गौणकालप्राप्तिरपि। तस्यापराह्णकालत्वात्सपिण्डीकरणस्य च मध्याह्नकालत्वात् तत्र ह्येकोद्दिष्टांशेन मध्याह्ने पार्वणांशेन चापराह्णे प्राप्ते मुख्यत्वादेकोद्दिष्टस्य तद्धर्मस्य मध्याह्नस्यैवानुग्रहो युक्तः। मुख्यत्वं च प्रेतत्वनिवृत्तिपूर्वकपितृप्राप्तिरूपफलभागिप्रेतदेवत्यत्वात्, पार्वणांशस्य तु तदभावे संयोजनस्य कर्त्तुमशक्यत्वात्तदुपकारितयानुष्ठानात्। प्रथमानुष्ठेयत्वाच्च। प्रथमानुष्ठानं च "अथ सपिण्डीकरणम्,

पात्रालम्भोऽवगाहश्च उल्मुकोल्लेखनादिकम् ।
तृप्तिप्रश्नश्च विकिरः शेषप्रश्नस्तथैव च ॥
प्रदक्षिणा विसर्गश्च सीमान्तगमनं तथा ।
अष्टादश पदार्थास्तु प्रेतश्राद्धे विवर्जयेत्" ॥ इति ।

यद्यपि पवित्रद्वारा प्राप्तः पवित्रच्छेदनमन्त्रो द्विवचनान्तपवित्रशब्दोपेत एकदलविधानादेकोद्दिष्टे एकवचनोहविषयः कथञ्चिल्लभ्येत तथापि बहुवचनानुपपत्तिः । तस्मात्प्रसङ्गात्पुराणैकोद्दिष्टाभिप्रायोऽयमूहविधिः ।

अत एव सत्यप्येकोद्दिष्टप्रक्रमे पुनरत्रैकोद्दिष्टग्रहणम्—"एकवन्मन्त्रानूहेतैकोद्दिष्टे" इति । सोऽपि च तेष्वेव मन्त्रेषु येषु समुदितपित्राद्यभिप्रायेण प्रयोगाद्बहुवचनं समवेतार्थं "नमो वः पितरः" इत्यादिषु । न तु येषु प्रत्येकं प्रयोगादसमवेतार्थं तेष्वसमवेतार्थत्वादेव ।

यथार्घ्यपात्रेषु तिलावापमन्त्रे । यथा वा "एतद्वः पितरो वासः" इति जल्पन् पृथक्पृथगिति ब्रह्मपुराणाद्युक्तपक्षाश्रयणे "एतद्वः" इति मन्त्रे । यद्यपि चैकोद्दिष्टसामान्ये "अभिरम्यताम्" इति विसर्जनमन्त्रो याज्ञवल्क्यकात्यानादिभिर्विहितः । गोभिलेन तु "अभिरम्यतामिति विसर्जनम्" इत्यभिधाय "एतत्प्रेतश्राद्धम्" इत्यभिधानात्, प्रेतश्राद्धेऽपि विशेषतस्तथाप्याश्वलायनानां प्रेतश्राद्धेषु स न भवति विशेषतस्तत्र तं निषिध्य तत्परिशिष्टे मन्त्रान्तरविधानात् । इत्याद्यस्तु कालनिर्णये प्रासङ्गिकम् ।

## अथ सपिण्डीकरणकाला विविच्यन्ते ।

तत्र साग्निकेन पिण्डपितृयज्ञाधिकारिणा तावत्संभवे आशौचोत्तरदिनमारभ्य द्वादशसु दिनेषु षोडशश्राद्धानि पूर्वोक्तविधया विधाय तदुत्तरत्रयोदशदिने पितृपितामहप्रपितामहान्यतरस्य मात्रादीनां च तत्कार्यम् । तदुत्तरापतितायाममावास्यायां पिण्डपितृयज्ञः ।

दर्शात्पूर्वं तावत्कालासंभवे "एकाहे द्वादशाथवा" इति पक्षेणाशौचोत्तरदिने तन्त्रेण षोडशश्राद्धानि विधाय तदुत्तरदिने दर्शादर्वाग्यत्र क्वापि वा दिने सपिण्डीकरणं कृत्वा दर्शे पिण्डपितृयज्ञः। द्वादशदिन एव दर्शापाते तत्रैव सपिण्डनं पितृयज्ञश्च। आशौचान्त्यदिनोत्तरदिने एव दर्शापाते तु तत्रैव षोडशश्राद्धसहितं सपिण्डीकरणं कृत्वा पितृयज्ञः कार्यः। सपिण्डीकरणमकृत्वा पितृयज्ञस्य कर्त्तुमशक्यत्वान्मृतपितृकस्य चतदकरणे प्रत्यवायात्। तथा च जावालः—

"नासपिण्ड्याग्निमान्पुत्रः पितृयज्ञं समाचरेत्।
पापी भवत्यकुर्वन् हि पितृहा चोपजायते"॥ इति।
"एकादशाहं निर्वर्त्य अर्वाग्दर्शाद्यथाविधि।
प्रकुर्वीताग्निमान् विप्रो मातापित्रोः सपिण्डनम्"॥

इति छन्दोगपरिशिष्टमप्येतदभिप्रायकमेव। "अग्निमानर्वाग्दर्शात्" इति चोक्तेः। तथा च दर्शात्पूर्वं सपिण्डीकरणस्यावश्यकत्वे—

"सपिण्डीकरणं कुर्यात्पूर्वे दर्शेऽग्निमान् सुतः।
परतो दशरात्रस्य पूर्णे त्वब्दे तथेतरे"॥ इति।
"या तु पूर्वममावस्या मृताहाद्दशमी भवेत्।
सपिण्डीकरणं तस्यां कुर्यादेव सुतोऽग्निमान्"॥

इति च जाबालहारितोक्ततत्कालस्य च दर्शरूपस्य दशरात्रस्य परतः पूर्वं दर्शेत्यन्वयेन मृताहावधिकदशमीत्वोक्त्या त्वाशौचान्त्यदिनानन्तरभाविदर्शविषयत्वाद्व्यवधानेऽप्रवृत्तेस्तत्कालापेक्षायां "सपिण्डीकरणं मासिकार्थवद्द्वादशाहं श्राद्धं कृत्वा त्रयोदशेऽह्नि कुर्यात्" इति विष्णूक्तस्य षोडशश्राद्धव्याप्तद्वादशदिनोत्तरदिनस्य "द्वादशाहे त्रिपक्षे वा" इत्यादिवचनविहितस्य मृतिदिनावधिकद्वादशदिनस्य वा सामान्यविहितस्यैवात्रापि प्रवृत्तेः बाधकाभावात्। "अर्वाग्दर्शात्" इति सामान्याकारेतत्कालोपसंग्रहेऽप्यविरोधात्। "यथाविधि" इत्युक्त्या

प्रत्युत तस्यैव प्रतीतेश्च। अत एवाशौचदिनान्तरदिन एव दर्शरूपे तत्रैव तत्कर्त्तव्यतार्थं पृथग्जाबालवचनं हारीतवचनं च।

हेमाद्रिस्तु—"अर्वाग्दर्शात्" इत्यस्य स्वतन्त्रकालविधायित्वं मत्वा "दशाहोत्तरं दर्शादर्वाग्यत्किञ्चिदप्यहः साग्निकस्य कर्त्तुः सपिण्डीकरणकालः" इत्याह।

न च वचनान्तरविहितसंभवत्कालोपसंग्रहेणैतद्वचनप्रवृत्तावप्यस्यानर्थक्यम्। औत्सर्गिकवर्षान्तकालबाधेनापकर्षार्थत्वात्। नासपिण्ड्येति वचनमपि किन्तु सपिण्डनं कृत्वाऽनन्तरागते काले आचरेदेवेति व्यक्त्यापकर्षार्थमेव। सपिण्डीकरणं विना पितृत्वव्याप्त्यभावादेव श्रौतार्थस्य प्राप्तत्वात्। तत्र निन्दानर्थक्याच्च।

पुत्रग्रहणाच्च मातुरपि सपिण्डनस्यापकर्षः। अत एव स्पष्टमुक्तम्—"मातापित्रोः सपिण्डनम्" इति। मातुरपि च पितृत्वप्राप्तिः श्राद्धार्थमिव पिण्डपितृयज्ञार्थमप्यपेक्षितैव। तत्पिण्डेष्वपि तस्या अंशभागित्वात्। "एकत्वं सा गता भर्त्तुः पिण्डे गोत्रे च सूतके" इति सामान्यवचनात्।

न चैवं श्राद्ध इव पिण्डपितृयज्ञेऽपि सपत्नीकत्वेन पित्रादीनां निर्देशापत्तिः। तं विनाप्यंशभागित्वोपपत्तेर्मातुर्मातामहेन सपिण्डने तत्पिण्ड इव। "एकमूर्त्तित्वम्" इत्यादिवचनात्। अन्यथा मातामहांशभागित्वार्थं तस्यापि सदुहितृकेति निर्देशापत्तेः। प्रपञ्चयिष्यते चैतदन्यत्र। अर्वाग्दर्शादिति सामान्योक्त्या च मृतपितृकसाग्निकस्य दर्शश्राद्धमप्यावश्यकमिति तदर्थमपि पित्रादिसपिण्डनापकर्ष इति गम्यते। अत एव—

"नासपिण्ड्याग्निमान् पुत्रः पितृयज्ञं समाचरेत्।
न पार्वणं नाभ्युदयं कुर्वन्न लभते फलम्"॥

इति हेमाद्र्युदाहृते प्रजापतिवचनेऽवश्यकर्त्तव्याभ्युदयसाहचर्येण पार्वणमप्युपात्तम्। अत एव च पुत्रमातापितृग्रहणस्याप्युपलक्षणत्वात् पौत्रादीनापि पितामहादेरपि सपिण्डनमभ्युदयार्थमिव दर्शश्राद्धपिण्डपितृयज्ञार्थं कर्त्तव्यमपकर्षेण। पितामहादिपितृत्वप्राप्तेरपि तदर्थमपेक्षितत्वात्।

एतेन "मन्त्रवर्जं शूद्राणां द्वादशेऽह्नि" इति विष्णुवचनेन मृतिदिनावधिकद्वादशाहे शूद्राणां सपिण्डनापकर्षविधानस्यापि दर्शश्राद्धार्थत्वात्सच्छूद्रस्यापि द्वादशाहोत्तरं दर्शापाते दर्शश्राद्धावश्यकत्वं द्योतितं वेदितव्यम्। अत एव दर्शश्राद्धकारिशूद्रविषयमेतदिति वृद्धैरपि कैश्चिदुक्तम्। तद्द्वारा च सच्छूद्रस्य पञ्चदशाहवदतिसच्छूद्रस्य दशाहरूपाशौचकालसंकोचस्यापि विधानमेतद् द्रष्टव्यम्। तेन दशपिण्डदानस्य जातत्वात्कथं शूद्रस्य द्वादशेऽह्नि सपिण्डीकरणविधानमित्यनौचित्यमपि मृतिदिनावधिकद्वादशाहग्रहणेऽपि परिहृतं वेदितव्यम्।

वस्तुतस्तु "द्वादशेऽह्नि"इत्यनेन न मृताहाद्द्वादशेऽह्नीत्युच्यते किन्तु सम्वत्सरान्ते सपिण्डीकरणं सर्वेषां मुख्यपक्षेण विधाय द्विजातीनां मासिकानामर्थः प्रयोजनं प्रेतभावनिवृत्तिस्तद्वच्छ्राद्धम्। गणाभिप्रायमेकवचनम्। षोडशश्राद्धानीति यावत्। आशौचापगमोत्तरं द्वादशस्वहस्सु पूर्वोक्तविधया कृत्वानन्तरे त्रयोदशेऽह्नि कुर्यादित्यपकर्षपक्षं विधाय शूद्राणां तु न तस्मिंस्त्रयोदशे किन्तु तत्पूर्वद्वादशदिन एव तत्र कर्त्तव्यं मासिकं कृत्वेत्युच्यते। मासिकार्थवादित्यादिपूर्ववचनकवाक्यत्वात्। अत एवाग्रेऽपि मृतिसम्वत्सरेऽधिकमासापाते तेष्वेव द्वादद्दिनेष्वधिकमेकं दिनमधिकमासकर्त्तव्यमासिकाभ्यासार्थं वर्द्धयित्वा चतुर्दशे दिने सपिण्डीकरणानुष्ठानं द्विजानाम्, शूद्राणां तु त्रयोदश इत्युक्तम्। सम्वत्सराभ्यन्तरे यद्यधिकमासो भवेत्तदा मासिकार्थं दिनमेकं वर्द्धयेदिति।

समाप्ते वत्सरे चत्वार्युदपात्राणि प्रयुनक्ति तत्रैकं प्रेताय त्रीणि पितृभ्य एवं पिण्डान्" इति बैजवापगृह्यात्।

"प्रेतविप्रस्य हस्ते तु चतुर्भागं जलं क्षिपेत्।

ततः पितामहादिभ्यस्तन्मन्त्रैश्च पृथक् पृथक्"॥ इति ब्रह्मपुराणात्,

"संवत्सरान्ते प्रेताय तत्पित्रे तत्पितामहाय तत्प्रपितामहाय ब्राह्मणान् दैवपूर्वान् भोजयेत्" इति विष्णुवचनात्, अन्येभ्यश्च बहुभ्यो वचनेभ्यः स्पष्टमेव गम्यते। "त्रीणि पितॄणामेकं प्रेतस्य" इति गोभिलसूत्रं तु बहुविरोधात्त्र क्रमकल्पकम्। भवद्वा छन्दोगविषयम्। तथाऽप्युपजीव्यत्वादेकोद्दिष्टकाल एवानुग्राह्यः।

न चैकाधिकरणयस्यैकीयमतत्वेनोपन्यासेन स्वसंमतत्वान्मुख्य-स्वधर्मत्वस्याधिकारभेदेन समसंख्यविषयत्वादत्र च पार्वणे यागत्रय-सत्वाज्जघन्यस्यापि तस्यैव कालानुग्रहो युक्त इति वाच्यम्। तत्रापि कर्मण एकत्वादेव। समुच्चितदेवतानुरोधेन सोमयागवदभ्यासमात्र-भेदात्, तेषां च कालादिधर्मानन्वयात्।

न च कालो देवता, येन यथा पूष्ण एकमात्रेतरसाहित्ये नेमपि-ष्टत्वमभिप्रेत्य बह्वितरसाहित्ये "विप्रतिपिद्धधर्मसमवाये भूयसां स्यात्स्वधर्मत्वम्" इति न्यायेन पेषणरूपगुणधर्मबाधेन भूयोऽन्यदेवता-नुरोधेन तण्डुला एव ग्राह्या इति पेषणस्य देवतास्वरूपधर्मत्वं (१) तृतीयाधिकरणपूर्वपक्षमभिप्रेत्य छन्दोगपरिशिष्टे उक्तम्—

(२) "यद्यप्यदन्तकः पूषा पैष्टमत्ति सदा चरुम्।
अग्नीन्द्रेश्वरसामान्यात्तण्डुलोऽत्र विधीयते"॥ इति।

तथात्रापि स्यात्। तेन सपिण्डीकरणस्यैकोद्दिष्टकाले कुतुप-

(१) ३ अध्याये ३ पादे ३० अधिकरणं जैमिनीयन्यायमालायाः।

(२) "तस्मात्पूषा प्रपिष्टभागोऽदन्तको हि" इति दर्शपूर्णमास-प्रकरणे वचनम्।

प्रभृतिमध्याह्नैकदेश एवानुष्ठानात्पार्वणविधिनानुष्ठीयमानस्य सांवत्सरिकस्य सपिण्डीकरणं समाप्यापराह्णमध्य एवोपक्रमितुं शक्यत्वाच्च गौणकालतापीति पारमार्थिकमुक्तम् ।

गौणकालेऽपि तु तदनुष्ठाने न कश्चिद्दोषो नित्यत्वादेकोद्दिष्टविधिनानुष्ठाने तस्यावश्यकत्वादित्युक्तम् ।

तेन सपिण्डनदिने सांवत्सरिकश्राद्धाननुष्ठाने यन्न्यायोपन्यसनं वाचस्पत्यादीनां तत्तावदयुक्तम् । यदपि केनचिद् गौडेनोक्तम्- "गोभिलेन पूर्णे संवत्सरे सपिण्डीकरणमभिधाय "अतऊर्ध्वं संवत्सरे संवत्सरे प्रेतायान्नं दद्याद्यस्मिन्नहनि प्रेतः स्यात्" इति सूत्रेणाद्याब्दादूर्ध्वं सांवत्सरिकविधानात्प्रथमाब्दे वार्षिकश्राद्धं न भवत्येव" इति ।

तदत्यन्तायुक्तम् । न ह्यत ऊर्ध्वमिति संवत्सरः परामृश्यते । पूर्णे संवत्सरे षण्मासे त्रिपक्षे वा यदहर्वा वृद्धिरापद्यत इत्यनेकेषां कालानां पूर्वमुक्तत्वात् । किन्तु सपिण्डीकरणं तदूर्ध्वता च प्रथमसंवत्सरेऽपि संभवत्येवेति वीप्साबलात्तत्रापि प्राप्यमाणं किमिति न क्रियते । किञ्चैवं सति मलमासप्रकरणे प्रथमसांवत्सरिकविषयो निर्णयस्तल्लोपने प्रायश्चित्तविधानं च सर्वमभित्तिचित्रमेव स्यात् ।

"पूर्णे संवत्सरे श्राद्धं षोडशं परिकीर्त्तितम् ।
तेनैव च सपिण्डत्वं तेनैवाब्दिकमिष्यते" ॥

इति वचनमुपन्यस्य संवत्सरान्तक्रियमाणसपिण्डीकरणेनोभयनिर्वाहाभिधानं च तदीयं तत्राब्दिकाप्राप्तौ न घटते ।

न चैतद्वचनबलादेव, तर्हि तद्दिने आब्दिकानुष्ठानं भवत्विति वाच्यम् । एतस्यानाकरत्वादनन्वितार्थत्वाच्च । तथाहि तन्मतेन त्रयोदश्यां मृततिथावनुष्ठीयमानं षोडशश्राद्धान्तर्गतं यद्द्वादशमासिकं तेन तावत्सपिण्डीकरणाब्दिककार्यनिर्वाहो न संभवत्येव । अथ छन्दोग-

परिशिष्टे षोडशसंख्यापूरकत्वेनोक्तं सपिण्डीकरणमेवेह षोडशपदेन गृह्यते तेन च स्वकार्यमाब्दिककार्यं च क्रियत इति वचनार्थः। सोऽप्यनुपपन्नः। पितृत्वापन्नतृप्तिरूपस्याब्दिककार्यस्य तेनासंभवात्। गौडनिबन्धलिखितैरेव वचनैः सम्प्रतिपक्षं चेदम्।

तथाहि धवलसंग्रहे जाबालिः—

"पूर्णे संवत्सरे कुर्यात्सपिण्डीकरणं सुतः।
एकोद्दिष्टं च तत्रैव मृताहनि समापयेत्" ॥

तत्रैव गालवोऽपि—

"पूर्णे संवत्सरे वृत्ते मृताहे पुनराब्दिकम्।
सपिण्डीकरणं कृत्वा कुर्यात्पुत्रस्तु नेतरः" ॥

संवत्सरे पूर्णे वृत्ते सपिण्डीकरणं कृत्वा पुनराब्दिकं कुर्यादित्यन्वयः। पुत्रग्रहणमुत्तरक्रियायेषामाश्यकास्तदधिकार्युपलक्षणम्। इतरग्रहणं तद्भिन्नपरम्। स्वल्पमात्स्ये—

"पुत्रः सपिण्डनं कृत्वा कुर्यात्स्नानं सचैलकम्।
एकोद्दिष्टं ततः कुर्यात्कुतपं न विचारयेत्" ॥

इत्येकोद्दिष्टग्रहणं पाक्षिकेण तेन प्रकारेण सांवत्सरिकमुपलक्षयति। तेनैतद्वचनाविरोधाय साकरमपि तत्तन्मतेनैवं व्याख्येयम्-संवत्सरे मृताहे द्वादशमासिकरूपं षोडशं श्राद्धं कर्त्तव्यम्। ततस्तेनैव दिनेनापवृक्तं सपिण्डीकरणमाब्दिकं च कर्त्तव्यमिति।

दाक्षिणात्यनिबन्धेषु त्विदं नोपलभ्यत एव। एकेन हेमाद्रिणापि "पूर्णे संवत्सरे पिण्डः षोडशः परिकीर्तितः" इति पाठेन मुनिविशेषानुल्लेखेनैव पठितमनन्वितार्थं च तन्मते।

तेन सपिण्डीकरणस्य षोडशश्राद्धान्तर्गतत्वाभ्युपगमात्तद्भिन्नानामेव तेषां सूत्रोपन्यासेन परिगणनात्, अत एव मतान्तरोपन्यासा-

वसरे लिखितमिति सपिण्डीकरणं कृत्वा तद्दिन एवाब्दिकानुष्ठान-मुचितमेवेति मम मतिः।

शिष्टाचारस्त्विदानीं पूर्णसंवत्सरसपिण्डीकरणानुष्ठानपक्षस्या-दर्शनात् तदाब्दिककरणाकरणान्यतरगोचरो न दृश्यत एवेति। केनचिन्निमित्तेन संवत्सरान्तसपिण्डीकरणशक्तावेकादशो मासः, तत्राप्यशक्तौ नवमो मासः, तत्राप्यशक्तौ षष्ठः, तत्राप्यशक्तौ तृतीयः, तत्राप्यशक्तौ तृतीयः पक्षः, तत्राप्यशक्तावाशौचान्त्यदिनोत्तरदिनमारभ्य द्वादशस्वहस्सु षोडश श्राद्धानि कृत्वा त्रयोदशेऽह्नि, तत्राप्यशक्तावेकाद-शाहे द्वादशाह एव वा तानि कृत्वा मृतदिनाद् द्वादशाह इति। तथा च भविष्यत्पुराणे—

"द्वादशेऽहनि षष्ठे वा त्रिपक्षे वा त्रिमासि वा।
एकादशेऽपि वा मासि मङ्गल्यस्याप्युपस्थितौ" ॥ इति।

षष्ठे वेत्यत्र मासीति सम्बन्धनीयम्। त्रिपक्षे त्रिमासीत्यादौ पूरणप्रत्ययार्थविवक्षया तृतीये पक्षे तृतीये मास इत्यादिरर्थः। वाक्या-न्तरेषु स्पष्टं तथोपादानात्। तेषां च तृतीयमासादीनामधिकरणत्वा-त्समस्तानामेवाङ्गत्वं न तु तदुत्तरमृततिथेः। पूर्ण इत्यश्रवणात्। क्वचि-त्संवत्सरान्वयित्वेन श्रुतस्य चानुषङ्गे प्रमाणाभावात्, "मासं दर्शपूर्ण-मासाभ्यां यजेत" इत्यादिषु "उपसद्भिश्चरित्वा" इत्यस्येव (१)। तेन यत्क्वचिन्मासि षष्ठे गत इत्युक्तं तत्र मूलं न विद्मः।

न च तत्र तयोरयमेव कालो नान्य इतीदृशो नियमो नान्यादृश इति वाच्यम्। "वसन्ते ब्राह्मणोऽग्निमादधीत" इत्यादिषु यथैकवाक्यो-पादानाद् ब्राह्मणादयो वसन्तादिष्वेव वसन्तादिषु ब्राह्मणादय एवेति द्वयोरपि कर्तृकालयोर्मिथो नियमस्तथात्रापि नियमद्वयस्यापि संभ-वात्।

(१) जैमिनीयन्यायमाला—२ अध्या० ३ पा० ११ अधिकरणम्।

पैठीनसिरपि—"संवत्सरान्ते विसर्जनं नवममास्यमित्येके" इति । विष्णुरपि—"मासिकार्थवद् द्वादशाहं श्राद्धं कृत्वा त्रयोदशेऽह्नि वा कुर्यान्मन्त्रवर्जं शूद्राणां द्वादशेऽह्नि" इति । ननु—

"साग्निकस्तु यदा कर्त्ता प्रेतश्चानग्निमान् भवेत् ।
द्वादशाहे तदा कार्यं सपिण्डीकरणं सुतैः" ॥

इति गोभिलेनाहिताग्नेरेव कर्तुर्द्वादशाहविधानात् "प्रेतश्चेदाहिताग्निः स्यात्"इत्यादिवचनेन चाहिताग्निप्रेतविषय एव तृतीयपक्षविधानात्कथमनयोः कालयोः कर्तरि प्रेते च निरग्निके प्राप्तिः ।

विषम उपन्यासः । तत्र हि कर्तृकालविशेषविशिष्टाधानविधिषु विधेययोः कर्त्तृकालविशेषयोरैककर्म्यादरुणैकहायनीवद्युक्तो मिथो नियमः । इह तु सपिण्डीकरणस्य वचनान्तरविहितत्वेनाविधेयत्वात् क्रियानुवादे च गुणद्वयविधेरसंभवात्स्पष्टं चयदाचेत्यादिशब्दैः । कर्तृप्रेतसाग्निकत्वस्य निमित्तत्वेनोपादानात्कालनियम एव वाक्यार्थः । तेन तयोः स एव कालो नान्यः कालः पुनरन्येषामपि युक्त एव । अत एव साधारण्येनैव द्वादशाहविधायकं व्याघ्रवचनम्—

"आनन्त्यात्कुलधर्माणां पुसां चैवायुषः क्षयात् ।
अस्थितेश्च शरीरस्य द्वादशाहः प्रशस्यते" ॥ इति ।

कुलधर्माणां सपिण्डीकरणाभावेऽनुष्ठातुमशक्यानां तृतीयपञ्चमवर्षाद्यनुष्ठेयचूडाकरणादीनामन्येषां च प्रतिकुलव्यवस्थितानां मङ्गल्यानाम् । अनेन सपिण्डीकरणाधिकारिणा यावत्तदनुष्ठानं वृद्धिश्राद्धानङ्गकमपि कुलाचारादिप्राप्तमङ्गल्यं कर्म न कर्तव्यमिति सूच्यते । शरीरस्यास्थितिः सपिण्डीकरणसामग्रीसंपत्तिमद्देशावस्थानाभावः परचक्राक्रमणनिमित्तपलायनादिना । रोगादिना कर्मकरणसामर्थ्यरूपस्थैर्यापरपर्यायस्थित्यभावो वा । प्रशस्तत्वं च द्वादशाहस्य प्रकृतसपिण्डीकरणविषयम् । ईदृशानियतकालमासिकोत्तर-

कर्त्तव्यतयोत्सर्गतः संवत्सरान्त एवानुष्ठेयस्य सपिण्डीकरणस्य यदर्वाक् षण्मासत्रिमासादिष्वनुष्ठानम्, तदेतत्त्रयान्यतमसंभावनया तथा चेदनन्तरद्वादशाह एव तद्भवत्विति। द्वादशं च तदहश्च द्वादशाहः। स च मृतिदिनावधिक एव। द्वादशानामह्नां संघातो द्वादशाहः षोडशश्राद्धापकर्षकाल इति शूलपाणिः। क्वचिन्मृतिदिनावधिकमेकादशमपि दिनं द्वयोर्निरग्निकयोः सपिण्डीकरणकालत्वेनोक्तम्।
तथा च चतुर्विंशतिमते—

"सपिण्डीकरणं चाब्दे सम्पूर्णेऽभ्युदयेऽपि वा।
द्वादशाहे तु केषांचिन्मतं चैकादशे तथा"॥ इति।

शक्यते तु वक्तुम्—"या तु पूर्वममावास्या"इत्यादिवचनैकवाक्यतयायमेकादशाहो दर्शात्मकः पिण्डपितृयज्ञाधिकारिसाग्निककर्तृविषय इति। "यजमानोऽग्निमान्" इत्यादिवचनैकवाक्यतया द्वादशाहोऽपि तद्विषयः किं न स्यादिति चेन्न।

आनन्त्यादिति वचनात्तस्य सर्वविषयत्वात्। इदं हि वचनमायुःक्षयादिसंभावनानिमित्तं सपिण्डनापकर्षं विदधन्निरग्निकविषयमेव। साग्निककर्तृकसपिण्डनापकर्षस्य पितृयज्ञादिनिमित्तत्वात्। अत्रैकादशाहद्वादशाहशब्दाशौचान्त्यदिनोत्तरदिनतदुत्तरदिनोपलक्षकाविति प्राङ् निर्णीतम्। यथा चायं संभावितमुख्यकालाशक्तिनिमित्तः सपिण्डीकरणापकर्षो द्वादशाहादिषु तथाऽऽवश्यकवृद्धिनिमित्तोऽप्यपकर्षः सर्वेषां गोभिलादिभिरुक्तः—"यदहर्वा वृद्धिरापद्येत" इति।

यद्यपि चात्र वृद्धिदिने सपिण्डीकरणं प्रतीयते तथापि वृद्धिरापद्येत संनिधीयेतेति व्याख्यानाद् वृद्धिसंनिहिते दिने द्रष्टव्यम्। वृद्धिश्राद्धस्य प्रातःकालिकत्वात्। सपिण्डीकरणस्य च कुतपप्रभृतिकालत्वात्। अत एव नागरखण्डे—

"पितुः सपिण्डीकरणं वत्सरादूर्ध्वतः स्थितम्।
वृद्धिर्वागामिनी चेत्स्यात्तदार्वागपि कारयेत्"॥ इति।

उशनसापि—

"पितुः सपिण्डीकरणं वार्षिके मृतिवासरे।

आधानाद्युपसंप्राप्तावेतत्प्रागपि वत्सरात्" ॥ इत्येवोक्तम्।

अयं च वृद्धिनिमित्तकः सपिण्डनापकर्षो वृद्धिश्राद्धार्थः। सपिण्डीकरणं विना पितृत्वप्राप्त्यभावेन श्राद्धस्यैव कर्तुमशक्यत्वात्। अत एव शाट्यायनिः—

"प्रेतश्राद्धानि सर्वाणि सपिण्डीकरणं तथा।

अपकृष्यापि कुर्वीत कर्ता नान्दीमुखं ततः" ॥ इति।

नान्दीमुखशब्देन हि तादृशपितृदेवत्यं श्राद्धमेवोच्यते। अपकृष्येत्यनुवृत्ताबुशना अपि—

"वृद्धिश्राद्धविहीनस्तु प्रेतश्राद्धानि यश्चरेत्।

श्राद्धी स नरके घोरे पितृभिः सह मज्जति" ॥ इति।

वृद्धिश्राद्धोपस्थितिविहीनो यः प्रेतश्राद्धान्यपकृष्य चरेदित्यर्थः। अतएव च न पित्रादिसपिण्डनस्य वापकर्षस्तदर्थं किन्तु मातृमातामहादीनामपि। तथा च—

"निरग्निकः सपिण्डत्वं पितुर्मातुश्च धर्मतः।

पूर्णे संवत्सरे कुर्याद्वृद्धिर्वा यदहर्भवेत्" ॥

इति पुलस्त्यवचने मातुरप्युपादानम्। उपलक्षणं चैतत्। अत्र च पित्रादिशब्दानां सम्बन्धिशब्दत्वात्प्रतिसम्बन्ध्याकाङ्क्षायां बुद्धिस्थः सपिण्डीकरणकर्त्तैव प्रतीयते। यथा "सप्तमं पदमध्वर्युरञ्जलिना गृह्णाति (१)। उत्तरार्द्धात्स्विष्टकृते (२) समवद्यति" इत्यादिषु पदिन एकदेशिनश्चाकाङ्क्षायामेकहायनी पदित्वेन पुरोडाशादिश्चैकदेशित्वेन। तथापि न्यायतुल्यत्वात्संस्कार्यपित्रादीनामपि ग्रहणम्। भ्रातृ-

(१) जैमिनीयन्यायमाला—४ अध्या० १ पा० १० अधि०।
(२)—तत्रैव—४ अध्या० १ पा० १२ अधि०।

पुत्रादीनां पितृव्यादिभिः क्रियमाणे संस्कारे तदङ्गश्राद्धे तेषामपि देवतात्वात्। तथा च कात्यायनः—

"स्वपितृभ्यः पिता दद्यात्सुतसंस्कारकर्मसु।
पिण्डानोद्वाहनात्तेषां तस्याभावे तु तत्क्रमात्" ॥ इति।

अत्र च जातकर्मादिष्वाद्योद्वाहान्तेषु सुतस्य सुताया वा संस्कारकर्मसु पिता पिण्डान् दद्यात्। स च स्वपितृभ्य इत्ययं तावदर्थः प्राप्त एव। तथा हि—

संस्कारकर्मसुपिण्डदानोपलक्षितं नान्दीमुखश्राद्धं तावत् "अमावास्याष्टकावृद्धिः" "नानिष्ट्वा तु पितॄञ्छ्राद्धे कर्म वैदिकमाचरेत्" इत्यादिभिः सामान्यवचनैर्वृद्धिश्राद्धप्रकरणलिखितैश्च विशेषवचनैः प्राप्तमेव। तत्र च पिता कर्त्रेत्यपि।

"पितैवोपनयेत्पुत्रं तदभावे पितुः पिता।
पितापितामहो भ्राता सकुल्यो जननी तथा" ॥

इत्यादिभिः क्रमिकाधिकारिविधायकैः प्राप्तमेव।

न च ग्रन्थान्तरत्वादत्रापि तस्य पुनर्विधिर्भवतु "कुलदेवतासम्बद्धं पिता नाम कुर्यात्" इत्यादिवदिति वाच्यम्। "तस्याभावे तु तत्क्रमात्" इत्येतदर्थमेतस्य वचनस्य तद्वचनोपजीवित्वात्। स च स्वपितृभ्य इत्यपि प्राप्तमेव। तथा हि "सर्पिर्मधुनी प्राशयेन्नाम दद्यादन्नं प्राशयेत्केशवेषान् कारयेदुपनयेत्संवत्सरमादिशेत्कन्यां दद्यात्" इत्यादिप्रयोजकव्यापाररूपसंस्कारविधिषु तावत् पितुरेव प्रयोजकस्य नियोज्यता न तु प्रयोज्यस्य संस्कार्यस्य। यश्च प्रधानेषु संस्कारकर्मसु नियोज्यः स एव तदङ्गे श्राद्धेऽपीति तद्विधिगतेषु पित्रादिषु प्रतिसम्बन्ध्याकाङ्क्षायां तस्यैवान्वयो युक्तः।

ननु च संस्कारकर्मसु संस्कार्य एवाधिकारी।
"गार्भैर्होमैर्जातकर्मचूडामौञ्जीनिबन्धनैः।
बैजिकं गार्भिकं चैनो द्विजानामपमृज्यते" ॥

इत्येतद्वाक्यप्रमितस्य तदकरणप्रयुक्तदौर्ब्राह्मण्याद्यनर्थपरिहारस्य च फलस्य तद्गामित्वात्। विशेषतश्चोपनयने तस्यानुष्ठानार्थार्थज्ञानोपकारेण माणवकार्थाध्ययनार्थत्वात्। संस्कर्त्ता तु पित्रादिस्तत्रर्त्विक्स्थानीयः। अत एव यजमानवत्संस्कार्यस्य संस्कर्तृप्रयोजकत्वमप्युपनयने श्रूयते हेमाद्रिस्मृतिमहार्णवाद्युदाहृतायां बुधस्मृतौ—'गर्भाष्टमे वर्षे ब्राह्मण आत्मानमुपनाययीत, एकादशे क्षत्रियो ग्रीष्मे, द्वादशे वैश्यो वर्षासु'' इति।

छान्दोग्योपनिषदि च सत्यकामस्य जाबालस्यात्मानमुपनाययितुं गौतमं प्रति गमनम्। कन्यानामपि च स्वगतानर्थपरिहारार्थं स्वविवाहं प्रति कारयितृत्वमितिहासेषु, दातुरभावे तं प्रति स्वयंकर्तृत्वं च "गम्यं त्वभावे दातॄणां कन्या कुर्यात्स्वयं वरम्" इत्यादिषु स्मर्यते। यश्चाधिकारी स एव नियोज्य इति संस्कार्यस्यैव संभवतः पितृमातृमातामहादयो नान्दीश्राद्धे देवतात्वेन प्राप्नुयुर्न तु संस्कर्त्तुः पितुरिति स्वपितृभ्य इति विधातव्यमेव।

अत्रोच्यते। सत्यमस्ति संस्कारेषु संस्कार्यस्य फलभागित्वरूपोऽधिकारः। न तु स कर्त्तृत्वपूर्वकः। कर्मभावविरोधात्। अत एव न मुख्यः। यो हि कर्त्ता सन् फलभाक् स एव मुख्योऽधिकारी। न च साक्षात्कर्तृत्वे कर्मभावेन विरोधः प्रयोजककर्तृत्वे तु कर्मभूतस्याग्निपावनादाविव संभवत्येवेति वाच्यम्। अखिलव्यापारघटिते हि व्यंशभावनात्मके प्रयोगे कामिनः कर्त्तृत्वेन नियोगे सति केषुचिदर्थादेव परिक्रयाम्नानवलाच्चान्यप्रवेशे सति कामिनस्तद्द्वारकं केषुचित्प्रयोजककर्त्तृत्वमाश्रितम्। न त्विह तथाध्ययनविधिनोपनयनविशिष्टेऽध्ययनेऽध्येतुर्नियोगो येनोपनयने तस्य साक्षात्कर्तृत्वासंभवात्प्रयुक्त्या तदाश्रीयेत। आधानाधिकरणे उपनयनस्याप्याधानवत्स्वविधिप्रयुक्तत्वव्यवस्थापनात्। पर्यवसिते तूपनयनविधौ तस्य क्त्वाश्रु

त्या प्रकरणाद्वाध्ययनाङ्गत्वमपीत्येतावानाधानाद्विशेषः । नियमविधित्वमप्युपनयनविधेरध्ययनाधानविधिवत्फलत एव न तु वाक्यार्थतः। अध्ययनविनियुक्तब्राह्मणाद्युद्देशेन यागविनियुक्तव्रीह्याद्युद्देशेनेवावघातादेरविधानात्। उपनयनविधिपूर्वकत्वादध्ययने ब्राह्मणादिविनियोगस्य।

यत्तु क्वचिदुपनेयस्य प्रयोजकव्यापारश्रवणं तदपि न तत्परमेव। अर्थप्राप्तत्वात्। पित्रादयो हि पुत्रादिसंस्काराकरणस्योपपातकत्वात्तत्प्रयुक्तानर्थपरिहराय पुत्रादिसंस्कारेषु स्वत एव प्रवर्त्तन्ते। तदलाभेऽन्यस्य कस्यचित्प्रवर्त्तनं संस्कार्येण प्रबुद्धेन। तद्धितकारिणा वा स्वतोऽयोग्येन केनचिदर्थप्राप्तमेव। किन्तु प्रयोज्यव्यापाररूपोपनयनपरमेव याजयेदितिवत्।

अत एव यास्यमपि—"गर्भाष्टमेऽब्दे ब्राह्मणमुपनाययेत"इत्याद्युपनेयातिरिक्तस्यापि प्रवर्त्तकत्वस्मरणं तथैव। इदमेवाभिप्रेत्य मिताक्षरायां याज्ञवल्क्यवचनगतमुपनायनपदं स्वार्थाण्णन्ततया व्याख्यातं न तु णिजन्ततया। यदपि क्वचिदुपनेयेनोपनेत्रे दक्षिणादानश्रवणं तदपि दृष्टे संभवत्यदृष्टकल्पनानवकाशात्तदानत्यर्थं भवति आद्भ्यो दक्षिणादानवत्। न तु परिक्रयवदुपनयनने कर्तृत्वनिर्वाहकं माणवकस्य। तस्यैवाश्रवणादित्युक्तम्। तस्माद्ध्यनाङ्गत्वात्संभवदपि नियोज्यत्वमुपनयनेऽपि तावत्संस्कार्यस्य नास्ति। संस्कारान्तरेषु त्वसंभावितमेवेति संस्कर्तैव सर्वत्र नियोज्यः कर्तृत्वेन। सोऽपि च नात्यन्तमनधिकारी। "स्वाध्यायाग्निसुतत्यागः, अप्रयच्छन् समाप्नोति भ्रूणहत्यामृतावृतौ" इत्यादिषु पुत्रदुहित्रादिसंस्काराकरणे दोषस्मरणात्।

तेन तदङ्गनान्दीश्राद्धविधावपि स एव कर्त्ता। कर्तुश्च प्राधान्यं वाक्यार्थे कर्मकारकादपि। शाब्दिकानां प्रत्ययार्थत्वात्। नैयायिकानामाक्षेप्यस्यापि विशेष्यत्वात्। मीमांसकैरपि भावनायाः

कारकाणि प्रति (१) क्रियात्वाद्विशेष्यत्वरूपे साध्यस्य च कर्मकारकस्योद्देश्यत्वरूपे प्राधान्ये सत्यप्यौत्सर्गिकाख्यातोपात्तसम्बन्धसिद्ध्यर्थमाख्यातोक्तप्रधानव्यापारसमवायित्वेन प्राधान्यस्यावश्यवाच्यत्वात्। अतश्च यथाऽवाच्योऽपि कर्तृव्यापाररूपया प्रधानभूतया भावनयाऽव्यभिचाराद्विशेषरूपेण कारकान्तरवलक्षण्येनोपस्थापितः कर्तैव संख्यया सम्बध्यते न कारकान्तराणि तथा पित्रादिशब्दार्थप्रतिसम्बन्धित्वेनापि तस्यैव सम्बन्धो युक्तो नान्दीश्राद्धविधौ न तु संस्कार्यस्येति प्राप्ता एव पितुः पित्रादयस्तत्कर्तृके श्राद्धे।

यदा तस्यासंनिधानं तदाप्यवश्यकर्त्तव्यं तदपत्यसंस्कारं तत्प्रतिनिधितया यः करोति सोऽपि प्रतिनिधित्वादेव तदीयेभ्य एव पित्रादिभ्यो ददाति। यदा पितुः स्वरूपेणैवासत्त्वं तदा यः पितामहभ्रात्रादिः क्रमलब्धाधिकारस्तदपत्यसंस्कारकर्त्ता तस्य तदङ्गश्राद्धे पूर्वन्यायेन स्वपित्रादीनां देवतात्वप्रसक्तौ तेषां "तस्याभावे तु तत्क्रमात्" इति संस्कार्यपित्रादयस्तत्र तथा विधीयन्ते। तत्क्रमादिति तच्छब्देन संस्कार्यपिता परामृश्यते तस्येतिवत्। संस्कार्यपितृक्रममात्रमारभ्य तेषां पित्रादीनां दद्यादित्यर्थः। उपलक्षणं चैतन्मातृमातामहगणस्यापि।

न च "तस्याभावे तु" इत्यत्रापि स्वपितृभ्य इत्यस्यैवानुषङ्गः। तेषामित्यनेन नैराकाङ्क्ष्यात् तुशब्दानाञ्जस्याच्च। अपिना हि तदा

(१) अयमत्राभिसन्धिः—"सर्वाणि कारकाणि क्रियायामन्वयन्ति" इति मीमांसकानां समयः। तथा च भावनायाः क्रियात्वात्कारकाणि प्रति विशेष्यत्वरूपं प्राधान्यं कर्मकारकस्य चोद्देश्यत्वरूपं प्राधान्यमिति कर्तुः प्राधान्यं यद्यपि नास्ति। तथाप्यख्यातेनावाच्येऽपि कर्त्तरि आख्यातार्थसंख्याया यथान्वयस्तथैव नान्दीश्राद्धविधावपि संस्कर्तृपदानुपस्थितोऽपि स एव कर्ता भवितुं युक्तः।

भाव्यम्। तेषामित्यनेन च केवलाः पितरः परामृश्यन्ते न तु स्वपदार्थविशिष्टाः। तत्क्रमादित्येतद्विरोधात्। न च तत्क्रमादित्यस्य संस्कार्यपितृप्रत्यासत्तिक्रमादित्यर्थः। तत्पदे लक्षणापत्तेर्वैयर्थ्यप्रसङ्गाच्च। अधिकारिक्रमस्य वचनान्तरैरेव सिद्धत्वात्। किंच यदा सर्वोऽपि संस्कर्त्ता स्वपितृभ्य एव दद्यात्तदा पिता स्वपितृभ्य इत्यविशेषकमेव प्रसज्येनेति। तेन संस्कार्यपित्रादीनामपि सपिण्डीकरणं तत्संस्कारोपस्थितौ तदङ्गश्राद्धार्थमपकृष्य कर्त्तव्यं तत्संस्काराधिकारिणा। अत एव—

"भ्राता वा भ्रातृपुत्रो वा सपिण्डः शिष्य एव वा।
सहपिण्डक्रियां कृत्वा कुर्यादभ्युदयं ततः" ॥

इति लघुहारीतवचनमपि मृतस्य भ्रात्रादयस्तत्सपिण्डनं कृत्वैव तदपत्यसंस्काररूपमावश्यकमभ्युदयं कुर्युरिति व्याख्येयम्। व्याख्यातं च तथा शूलपाण्यादिभिः। न तु स्वापत्यसंस्कारादिरूपमभ्युदयमिति। "महागुरौ प्रेतभूते वृद्धिकर्म कथं भवेत्" इत्याकाङ्क्षायामनेनापकर्षविधानात्।

न च भ्रात्रादीनां भ्रात्रादिर्महागुरुः। भवति तु स्वापत्यस्य। दृष्टार्थता चैवं वचनस्य भवति। भ्रात्रादयश्च तादृशा एव ये संनिहिताधिकार्यन्तराभावान्मृतस्य सपिण्डनाधिकारिणस्तदपत्यसंस्काराधिकारिणश्च क्त्वाप्रत्ययात्। पुत्रस्तु भ्रातृभगिनीसंस्कारं स्वापत्यसंस्कारं वा पित्रादीनां सपिण्डं कृत्वैव कुर्यादिति वचनान्तरसिद्धमेवेत्यत्र तदग्रहणम्।

न च "पितरौ तु मृतौ यस्य देहस्तस्याशुचिर्भवेत्।
न दैवं नापि वा पित्र्यं यावत्पूर्णो न वत्सरः" ॥

इति देवीपुराणवचनान्मातापितृमृतिसंवत्सरे तदपत्यानां तत्पुत्रस्य वा स्वापत्यानां कथं संस्कारा भवन्त्विति वाच्यम्। अशुचित्वाभिधानस्यानावश्यककर्मविषयत्वात्। अपकर्षस्य चावश्यक-

वृद्धिविषयत्वात् । अत एव 'आधानाद्युपसंप्राप्तौ" इत्युक्तम् । अत एव च लघुहारीतवचनशेषोऽपि । "तथैव काम्यं यत्कर्म वत्सरात्प्रथमादृते" इति काम्यमनावश्यकमपि कर्म वत्सरात्प्रथमादृते तदुत्तरं सपिण्डनं कृत्वैव कुर्वीत न तु प्रथमवर्षे सपिण्डीकरणमपकृष्य । अपकर्षनिमित्तत्वं काम्यस्य नास्तीत्यर्थः । कृते त्वावश्यकवृद्ध्यर्थमपकर्षे पश्चात्तदपि भवतु इति शूलपाणिः।

अन्ये तु काम्यमनावश्यकं कर्मापि सपिण्डीकरणं कृत्वैव कुर्वीत, प्रथमवत्सरे तु कृतेऽपि केनचिन्निमित्तेनार्वाक् सपिण्डने न कुर्वीत किन्तु तदुत्तरमेवेति व्याचक्षते । तेषामप्यभ्युदये काम्ये च श्राद्धाङ्गत्वरूपविशेषणदानाच्छ्राद्धनिमित्त एवायमपकर्षः तथा च प्रमीतश्राद्धदैवत्यं श्राद्धं यत्राङ्गं तादृश एवाभ्युदयः काम्यं चेति संमतमेव। यस्य कस्यापि सपिण्डस्य सपिण्डनाभावे येन केनापि तत्सपिण्डेन तदसम्बद्धश्राद्धाङ्गकमपि स्वपुत्रोत्सवादि न क्रियते तदुपस्थितौ चानधिकारिणापि तदाकृष्य क्रियत इति यत्केषांचिदाचरणं दृश्यते तत्र मूलं न विद्मः। अधिकारिणा तु प्रमीतदैवत्यश्राद्धाङ्गकावश्यकाभ्युदयोपस्थितौ तत्पूर्वादिदिनेष्ववशिष्टषोडशश्राद्धपूर्वकं सपिण्डीकरणमपकृष्य कर्त्तव्यमेवेति ज्येष्ठासंनिधौ कनिष्ठेनापि कर्त्तव्यम्। सपिण्डीकरणान्तेषु हि श्राद्धेषु कर्तृता यद्यपि ज्येष्ठस्यैव। फलस्वामित्वरूपस्त्वधिकारः सर्वेषामेवास्ति।

"सर्वैरनुमतिं कृत्वा ज्येष्ठेनैव तु यत्कृतम् ।
द्रव्येण चाविभक्तेन सर्वैरेव कृतं भवेत्" ॥

इति वचनात् कर्तृत्वांशे च गुणभूते प्रतिनिधेर्न्याय्यत्वात् ।

एवं सति यद्वाचस्पत्यादिभिरुक्तम्—"ज्येष्ठेऽसंनिहिते कनिष्ठेन स्वपुत्रादिसंस्कारोपस्थितौ पितरि मृतेऽपि पितामहादिदैवत्यं श्राद्धं कर्त्तव्यम् ।

"ब्राह्मणादिहते ताते पतिते सङ्गवर्जिते ।
व्युत्क्रमाच्च मृते देयं येभ्य एव ददात्यसौ" ॥

इत्यस्य सपिण्डनोत्तरक्रियानर्हपितृपरत्वात् । "स्वपितृभ्यः पिता दद्यात्" इत्यस्यापि तद्योग्यतत्परत्वादिति ।

तद्धेयम् । इदं च सपिण्डीकरणं यदा येन केनापि निमित्तेन वत्सरान्तादर्वाक् क्रियते तदा सर्वाणि षोडशश्राद्धानि तन्मध्यगतानि स्वकालकृतावशिष्टानि वा ततः पूर्वमपकृष्य कर्त्तव्यम् । तदन्तापकर्षन्यायात् । यद्यपि च षोड़शश्राद्धानां सपिण्डीकरणस्य च नैकफलत्वम् । पूर्वेषां प्रेतत्वनिवर्त्तकत्वात् । सपिण्डनस्य च पितृत्वप्राप्त्यर्थत्वात् । तथा च देवलः—

"एकादशादिभिः श्राद्धैर्मृतस्याप्यायनं भवेत् ।
सम्यक् संवत्सरे पूर्णे पितॄणां स्थानमृच्छति" ॥ इति ।

आप्यायनं तुष्टिः प्रेतत्वपरिहारः । संवत्सरे पूर्णे क्रियमाणेन सपिण्डीकरणेनेति शेषः । यमोऽपि—

"यस्यैतानि न दीयन्ते प्रेतश्राद्धानि षोड़श ।
पिशाचत्वं ध्रुवं तस्य दत्तैः श्राद्धशतैरपि" ॥ इति ।

सपिण्डीकरणानन्तरं हारीतः—

"ततः प्रभृति वै प्रेतः पितृसामान्यमाप्नुयात् ।
विदन्ते पितृलोकं च ततः श्राद्धं प्रवर्त्तते" ॥ इति ।

विष्णुपुराणेऽपि—"प्रेते पितृत्वमापन्ने सपिण्डीकरणादनु" इति । अतएव न प्रयोगविधिरप्येको येन क्रमः कल्प्येत, तथापि "दर्शपूर्णमासाभ्यामिष्ट्वा सोमेन यजेत" इतिवद्वाचनिक एव षोडशानां सपिण्डनस्य च क्रमः । तथा च गोभिलः—"श्राद्धानि षोडशादत्त्वा नैव कुर्यात्सपिण्डनम्" इति । वृद्धवशिष्ठोऽपि—

"श्राद्धानि षोडशादत्त्वा नैव कुर्यात्सपिण्डनम् ।
तद्धानौ तु कृते प्रेतः पितृत्वं न प्रपद्यते" ॥ इति ।

तद्धानौ षोडशश्राद्धानि परित्यज्य कृतेऽपि सपिण्डीकरणे इति शेषः । शातातपोऽपि—"सपिण्डीकरणान्ता तु ज्ञेया प्रेतक्रिया बुधैः" इति । एवं क्लृप्ते क्रमे तदन्तन्यायादपकर्षः ।

वस्तुतस्त्वेतानि वचनान्येवापकर्षार्थानि । औत्सर्गिकवर्षान्तसपिण्डीकरणानुष्ठाने तस्य षोडशश्राद्धोत्तरत्वस्य कालक्रमादेव सिद्धत्वात् । तेषां चापकृष्यानुष्ठानं संभवे आशौचोत्तरं द्वादशस्वहस्सु । प्रागुदाहृतविष्णुवचनात् । आशौचान्त्यदिनोत्तरदिने वा "एकाहे द्वादशाथवा" इति वचनात् । द्वादशानामपि मासिकानां ह्येकाहेऽनुष्ठानमेकादशाहरूप एव तस्मिन् संभवति, उत्तरत्राद्यस्यैकादशे कृतत्वात्तन्न्यूनानामेवानुष्ठानं स्यात् । तदुत्तरदिने वा "मासिकानि स्वकीये तु दिवसे द्वादशेऽपि वा" इति वचनात् । यदा तु तदुत्तरं वृद्ध्यादिवशादपकर्षप्रसक्तिस्तदा यदि मृताहो लभ्यते तदा तत्रैवावशिष्टान्यनुष्ठातव्यानि । एकस्यापि तावत्स्वकालानुग्रहलाभादितरेषामपि मृताहसामान्यकालत्वस्यानुग्रहात् । संभवत इति न्यायात् । मृताहालाभे तु सपिण्डनदिन एव । तन्निमित्तस्यापकर्षस्य तद्दिन एव कर्त्तुमुचितत्वात् । अशक्त्यादिनिमित्तसपिण्डनापकर्षार्थमपकृष्टेष्वेषु कृते सपिण्डीकरणे यावन्त्यपकृष्य कृतानि तानि स्वकाले आगते आगते पुनः कर्तव्यानि ।

"दीर्घकालापदं मत्वा पक्षहोमे हुते सति ।
तत्रान्तराले यद्यापत्कदाचिदपगच्छति ॥
काले काले पुनर्होमान् जुहुयात्प्राग्घुतानपि"
इति वचनात्पक्षहोमादाविव । तथा चाङ्गिराः—
"यस्य संवत्सरादर्वाक् सपिण्डीकरणं कृतम् ।
मासिकं चोदकुम्भं च देयं तस्यापि वत्सरम्" ॥ इति ।

अत्र मासिकग्रहणमूनत्रयत्रैपक्षिकयोरुपलक्षणम् ।
"अर्वाक् संवत्सराद्यस्य सपिण्डीकरणं कृतम् ।
षोडशानां द्विरावृत्तिं कुर्यादित्याह गौतमः" ॥

इति गालवत्रचनात् । अत्र षोडशग्रहणेऽपि प्राप्तकालानामेव पुनरावृत्तिर्न स्वकालकृतानाम् ।

"अर्वागब्दाद्यत्र यत्र सपिण्डीकरणं कृतम् ।
तदूर्ध्वं मासिकानां स्याद्यथाकालमनुष्ठितिः" ॥
इति कार्ष्णाजिनिवचनात् ।

यद्यपीदं वचनमङ्गिरोवचनं च केवलं सपिण्डीकरणं द्वादशाहादौ कृत्वा मासिकानि स्वकाल एव कर्तव्यानि न त्वपकृष्येत्येतदर्थकतया भासते । अत एव लघुहारीतोऽपि—

"प्रेतसंस्कारकर्माणि प्रेतश्राद्धानि षोडश ।
यथाकालं तु कार्याणि नान्यथा मुच्यते ततः" ॥ इति ।

तथापि कालविधानसार्थ्यादेवैतस्यार्थस्य सिद्धत्वादपकर्षनिरासार्थमेवेदं वचनम् । मिताक्षराकारोऽप्यमुमेव पक्षं मुख्यं मन्यते, तदपकर्षपक्षं तु प्राग्वचनोक्तमनुकल्पं न तु द्विरावृत्तिम् ।

"सपिण्डीकरणादर्वाक् कुर्वञ्छ्राद्धानि षोडश ।
एकोद्दिष्टविधानेन कुर्यात्सर्वाणि तानि तु ॥
सपिण्डीकरणादूर्ध्वं यदा कुर्यात्तदा पुनः ।
प्रत्यब्दं यो यथा कुर्यात्तथा कुर्यात्स तान्यपि" ॥

इति वचने यदातदाशब्दश्रवणादपि तथावगम्यते । स्वकालकरणपक्षे च प्रेतत्वनिवृत्तिपूर्वकपितृत्वप्राप्तिः सर्वान्त एव न तु सपिण्डनानन्तरमेव । शूद्रेण कृतेऽपि द्वादशाहे सपिण्डने त्रिंशत्तमदिनकर्त्तव्यदशमपिण्डदानानन्तरमिव । स्पष्टश्चायमर्थ उक्त आग्नेयपुराणे—

"अर्वाक्संवत्सराद्यस्य सपिण्डीकरणं भवेत् ।
प्रेतत्वमिह तस्यापि ज्ञेयं संवत्सरं नृप:" । इति ।

तथापि येन संभाव्यमानेनाशक्त्यादिना निमित्तेन सपिण्डन-स्यापकर्षस्तेनैव निमित्तेन षोडशश्राद्धानामप्यपकर्षस्तावत्पुरुषस्य प्रसक्तः । प्रसक्तेऽपि तस्मिञ्छास्त्रीयकालं विना कृतस्य शास्त्रीयकर्मणः फलाजनकत्वात्सपिण्डनस्य तु यत्किञ्चिच्छास्त्रीयकाललाभादनुष्ठानेऽपि तेषां कालाभावादननुष्ठाने प्राप्ते—

"श्राद्धानि षोडशादत्त्वा नैव कुर्यात्सपिण्डनाम् ।
श्राद्धानि षोडशापाद्य विदधीत सपिण्डनाम्" ॥

इति वचनेनापकर्षविधिद्वारा कालेऽपि विहिते किमिति तेषामननुष्ठानम् । एवं सत्यपकर्षविधानस्य पाक्षिकता क्रियेत यथाहत्यानपकर्ष-विधानं स्यात् । प्रत्युत निषेध एव तस्य । कार्ष्णाजिनिवचनमङ्गिरो-वचनं च गालववचनैकवाक्यतया पुनरनुष्ठानविधायकतयोपपन्नं तद्देवैतस्योपोद्बलकमेव । लघुहारीतवचनं त्वशक्त्यारोपेणानावश्यक-वृद्ध्यर्थं वापकर्षो न कार्य इत्येवंपरं स्वहन्स्यान्तातिरिक्तानां सपिण्डीकरणकालानामनुकल्पत्वं द्योतयति । आग्नेयवचनमप्येवं-विधापकर्षविषयमेव । अशक्तिनिमित्तापकर्षविषयमिदं वृद्धिनिमित्ते त्वपकर्षेऽनन्तरमेव प्रेतत्वपरिहारस्तदर्थं तत्करणादिति तु शूलपाणिः । अत एवापकृष्य कृतानां स्वकाले पुनरनुष्ठीयमानानामप्यपकर्षो वृद्ध्यु-पस्थितौ स्मर्यते शाट्यायनिना—

"सपिण्डीकरणादर्वागपकृष्य कृतान्यपि ।
पुनरप्यपकृष्यन्ते वृद्ध्युत्तरनिषेधनात्" ॥ इति ।
निषेधश्च कात्यायनेन स्मर्यते—

"निर्वर्त्य वृद्धितन्त्रं तु मासिकानि न तन्त्रयेत् ।
अयातयामं मरणं न सन्त्पुनरस्य तु" इति ॥

वृद्धिश्राद्धोत्तरं यदि मासिकानि न कुर्यात्तदास्य मृतस्य मरणं पुनरयातयामं नूतनं न भवेत्। अन्यथा स्यादिति निन्दा। यदातदाशब्दावपि कालवचनौ न यदितदर्थकौ। येन सपिण्डनात्पूर्वं परस्ताद्वा सकृदेवानुष्ठानद्योतकौ स्याताम्।

यदपि "सपिण्डीकरणादूर्ध्वं न दद्यात्प्रतिमासिकम्" इति परमतमुपन्यस्य "एकोद्दिष्टविधानेन दद्यादित्याह शौनकः" इति छन्दोगपरिशिष्टं तदपि पुनरनुष्ठानविधायकमेव। एकोद्दिष्टपदं च वार्षिकलक्षणार्थमिति व्याख्येयम्। परमतेनोक्तश्च पुनरनुष्ठाननिषेधो येषामधिकारिणामुत्तरक्रिया नावश्यकर्त्तव्यास्तद्विषयः। तस्माद्वृद्धिभिन्ननिमित्तके सपिण्डनापकर्षे षोडशश्राद्धानि तदर्थमपकृष्य कृतान्यपि पुनः स्वस्वकाले कर्त्तव्यान्येव। सोदकुम्भान्नदानं तु सपिण्डनोत्तरमपि स्वकाल एव कर्त्तव्यम्। अपकर्षवचनाभावात्।

"अर्वाक् सपिण्डीकरणं यस्य संवत्सराद्भवेत्।
तस्याप्यन्नं सोदकुम्भं दद्यात्संवत्सरं द्विजः" ॥

इति याज्ञवल्क्यवचनाच्च। प्रेतशब्दस्तु न भवति तदर्थाभावात्। वृद्धिनिमित्ते तु सपिण्डनापकर्षे तदर्थमपकृष्य कृतानि स्वस्वकाले पुनर्न कर्त्तव्यानि। निषेधात्। यदा पितामहे प्रपितामहे वाऽकृतसपिण्डीकरणे पिता म्रियते तदा तयोः सपिण्डनेन पितृभावे तत्पुत्रादिना संपादिते तदभावे स्वयं वा तं संपाद्य पितुः सपिण्डीकरणं कर्त्तव्यम्। यदि तथा क्रियमाणे वर्षान्तपर्यन्तकालातिक्रमो न भवति। संभाव्यमानेऽपि कालातिक्रमेऽप्राप्तपितृभावस्य पितामहादेः पार्वणदेवतात्वायोग्यत्वेन प्रधानस्यैव कर्त्तुमशक्यत्वात्। अतिक्रान्तेऽपि काले "प्रोषितानस्तिते पुत्रः कालादपि चिरादपि" इतिवत्तथैव कर्त्तव्यमिति यद्यपि न्यायेन प्राप्नोति तथापि वचनादकृतसपिण्डनाभ्यामपि ताभ्यां पितुः सपिण्डनमन्तिमकाले कार्यम्। तथा च कात्यायनः—

"असंस्कार्यौ न संस्कार्यौ पूर्वौ पौत्रप्रपौत्रकैः ।
पितरं तत्र संस्कुर्यादिति कात्यायनोऽब्रवीत् ॥
पापिष्ठमपि शुद्धेन शुद्धं पापकृतापि वा ।
पितामहेन पितरं संस्कुर्यादिति निश्चयः ।" इति ॥

असंस्कृतावकृतसपिण्डनौ : पूर्वौ पितामहप्रपितामहौ । पापिष्ठमकृतसपिण्डीकरणं पितरं शुद्धेन कृतसपिण्डीकरणेन पापकृता अकृतसपिण्डनेन वा पितामहेन सह शुद्धं सम्यक् कुर्यादिति शास्त्रीयो निश्चय इत्यर्थः ।

एवंकृते दर्शश्राद्धमपि तादृशाभ्यामपि ताभ्यां सह कर्त्तव्यं न तु तदर्थमपि तयोः सपिण्डनं प्रतीक्षणीयमित्यपि तेनैवोक्तम् "—पितुः सपिण्डतां कृत्वा कुर्यान्मासानुमासिकम्" इति । एवं च सपिण्डीकृताभ्यां पितामहप्रपितामहाभ्यां पितुः सपिण्डने सुतरां तदुत्तरं पार्वणकर्त्तव्यता सिद्धा निरग्निकस्यापि । साग्निकस्य तु सपिण्डीकरणमपि तदर्थं दर्शादर्वाग्भवतीत्युक्तम् । तत्सद्भावे चान्यान्यप्यापरपक्षिकादीनि भवन्त्येव । बाधकाभावात् ।

"दर्शश्राद्धं गयाश्राद्धं श्राद्धं चापरपक्षिकम्
प्रथमेऽब्दे न कुर्वीत कृतेऽपि तु सपिण्डने" ॥
"दर्शश्राद्धं गयाश्राद्धं श्राद्धं चापरपक्षिकम् ।
प्रथमेऽब्देऽपि कुर्वीत यदि स्याद्भक्तिमान् सुतः" ॥

इति वचनद्वयं च केचित्पठन्ति । यत्र सहगमनेनान्यथा वा स्त्रियाः पत्या सह सपिण्डीकरणं तत्र भर्त्तर्यकृतसपिण्डनेऽपि प्रेतीभूतेनैव तेन सह तस्याः सपिण्डनं "पापिष्ठमपि शुद्धेन" इत्यनेन तुल्यन्यायत्वात्सिद्धमिति शूलपाणिः ।

अत एव केचिद्दाक्षिणात्यशिष्टाः सहगमने पत्युः सपिण्डनदिने तेन सहैकप्रयोगं तत्पत्न्या अपि सपिण्डीकरणमखण्डं पत्नीपिण्डं

प्रेतीभूतस्यैव भर्तुः पिण्डे संयोज्य तादृशं भर्तृपिण्डं त्रेधा कृत्वा तत्पित्रादिपिण्डत्रये तस्य संयोजनमिति प्रकारेण कुर्वन्ति, एकोद्दिष्ट-द्वयवैश्वदेवपार्वणार्थपात्रब्राह्मणोपादानेन ।

परमार्थतस्तु पत्युः सपिण्डनं तावन्मात्रोपयोगिपात्रोपादानेन कृत्वा तद्दिन एव कालान्तरे वा भिन्नप्रयोगं स्त्रियाः सपिण्डनं कर्त्तव्य-मित्युचितम् । आहृत्यैकप्रयोगत्वस्य प्रेतीभूतभर्तृपिण्डसंयोजनस्य च विध्यदर्शनात् । तत्रापि पत्नीपिण्डसंयोजनं परमेकेनैव भर्तृपिण्डेन भवतु "पत्या चैकेन कर्त्तव्यं सपिण्डीकरणं स्त्रियाः" इति वचनात् । सर्वत्र च पिण्डसंयोजनं पिण्डदानप्रयोगं पिण्डोत्थापनपर्यन्तं कृत्वा कर्त्तव्यम् । "निरूप्य चतुरः पिण्डान्, दत्त्वा पिण्डान्" इति पिण्ड-दानभावनोत्तरत्वेन विधानात् ।

विष्णुना तु विसर्जनोत्तरमुक्तम्—"उच्छिष्टसंनिधौ पिण्ड-त्रयं कुर्यात् । देवपूर्वान् ब्राह्मणानाचान्तान् दत्तदक्षिणांश्चानुव्रज्य विसर्जयेत् । ततः प्रेतपिण्डमर्घपात्रोदकवत्पिण्डत्रये निदध्यात्" इति ।

इत्याद्यस्तु प्रासङ्गिकम् ।

## अथ प्रेतक्रियानिषिद्धकालाः ।

अथ त्रिपक्षादिक्रियमाणसपिण्डनोपयोगित्वात्प्रेतक्रियासु निषि-द्धकाला उच्यन्ते । तत्र गार्ग्यः—

"प्रत्यक्षशवसंस्कारे दिनं नैव विशोधयेत् ।
आशौचमध्ये क्रियते पुनः संस्कारकर्म चेत् ।
शोधनीयं दिनं तत्र यथासंभवमेव तु ।
आशौचविनिवृत्तौ च पुनः संस्क्रियते मृतः ॥

संशोध्यैव दिनं प्राह्यमूर्ध्वं संवत्सराद्यदि ।
प्रेतकार्याणि कुर्वीत श्रेष्ठं तत्रोत्तरायणम् ॥
कृष्णपक्षश्च तत्रापि वर्जयेच्च दिनक्षयम्" इति ।
प्रेतश्राद्धं प्रकृत्य गार्गिः —
"नन्दायां भार्गवदिने चतुर्दश्यां त्रिपुष्करे ।
तत्र श्राद्धं न कुर्वीत गृही पुत्रधनक्षयात् ॥" इति ।
त्रिपुष्करयोगो रत्नमालायाम्—
"विषमचरणं धिष्ण्यं भद्रातिथिर्यदि जायते
रविगुरुशनिक्ष्मापुत्राणां कथंचन वासरे ।
मुनिभिरुदितः सोऽयं योगस्त्रिपुष्करसंज्ञित —
स्त्रिगुणफलदो वृद्धौ नष्टे हृते च मृतेऽथवा" ॥ इति ।
प्रेतक्रियामेव प्रकृत्य भार्गवेऽपि -
"नक्षत्रे तु न कुर्वीत यस्मिन् जातो भवेन्नरः ।
न प्रौष्ठपदयोः कार्यं तथाग्नेये च भार्गव ॥
दारुणेषु च सर्वेषु प्रत्यरौ च विवर्जयेत् ।
ज्योतिषे यानि चोक्तानि तानि यत्नेन वर्जयेत् ॥" इति ।

उक्तानि वर्ज्यत्वेनेति शेषः । प्रौष्ठपदे पूर्वाभाद्रपदोत्तराभाद्रपदे । आग्नेयं कृत्तिका । दारुणानि "दारुणं चौरगं रौद्रमैन्द्रं नैरृतमेव च" इत्युक्तान्याश्लेषार्द्राज्येष्ठामूलानि । प्रत्यरिर्यजमानपञ्चमतारा । ज्योतिः पराशरः —

"साधारणे ध्रुवोग्रे मैत्रे नो शस्यते मनुष्याणाम् ।
प्रेतक्रिया कर्थाञ्चत्त्रिपुष्करे यमलधिष्ण्ये च" इति ।

साधारणे कृत्तिकाविशाखे । "ध्रुवाणि उत्तरात्रयं रोहिणी च । उग्राणि पूर्वात्रयं भरणी मघा च । मैत्राणि मृगचित्रानुराधारेवत्यः । यमलधिष्ण्यं धनिष्ठा ।

कश्यपः—

"भरण्यार्द्रा तथाश्लेषा मूलं त्रिचरणानि च।

प्रेतकृत्येतिदुष्टानि धनिष्ठाद्यं च पञ्चकम्" इति।

वराहपुराणे—

" चतुर्थाष्टमगे चन्द्रे द्वादशे च विवर्जयेत्।

प्रेतकृत्यं व्यतीपाते वैधृतौ परिघे तथा॥

करणे विष्टिसंज्ञे च शनैश्चरदिनेऽपि च।

त्रयोदश्यां विशेषेण जन्मताराश्रये तथा"॥ इति॥

जन्मतारात्रयमाद्यं दशममेकोनविंशं च। तथा—

"नन्दायां भार्गवदिने त्रयोदश्यां त्रिजन्मनि।

अत्र श्राद्धं न कुर्वीत पुत्रदारधनक्षयात्"

इत्यादयश्च सावकाशश्राद्धमात्रविषया निषेधाः प्रेतश्राद्धेष्वपि तादृशेषु प्रवर्त्तन्ते। त्रिजन्मनीति जन्मतिथिनक्षत्रतारासु।

"त्रयोदशीं जन्मदिनं च नन्दां जन्मर्क्षतारां सितवासरं च।

त्यक्त्वा हरिज्येन्दुकरान्त्यमैत्रध्रुवेषु च श्राद्धविधानमिष्टम्"॥

इति दीपिकावचनैकवाक्यत्वात्। स्वकालेऽनुष्ठीयमानेषु निरवकाशेषु तु निषेधानामप्रवृत्तिर्गोभिलेन स्पष्टीकृता।

" नन्दायां शुक्रवारे च चतुर्दश्यां त्रिजन्मसु।

एकादशाहप्रभृति नैकोद्दिष्टं निषिध्यते ,, इति॥

युगाद्यादिषु प्रेतकर्मणि सर्वनिषेधापवादः स्मृत्यन्तरे—

"युगमन्वादिसंक्रान्तिदर्शे प्रेतक्रिया यदि।

दैवादापतिता तत्र न नक्षत्रादिशोधनम्"॥ इति।

इति प्रदर्शिताः श्राद्धकालाः।

## अथ श्राद्धवेलानिर्णयः।

एवं प्रदर्शितेषु श्राद्धकालेषु तिथिप्रयुक्तश्राद्धेषु खण्डा तत्तिथिर्निर्ण-

तव्या। तन्निर्णयश्च वेलापरपर्यायापराह्णाद्यहर्भागव्याप्त्यादिभिः कर्त्तव्यः। तदर्थं विधिनिषेधमुखेन श्राद्धवेला निरूप्यते। तत्र निषेधमुखेन तावन्मनुः—

"रात्रौ श्राद्धं न कुर्वीत राक्षसी कीर्त्तिता हि सा।
सन्ध्ययोरुभयोश्चैव सूर्ये चैवाचिरोदिते" ॥ इति,

" नातिसन्ध्यासमीपतः" इति च। अत्र सन्ध्याशब्देन—

" उदयात् प्राक्तनी सन्ध्या घटिकात्रयमिष्यते।
सायंसन्ध्या त्रिघटिका ह्यस्तादुपरि भास्वतः" ॥

इति परिभाषिता सन्ध्या न गृह्यते। किन्तु मुख्यैव खण्डरविमण्डलोपलम्भयोग्यकालरूपा। परिभाषितायाः रात्र्यन्तर्गन्ततया तन्निषेधेनैव निषेधसिद्धेः। स्कन्दपुराणे—

"उपसन्ध्यं न कुर्वीत पितृपूजां कथञ्चन।
स काल आसुरः प्रोक्तः श्राद्धं तत्र विवर्जयेत् ॥" इति।

मत्स्यपुराणे—

" सायाह्नस्त्रिमुहूर्त्तः स्याच्छ्राद्धं तत्र न कारयेत्।
राक्षसी नाम सा वेला गर्हिता सर्वकर्मसु ॥" इति।

बौधायनः—

"चतुर्थे प्रहरे प्राप्ते श्राद्धं यः कुरुते नरः।
आसुरं तद्भवेच्छ्राद्धं दाता च नरकं व्रजेत् ॥" इति।

हारीतः—

" दिवसस्याष्टमे भागे मन्दीभूते दिवाकरे।
आसुरं तद्भवेच्छ्राद्धं पितॄणां नोपतिष्ठते "इति ॥

एते च न निषेधाः। तथात्वे शास्त्रीयप्राप्त्यपेक्षत्वेन तस्याश्चात्यन्तबाधासंभवेन विकल्पापत्तेः।" नार्षेयं वृणीते, नानुयाजेषु" इत्यादीनामिव।

न च यथा 'दीक्षितो न ददाति न जुहोति न पचति " इति-निषेधोऽग्निहोत्रहोमादिशास्त्रीयपदार्थगोचरोऽपि न तद्विधिभिर्विकल्पते किन्तु विशेषविषयत्वेन बलवत्त्वात्सामान्यविषयांस्तान् दीक्षितातिरिक्तपरान् करोति तथैतेऽपि निषेधा एव सन्तः "अमावास्यायां श्राद्धं कुर्वीत" इत्यदिविधीन् रात्र्याद्यतिरिक्तपरान् कुर्वन्तीति वाच्यम् ।

वैषम्यात् । दानहोमादिनिषेधो हि पुरुषार्थतद्गोचरत्वात्कर्त्रधिकरणेन्यायेन पुरुषार्थतया प्राप्तोऽपि प्रकरणात् क्रत्वव्यभिचारिदीक्षितसम्बन्धाच्च स्त्र्युपायमांसभक्षादिपुरुषार्थमपि श्रितः । " प्रतिषेधः क्रतोरङ्गमिष्टः प्रकरणाश्रयात् " इति न्यायेन क्रत्वर्थः । पुरुषार्थदानादिविधिभिर्भिन्नविषयत्वाद्विकल्पानर्हस्तत्प्रसक्त्यभावात्तद्विध्यसंनिधानाच्च तच्छेषपर्युदासत्वानर्हो युक्तं यन्निषेध एव सन् सामान्यविषयान्विधीन्बाधित्वान्यविषयान् करोति ।

इह तु वाक्यात्प्रकरणाच्च द्वयेऽपि श्राद्धार्था विकल्पार्हा एवेति । " रात्रौ श्राद्धं न कुर्वीत " इत्यादीनां निषेधत्वे सामान्यविषयैरपि निषेधविध्यात्मलाभार्थमवश्यंभावितद्विषयत्वैर्विधिभिः समं प्रसज्यत एव विकल्पः । अत्यन्तबाधे हि तेषां परमार्थतो निषेधविषयभिन्नविषया एव तेऽभ्युपगन्तव्याः । तथा च प्राप्त्यभावान्निषेधानां विधित्वं न स्यान्न चानन्यशेषभूतानां संभवद्विधित्वानां "च नान्तरिक्षे न दिवि" इतिवदनुवादत्वं युक्तमिति पर्युदासा एते "नानुयाजेषु" इत्यादिवत् ।

यत्तु पर्युदासविचारावसरे " नानुयाजेषु " इत्यत्र सामान्यविध्येकवाक्यत्वार्थं पर्युदासलक्षणा न विकल्पभियेति सामान्यविशेषशास्त्रयोर्विकल्पो न दृश्यत इत्यतिदेशे पर्युदासासंभव इति च शूलपाण्यादिभिरुच्यते ।

तत्सर्वमाकराज्ञानप्रयुक्तम् । विकल्पभयादेव हि "नानुयाजेषु" इत्यत्र, अतिदिष्टविषये च 'नार्षेयं वृणीते" इत्यादौ पर्युदासलक्षणा

व्युत्पादिता तन्त्रे । सामान्यविषयेण च पशुचोदकेनाज्यभागप्रापकेण "न तौ पशौ करोति" इत्यस्य पर्युदासासंभवादावश्यकनिषेधत्वस्य विकल्पोऽगत्याङ्गीकृतः । "दीक्षितो न ददाति" इत्यादेश्च ज्योतिष्टोमप्रकरणाधीतस्य प्रदेशान्तरपठितैर्दानादिविधिभिरनेकवाक्यभूतस्यापि गुणविधिविधया तदुपकारिणः पर्युदासत्वं भाष्यकारेण, "उपात्र वपन्ति" इत्यनेन च वरुणप्रघासावान्तरप्रकरणपठितेनानेकवाक्यभूतस्य "न वैश्वदेव उत्तरवेदिमुपकिरन्ति न शुनासीरीये" इत्यस्य सर्वैस्तैरपि चाभ्युपगमनम् ।

एतेषां च पर्युदासत्वं षष्ठिनाड्यवच्छिन्नामावास्यादिविधिशेषतया रात्र्यादीतरामावास्यायामिनीति शूलपाणिप्रभृतयः ।

तदयुक्तम् । पर्युदासो हि नञ्सम्बद्धतदितरसमस्तसमुदायिघटितसमुदायविषयस्य सामान्यविधेस्तदितरसमुदायिमात्रसंकोचनेन शेषो भवति । न च रात्रिसन्ध्यादयस्तिथिरूपसमुदायघटकाः । (१) क्षणानामेवैकचन्द्रकलाप्रवेशनिर्गमरूपैकफलोपाध्यवच्छिन्नानामतन्त्रीकृतावान्तरसमुदायभावानां तद्घटकत्वात् । भवन्ति तु तेऽहोरात्ररूपसावनदिवसात्मकसमुदायघटकाः । तथैव व्यवहारात् । यथा हि यावता क्षणसमुदायेन रवेरेकमुदयाचलमारभ्यापरोदयाचलसंयोगो भवति तावान् समुदायः सावनदिवसत्वेन व्यवह्रियते, तथैव रवेरुदयाचलसंयोगमारभ्यास्ताचलसंयोगो यावता क्षणसमुदायेन भवति स समुदायः समुदायभूताहस्त्वेन, अस्ताचलसंयोगमारभ्योदयाचलसंयोगो यावता समुदायेन एतदवान्तरसमुदायस्तादृशरात्रित्वेन व्यवह्रियते । एवं सन्ध्याप्रातःसङ्गवादयोऽप्यहोरात्रसमुदायित्वेनैव व्यवह्रियन्ते । न तु तिथिसमुदायित्वेन । मध्याह्नापराह्णादिशब्दानां

---

(१) क्षणानामिति पदमादाय घटका इति पदं यावत्पाठो द्वि०पु० नास्ते ।

तु योगवशात्स्पष्टमेव सावनदिनभागवचनत्वम् । अत्रत्याहःशब्दस्य तद्वचनत्वान्मुहूर्तघटितत्वाच्च । मुहूर्त्ता हि सावनदिनस्यैव भागाः । "अह्नो मुहूर्त्ता विख्याता दश पञ्च च सर्वदा" इत्यादिनियमस्यान्यथानुपपत्तेः । तेन रात्रिसंध्यादिभिन्नेऽमावास्यादिभाग इतिपर्युदासासंभवाद्रात्रिसंध्यादिभिन्ने दिनभाग इति सावनदिनसंकोचेन तेषां पर्युदासत्वम् ।

ननु सावनदिनस्य विधेरदर्शनात्तत्संकोचने कस्य विधेः शेषा एते पर्युदासाः । अमावास्यादिकालविधय एव तद्विधय इत्यदोषः । यथा हि केवलस्यापि वसन्तादेर्निमित्तत्वश्रवणमजीवतोऽनुष्ठानासंभवाद्वसन्ताद्यवच्छिन्नजीवनपरं भवति तथा केवलस्यामावास्यादेरङ्गत्वश्रवणमप्यहोरात्रं विहाय कर्मकरणाशक्तेस्तद्वदहोरात्रपरमेव भवति । "अमावास्यावत्यहोरात्रे श्राद्धं कुर्यात्" इत्यादि । अत एव सर्वकर्मसु अद्येत्येवं सावनदिनस्याधिकरणत्वेन संकल्पवाक्ये उल्लेखः शिष्टानाम् । अद्यसोमार्कग्रहणसंक्रान्त्यादौ सुतीर्थक इति दानसंकल्पवाक्यम् । अद्य कृष्णाष्टमीं प्राप्येति च जन्माष्टमीव्रतसंकल्पवाक्यं पुराणेष्वपि । स्पष्टश्च

"विधिज्ञः श्रद्धयोपेतः सम्यक्पात्रनियोजकः ।
रात्रेरन्यत्र कुर्वाणः श्रेयः प्राप्नोत्यनुत्तमम्" ॥

इति व्याघ्रपादवचने तिथिविशेषानुपादानात्सावनदिनशेषतयैव रात्रिपर्युदासः । इदं च पर्युदासत्वमभ्युपगम्योक्तम् । वस्तुतस्तु "रात्रौ श्राद्धं न कुर्वीत" इत्यादयो निषेधा एव मुख्यवृत्त्या न तु लक्षणया पर्युदासाः । निषेधत्वेऽपि विकल्पप्रसक्त्यभावात् । वार्त्तिककृन्मते "दीक्षितो न ददाति,, इत्यादिवत् ।

नन्वुक्तं भिन्नविषयत्वात्तत्र न प्रसज्यत विकल्पः, इह तु समानविषयत्वात्प्रसज्येतैवेति । अत्र वदामि । तत्रापि विकल्पाप्रसक्ताविदमेव बीजं यद्यावज्जीवोपबद्धदानादिविधिप्रयुक्तामेव दीक्षिताव-

स्थायामपि दानादिप्रसक्तिमपेक्ष्य संभवदात्मलाभो निषेधो न तदवस्थायां विशेषतस्तत्प्राप्तिमपेक्षते येन तदर्थे तत्रापि सामान्यविधेः प्रवृत्तिमनुमन्यमानस्तदितरावस्थाविषयत्वकरणलक्षणबाधासंभवात्तेन सह विकल्पतेति दानादिकं पुरुषार्थं निषेधश्च क्रत्वर्थ इति निषेध्यनिषेधभिन्नविषयत्वोक्तिश्चैतदर्थमेव।

यदि हि दानादयोऽपि क्रत्वर्था एव निषेध्याः स्युः "नानुयाजेषु, नार्षेयं वृणीते" इत्यादिनामिवानुयाजादयः। ततस्तेषां तत्क्रत्वर्थता परमार्थतस्तद्विषयविधिं विना न संभवतीति तादृशो विधिस्तादृशस्य निषेधस्यापेक्षित एवेति। उत्सर्गश्चायं यत् क्रत्वर्थो निषेधः क्रत्वव्यभिचारिणं संभवत्क्रतूपयोगं वा पदार्थमवलम्बत इति। विकल्पप्रसङ्गादेवासंभवत्क्रत्वर्थदानादिविषयत्वस्य तु दानादिनिषेधस्य त्वभ्युपगमनमांसभक्षादिनिषेधस्येवाविरुद्धं क्रत्वर्थम्। एवं च सति यावज्जीवं दानहोमादीनि कुर्यात्तद्दीक्षितो नेतिवद्यदमावास्यादिमत्यहोरात्रे श्राद्धं कुर्यात्तद्रात्र्यादौ नेत्यमावास्यादिमदहोरात्रगोचरसामान्यविधिनैवापपन्नो रात्र्यादिनिषेधो न विशेषतस्तत्र तत्प्राप्तिकरं विधिमपेक्षत इति निषेधत्वेऽपि नात्र विकल्पसङ्गः। एतेन

"रात्रौ स्नानं न कुर्वीत तथा दानं च रात्रिषु।
पञ्चयज्ञविधानं तु न कुर्यान्मृत्युजन्मनोः"॥

इत्यादयोऽपि निषेधा व्याख्याताः। ननु भवन्त्वेते पर्युदासा निषेधा वोभयथापि प्राप्त्यपेक्षाः। प्राप्तिश्च सत्यपि सामान्यविधौ श्राद्धे रात्र्यादिवेलानां नास्ति।

"पूर्वाह्णे दैविकं श्राद्धमपराह्णे तु पार्वणम्।
एकोद्दिष्टं तु मध्याह्ने प्रातर्वृद्धिनिमित्तम्॥
आमश्राद्धं तु पूर्वाह्णे एकोद्दिष्टं तु मध्यतः।
पार्वणं चापराह्णे तु प्रातर्वृद्धिनिमित्तकम्॥

शुक्लपक्षस्य पूर्वाह्णे श्राद्धं कुर्याद्विचक्षणः ।
कृष्णपक्षापराह्णे तु रौहिणं तु न लङ्घयेत् ॥
ऊर्ध्वं मुहूर्त्तात्कुतपाद्यन्मुहूर्त्तचतुष्टयम् ।
मुहूर्त्तपञ्चकं ह्येतत्स्वधाभवनमिष्यते ॥

अपराह्णः पितॄणां तु" इत्यादिब्रह्मपुराणशातातपमार्कण्डेयमत्स्यहारीतादिवचनैस्तत्तच्छ्राद्धभेदेषु तत्तद्वेलाया नियमितत्वात् ।

अत्रोच्यते । प्रातःसन्ध्यातत्समीपनिषेधस्तावत् "प्रातर्वृद्धिनिमित्तकम्" इत्येतद्वचनप्राप्तपुत्रजन्मातिरिक्तविवाहादिनिमित्तकवृद्धिश्राद्धविषयः । प्रातःसन्ध्यासमीपे च प्रथमो मुहूर्तः । अचिरोदितपदेनापि स एवोच्यते । "सूर्योदयमुहूर्ते च" इति शातातपवचनात् । सायंसन्ध्यातत्समीपसायाह्नादिनिषेधश्च पार्वणविषयः । तस्यापराह्णकालत्वात् । अपराह्णस्य च द्वेधाविभागे त्रेधाविभागे च रात्रिपर्यन्तत्वात् ।

"यथा चैवापरः पक्षः पूर्वपक्षाद्विशिष्यते ।
तथा श्राद्धस्य पूर्वाह्णादपराह्णो विशिष्यते" ॥

"वासरस्य तृतीयेंशे" इति मनुवचनाभ्यामपराह्णत्वाविशेषाच्च तादृशस्यापि तस्य पार्वणाङ्गत्वप्रतीतेः । चतुर्थप्रहरसायाह्नदिवसाष्टमभागान्त्यमुहूर्त्तानां च तारतम्येन वर्ज्यत्वं द्रष्टव्यम् । यद्वा चतुर्थप्रहरनिषेधोऽल्पान्तरत्वात्सायाह्नविषय एव । रात्रिनिषेधस्य तु ग्रहणपुत्रजन्मादिनिमित्तश्राद्धविषयत्वम् । तथा च तस्य पक्षेऽननुष्ठानमपीति केचित् । तस्यैव—

"राहुदर्शनसंक्रान्तिविवाहात्ययवृद्धिषु ।
स्नानदानादिकं कुर्युर्निशि काम्यव्रतेषु च" ॥

इत्यादिदेवलादिवचनै रात्रौ प्राप्तत्वात्प्राप्तिसापेक्षस्य निषेधस्यापि परिशेषात्तद्विषयत्वेन समानविषयत्वात् । विवाहे च दान-

स्यैवान्वयो न त्वादिपदोपात्तस्य श्राद्धस्य । तन्निमित्तस्य श्राद्धस्य प्रातर्वृद्धिनिमित्तकमिति प्रातःकरणात्तत्र रात्रिविधानानुपपत्तेः । रात्रौ विवाहे यदा प्रातर्वृद्धिश्राद्धं न कृतं तदा रात्रावपि कार्यमिति तु शूलपाणिः ।

दर्शश्राद्धप्रकरणगतस्य मानवनिषेधस्यापरपक्षश्राद्धप्रकरणगतस्य च "न च नक्तं श्राद्धं कुर्वीत" इत्यापस्तम्बीयस्य तदेकवाक्यतया नारभ्याधीतन्यायेन च तद्विषयाणामेवान्येषामपि ग्रहणादिनिमित्तश्राद्धविषयत्वासंभवात् । इदं केषाञ्चिन्मतमयुक्तम् । प्रकरणबाधेऽपि स्वारसिकसमानविषयत्वाभावाद्विकल्पस्यान्याय्यत्वाच्च । तीर्थश्राद्धविषयोऽयं रात्रिनिषेध इत्यपरे ।

ननु तत्रापि प्रकरणबाधप्रसङ्गस्तुल्यः । न । लिङ्गेनैव प्रकरणबाधात् । तथा हि यद्ययं निषेधः प्रकरणात्पार्वणमात्रविषयस्तदा ग्रहणादिश्राद्धेष्वतिदेशात्तस्य प्राप्तिर्वक्तव्या । सा चौपदेशिकनिमित्तस्वभावावगतनिमित्तानन्तर्यविरोधाज्जातेष्टाविव कालशौचयोर्न संभवति । न च यथा तत्र शेषिविरोधेनानन्तर्ये बाधितं तदुपसंग्रहस्तथात्र किञ्चित्तस्य बाधकमस्ति येनातिदेशिकस्यापि निषेधस्योपसंग्रहः स्यात् । तत्र रात्रिप्रतिप्रसवविधिस्तेष्वनर्थकः स्यात् । तेन यथा "न वैश्वदेवा उत्तरवेदिमुपकिरन्ति न शुनासीरीये" इति निषेधे द्वयोरेव पार्वणयोरुत्कीर्तनसामर्थ्यात् "उपात्र वपन्ति" इत्यत्र वरुणप्रघासावान्तरप्रकरणबाधस्तथात्रापि । कांश्चित्प्रतिप्रसवसामर्थ्यात्, नियतापराह्णकालायां प्रकृतौ रात्रेरसमाप्तेश्च । तेन दर्शप्रकरणादुत्कृष्टस्यास्य रात्रिनिषेधस्य निमित्तस्वरसावगतनिमित्तानन्तर्यवशादनियतकालानि नैमित्तिकश्राद्धान्येव विषयः । तत्रापि ग्रहणादिषु प्रतिप्रसवेनापादितस्य तीर्थश्राद्धमेव स्थिरो विषयः ।

ननु तत्रापि प्रतिप्रसववाक्यानि पितृव्यैर्लिखितानि । महाभारते-

"भुक्तो वाप्यथवाऽभुक्तो रात्रावहनि खेचर।
न कालनियमो ह्यस्ति गङ्गां प्राप्य सरिद्वराम्" ॥ इति ॥

देवीपुराणे—

"काले वाप्यथवाऽकाले तीर्थे श्राद्धं सदा नरैः।
प्राप्तैरेव च कर्त्तव्यं पितॄणां चैव तर्पणम् ॥
पिण्डदानं च तच्छस्तं पितॄणां चातिवल्लभम्।
विलम्बो न च कर्तव्यो न च विघ्नं समाचरेत्" ॥ इति ॥

काशीखण्डे—

"अकालेऽप्यथवाऽकाले तीर्थे श्राद्धं च तर्पणम्।
अविलम्बेन कर्त्तव्यं नैव विघ्नं समाचरेत्" ॥ इति ॥

सर्वेषामेतेषां वाशब्दापिशब्दश्रवणात् "गुरुं वा बालवृद्धौ वा" इत्यादिवत्स्वार्थतात्पर्यरहितानां वचनान्तरनिषिद्धरात्रेरन्यत्रेति वाक्यप्राप्तप्रातःसायाह्नादिगौणकालप्रतिप्रसवार्थत्वाददोषः। तेन प्रातःकाले तीर्थं प्राप्तैर्न कुतपापराह्णरूपप्रारम्भप्रधानकालप्रतीक्षा कर्त्तव्या। अविलम्बेनैव श्राद्धं कर्त्तव्यम्। सायाह्नप्राप्तैश्च न मुख्यकालोपगत इति तीर्थश्राद्धं न कर्त्तव्यं किन्तु येन केनापि प्रकारेण रात्रेः प्राक् कार्यमेव। अत एव केऽपि शिष्टा रात्रिभोजनोत्तरकालादौ तीर्थं प्राप्ता अपि तच्छ्राद्धं न कुर्वन्ति। एवं मुख्यकाले यावदस्थायिद्रव्यपात्रसंपत्तावपि द्रष्टव्यम्। तत्रापि "तीर्थद्रव्योपपत्तौ च न कालमवधारयेत्" इति मुख्यकालप्रतीक्षानिषेधमुखेन प्रातःकालसायाह्नादेरेव प्रतिप्रसवात्। इदमपि प्रकृतिप्रकरणपठितस्य प्रकृतावेव कथंचित्कार्यसंभवेऽयुक्तमेव। तेन प्रारब्धे श्राद्धे दैवमानुषप्रतिबन्धादसमाप्ते यदि रविरस्तमियात्तदा प्रारब्धत्वाद्रात्रावपि तत्समापने प्रसक्ते न च "नक्तं श्राद्धं न कुर्वीत" इति निषेधः। तथा च साग्निकृतमेव स्थापयित्वा परेद्युः कृतान्ता-समापनीयम्। यजमानेनापि तदुत्तरमेव भोक्तव्यं न तु पूर्वदिन-

इत्युत्तरसूत्रं "प्रारब्धे चाभोजनमापरिसमापनादिति" इति हरदत्तः।
प्रारम्भश्च पूर्वेद्युर्निवेदनम्।

यत्तु माधवेन "आरब्धे च भोजनसमापनम्,, इत्यध्येतृभाष्याननुगतमापस्तम्बीयपाठं लिखित्वा भोजनग्रहणस्य पिण्डदानोपलक्षणत्वं समापनग्रहणस्य चारम्भोपलक्षणत्वमङ्गीकृत्य रात्रावप्यारम्भसमाप्ति-सांवत्सरिकस्याभ्यनुज्ञाते। तदाब्दिकाकरणप्रत्यवायस्य श्राद्धविघ्नकृतकालेष्वनुष्ठानेन परिहारसंभवान्निरुपपत्तिकं स्वाच्छन्द्यमात्रम्।

अत्र पारमार्थिकः परिहारोऽभिधीयते। अपराह्णविधिर्न तन्नियमार्थ एकभक्तादिषु मध्याह्नादिविधिवत् किन्तु फलातिशयहेतुत्वलक्षणप्राशस्त्यार्थः। तथा च मनुः "यथा चैव" इत्यादि। शातातपः—

"दर्शश्राद्धं तु यत्प्रोक्तं पार्वणं तत्प्रकीर्त्तितम्।
अपराह्णे पितॄणां तु तत्र दानं प्रशस्यते,, इति॥

आपस्तम्बोऽपि— "मासि मास्यपरपक्षस्यापराह्णः श्रेयान्" इति। आपाद्यश्राद्धविषयदृष्टान्तप्रसिद्ध्यर्थः पूर्ववादश्च प्राशस्त्यार्थ एव "श्रेष्ठं तत्रोत्तरायणम्, कृष्णपक्षश्च तत्रापि" इति। एवं सति-"अपराह्णः पितॄणाम्, अपराह्णे तु पैतृकम्, अपराह्णे पितृक्रिया" इत्यादि-श्रुतिस्मृतिषु यदपराह्णस्य प्राशस्त्यानालिङ्गितं श्रवणं नियमार्थमिव प्रतिभाति तदपि पूर्ववचनैकवाक्यतया प्राशस्त्यपरमेव।

ननु-
"उदिते दैवतं भानौ पित्र्यं चास्तमिते रवौ।
द्विमुहूर्त्तं त्रिरह्नश्च" इति।
"दिनान्ते पञ्चनाड्यस्तु पुण्याः प्रोक्ता मनीषिभिः।
उदये च तथा पित्र्ये दैवे चैव च कर्मणि"॥

इति च सायाह्नस्यापि पित्र्यकालत्वोक्तिस्तथा सति किमनर्था। न च प्रतिषिद्धस्य प्रतिप्रसवार्था प्राग्निषेधो ह्यस्य तदा न

स्वरूपविषयः, किन्तु द्वेधात्रेधाविभागपक्षयोरपराह्णान्तर्गतस्य तस्य मनुवाक्यात्पूर्वभागस्यैव प्राशस्त्यप्राप्तौ चतुर्धापञ्चधाविभागयोरन्त्यस्य तस्य तन्निषेधेन तदपराह्णात्मकतत्पूर्वभाग एव तत्संकोचार्थः। सायाह्नः श्राद्धेऽपराह्णवत्प्रशस्तो न। किन्तु राक्षसी वेला रात्रिस्तत्तुल्यः। अपराह्ण एव तु तत्पूर्वभागः प्रशस्त इति।

सत्यम्। पूर्वाह्णवाक्यादि प्रातर्भिन्नस्य तदा श्राद्धकालत्वात्तदपेक्षया प्राशस्त्यार्था तस्य पुनः पित्र्यकालत्वोक्तिः। अत एव शिष्टा अपराह्णे श्राद्धासंभवे सायाह्न एव तत्कुर्वन्ति न तु सङ्गव इति॥

यद्वा प्रातरादिवच्छ्राद्धाङ्गत्वेनैव निषिद्धस्य सायाह्नस्य गौणकालतया प्रतिप्रसवार्था सा भविष्यतीति न कोऽपि दोष इति। एवं सत्येकोद्दिष्टादिगोचरा मध्याह्नादिविधयोऽपि पार्वणविषयापराह्णसमभिव्याहारात्प्राशस्त्यविषया एव। तथा कुतपस्यापि श्राद्धप्रारम्भकालत्वं न नियतम्। येन तन्मुखेनापि वेलानियमस्तत्र स्यात्। किन्तु तदपि प्राशस्त्यार्थमेव। तथा च मत्स्यपुराणम्—

"अह्नो मुहूर्त्ता विख्याता दश पञ्च च सर्वदा।
तत्राष्टमो मुहूर्त्तो यः स कालः कुतपः स्मृतः॥
मध्याह्ने सर्वदा यस्मान्मन्दीभवति भास्करः।
तस्मादनन्तफलदस्तत्रारम्भो विशिष्यते"॥ इति।

स्कन्दवायुपुराणयोः—

"कुं यत्र गोपतिर्गोभिः कात्स्र्न्येन तपति क्षणे।
स कालः कुतपो ज्ञेयस्तत्र दत्तं महाफलम्"॥ इति।

अन्यत्रापि—

"मुहूर्त्तात्सप्तमादूर्ध्वं मुहूर्त्तान्नवमादधः।
स कालः कुतपो ज्ञेयः पितॄणां दत्तमक्षयम्"॥ इति।

खड्गपात्रादिसाहित्येन प्रशंसनादपि तद्वदेव प्राशस्त्यमात्रहेतुता

गम्यते प्रभासखण्डे —

"मध्याह्नः खड्गपात्रं च तथा नेपालकम्बलः।
रूप्यं दर्भास्तिला गावो दौहित्रश्चाष्टमः स्मृतः॥
पापं कुत्सितमित्याहुस्तस्य संतापकारिणः।
अष्टावेते यतस्तस्मात्कुतपा इति विश्रुताः"॥ इति।

तथा च कुतपापराह्णादीनां श्राद्धोपक्रमप्रयोगयोः प्रशस्तकालमात्रत्वेन नित्यवच्छ्राद्धार्थतया केनचिद्विधिनाऽनियमितत्वात्तत्र सर्ववेलानां प्रसक्तौ युक्ता रात्रिसन्ध्यादीनामनैमित्तिकसर्वश्राद्धेषु

"प्रातःकाले तु न श्राद्धं प्रकुर्वीत द्विजोत्तमः।
नैमित्तिकेषु श्राद्धेषु न कालनियमः स्मृतः"॥

इति माधवाचार्योदाहृताच्छिवराघवसंवादवाक्याच्च प्रातःकालविहितवृद्धिश्राद्धातिरिक्तेषु तेषु प्रातःकालस्य निषेधः।

तेन रात्रिसन्ध्याद्वयतदन्तिकप्रातःसायाह्नव्यतिरिक्ततदन्तरालवर्तिमुहूर्त्तनवकमपि श्राद्धानामनैमित्तिकानां कालः। तन्मध्ये कुतपादिमुहूर्त्तकपञ्चकं पार्वणेऽतिप्रशस्तम्। "ऊर्ध्वं मुहूर्त्तात्" इत्यादिवचनात्। द्वेधाविभक्तदिनापराह्णप्राशस्त्यप्रतिपादकस्यापि मनुवचनस्य सायाह्ननिषेधवशेन तत्रैव पर्यवसानाच्च। अत एव कण्ठागतं मधु को नाम नास्वादयतीति न्यायेन शिष्टानां प्रायस्तथैव श्राद्धानुष्ठानम्। एकोद्दिष्टे च मध्याह्नः। स चात्र गान्धर्वं हित्वा कुतपरौहिणात्मकं मुहूर्तद्वयमेव।

"प्रारभ्य कुतपे श्राद्धं कुर्यादारौहिणं बुधः।
विधिज्ञो विधिमास्थाय रौहिणं तु न लङ्घयेत्"॥

इति श्लोकगौतमवचनात्। इदं हि वचनं न पार्वणविषयम्। पूर्ववचनविरोधात्। नापि—

"शुक्लपक्षस्य पूर्वाह्णे श्राद्धं कुर्याद्विचक्षणः।
कृष्णपक्षापराह्णे तु रौहिणं तु न लङ्घयेत्"॥

इति वायुपुराणवत्तदुपक्रमविषयम् । "प्रारभ्य श्राद्धं कुर्यात्" इति प्रारम्भात्पृथक् श्राद्धकरणस्योपादानात् । परिशेषादेकोद्दिष्टविषयमेव । सायाह्नस्य च निषिद्धस्यापि पुनर्विधानाद्गौणकालत्वमित्युक्तम् । तत्राद्यद्वितीयतृतीयमुहूर्त्तानां गौणगौणतरगौणतमता । दिनाष्टमभागान्त्यमुहूर्त्तयोः पुनर्निषेधात् । न तु सर्वथाऽकालता रात्रिप्रातर्वत् । "स्वकालातिक्रमे कुर्याद्रात्रेः पूर्वतयाऽवधिः" इतिव्यासवचनात्, "रात्रेरन्यत्र" इतिवचनाच्च । प्रातःकालस्तु पार्वणैकोद्दिष्टयोर्निषिद्ध एव । सायाह्नवत्पुनर्विधानाभावात् ।

न चाद्यमुहूर्त्तस्य पुनर्निषेधात्तच्छेषभागस्य गौणतयाभ्यनुज्ञा गम्यत इति वाच्यम् । तस्य सामर्थ्याद्वृद्धिश्राद्धविषयत्वस्योक्तत्वात् । सङ्गवस्तु न निषिद्धो नापि प्रशस्त इति भवतु चैकोद्दिष्टवृद्ध्यादिषु मध्याह्नप्रातरादिश्रवणं नियमार्थमेव । पार्वणे तु प्रकृतिभूते कुतपापराह्णयोरुपक्रमप्रयोगकालत्वश्रवणं स्पष्टैर्वचनैः प्राशस्त्यार्थमेवेति युक्तस्तत्प्रकरणेऽनारभ्य वा श्रुतो रात्र्यादिप्रतिषेधः । कुतपस्य च नाडीद्वयात्मकस्य यच्छ्राद्धोपक्रमे प्राशस्त्यम् । तस्य विकृतिभूते पार्वणे व्यवस्था स्मर्यते मार्कण्डेयेन "शुक्लपक्षस्य" इत्यादि । शूलपाण्यादिभिर्वायुपुराणत्वेनेदं लिखितम् । इदं हि वचनं शुक्लपक्षसम्बन्धिनां युगमन्वादिसांवत्सरिकादीनां सर्वेषां शुक्लपक्षपुरस्कारेणैव श्रुतानां वा माघपौर्णमास्यादिव्रीहियवपाकादिश्राद्धानां सर्वस्य प्रयोगस्य पूर्वाह्णकालत्वं कृष्णपक्षसम्बन्धिनां चापराह्णकालत्वं विदधाति । एकत्रापराह्णादेर्बाधप्रसङ्गादपरत्र च प्राप्तत्वात् ।

न च कृष्णपक्षांशेऽनुवाद एव । शुक्लपक्षांश एव तु सामान्यप्राप्तापराह्णादिबाधेनैव पूर्वाह्णविधिरिति वाच्यम् ।

अबाधेनोपपत्तौ तस्याप्यन्याय्यत्वात् । द्वेधाविभक्तपूर्वाह्णान्तर्गतस्य कुतपपूर्वभागस्य तादृशापराह्णान्तर्गतस्य च तदुत्तरभागस्य

पक्षभेदेनोपक्रमकालत्वव्यवस्थापने तु न कस्यचिद्बाधोपेक्षितविधानं च लभ्यते। "रौहिणं तु न लङ्घयेत्" इत्यप्युपक्रमकालविधान एव संगच्छते। उपक्रमे रौहिणं न लङ्घयेत् तत्र वा कृष्ण-पक्षसम्बन्धिश्राद्धमुपक्रमणीयमिति ।

विष्णुरप्युपक्रममेव पूर्वापराह्णयोः पक्षभेदेन । दर्शयति—"शुक्लप क्षस्य पूर्वाह्णे, कृष्णपक्षस्यापराह्णे विप्रान्स्नातानाचान्तानुपवेशयेत्"इति।

यत्तु हेमाद्रिणास्य वचनस्य पूर्वोक्तमेवार्थमङ्गीकृत्यैकोद्दिष्टविषय-त्वमप्युक्तम् । एकोद्दिष्टमपि पक्षभेदेन कुतपपूर्वोत्तरभागयोरुपक्रमणीय-मिति तद्विचार्यम् । तस्य तत्प्रथमभाग एवोपक्रमणीयत्वात्तत्राव्यव-स्थाया अप्राप्तेः । तथा च व्यासः—

"कुतपप्रथमे भागे एकोद्दिष्टमुपक्रमेत् ।
आवर्त्तनसमीपे वा तत्रैव नियतात्मवान्,, ॥ इति ॥

तत्रैवेति कुतपप्रथमभाग एव परामृश्यते न तु कुतपः। विशे-षणत्वात् । तत्रैव प्रथमकलायामेवावर्त्तनसमीपे चेति विकल्पः। कुतप-परामर्शेन तदुत्तरभागविधावपि वाशब्दात्तस्यानुकल्पत्वम् । तथात्वे कुतपोपक्रमविधानादेवैतस्यार्थस्य सिद्धावस्यानर्थक्यात् । कदाचि-द्गौणत्वेन गान्धर्वेऽपि तस्योपक्रमः । तथा च शिवराघवसंवादे—

"ग्रहादिव्यतिरिक्तस्य प्रक्रमे कुतपः स्मृतः ।
कुतपादथवाप्यर्वागासनं कुतपे भवेत्" ॥ इति ॥

इदं वचनमेकोद्दिष्टविषयमेव । मध्याह्नाह्णके तत्रैवावैगुण्यात्तदन्त-र्गतगान्धर्वविधानस्योचितत्वात् । एतेन वचनद्वयस्यापि पार्वणैको-द्दिष्टोभयविषयत्वं माधवोक्तमप्यपास्तम् ।

यदपि माधवस्यैव दैविकपित्र्यश्राद्धविषयतया "पूर्वाह्णे दैविकं श्राद्धमपराह्णे तु पैतृकम्" इत्येतत्समानार्थतया "शुक्लपक्षस्य" इत्यादि-वचनव्याख्यानं तदुत्प्रेक्षामात्रकल्पितम् ।

यदपि शूलपाणिना "शुक्लपक्षसम्बन्धि-युगाद्यादिश्राद्धं पूर्वाह्णे, कृष्णपक्षसम्बन्ध्यपराह्णे कर्त्तव्यम्। पूर्वाह्णस्योत्तरावधिरपराह्णस्य च पूर्वावधिरुक्तो "रौहिणं तु" इति। तेन शुक्लपक्षे नवममुहूर्त्तोपरि श्राद्धं न कर्त्तव्यं किं त्ववार्गेव कृष्णपक्षे च तस्मात्प्राङ् न कर्त्तव्यम्। तेन कृष्णपक्षपुरस्कारविहितश्राद्धेषु रौहिणाख्यो नवममुहूर्त्तो मुहूर्त्तत्रयात्मकोऽपराह्णश्चेति मुहूर्त्तचतुष्टयश्राद्धकालः। तत्राप्यपराह्णः प्रशस्तः। शुक्लपक्षपुरस्कारविहितश्राद्धेषु तु सङ्गवो मध्याह्णश्चेति मुहूर्त्तषट्कम्, तत्रापि द्वेधाविभक्तपूर्वाह्णान्तर्गतो भागः प्रशस्तः।

"अपराह्णे तु संप्राप्ते अभिजिद्रोहिणोदये।
यदत्र दीयते किञ्चित्तदक्षयमुदाहृतम्"॥

इति मत्स्यपुराणोक्तमभिजिदाख्याष्टममुहूर्त्तरौहिणोयक्रमापराह्णात्मकं मुहूर्त्तपञ्चकं तु मुहूर्त्तचतुष्टयापेक्षयापकृष्टम्। अत एव

"ऊर्ध्वं मुहूर्त्तात्कुतपाद्यन्मुहूर्त्तचतुष्टयम्।
मुहूर्त्तपञ्चकं वापि स्वधाभवनमिष्यते"

इति मत्स्यपुराणीयमेव वचनान्तरम्। प्रातःसायाह्णावधिपरिच्छिन्नं मुहूर्त्तनवकं त्वपकृष्टतरम्" इत्युक्तम्।

तदपि पक्षद्वयसाधारण्येनैव प्रारम्भप्रयोगकालत्वेन प्राप्तयोः कुतपापराह्णयोरबाधेनैव पूर्वोक्तविधया शुक्लकृष्णवाक्यव्यख्यानसंभवे संपूर्णप्रयोगकालविधायकत्वेन विष्णुवचनविरुद्धस्य व्याख्यानस्यायुक्तत्वादयुक्तम्। रौहिणस्य पूर्वाह्णावधित्वं चात्यन्तायुक्तम्। पूर्वाह्णान्तर्गतस्यैव हि कस्यचित्किञ्चित्तद्भागव्यवच्छेदेन तं प्रत्यवधित्वं स्याद्यथा तस्यैव स्वपूर्वभाविकुतपोत्तरार्धव्यवच्छेदेनापराह्णं प्रति। न त्वपराह्णान्तर्गतस्य पूर्वाह्णं प्रति। तस्माच्छुक्लकृष्णवाक्यस्य पूर्वोक्तमेव व्यख्यानं साधीयः शिष्टाचारानुगतं च। न हि केऽपि शिष्टाः शुक्लपक्षगतं पौर्णमासीव्रीहियवशाकादिश्राद्धं पूर्वाह्णे

समाचरन्ति। एतेनैव तद्वचनसिद्धमेवार्थं युगादिषु प्रतिपादयत्—

"द्वे शुक्ले द्वे तथा कृष्णे युगादीन् कवयो विदुः।
शुक्ले पौर्वाह्णिके ग्राह्ये कृष्णे चैवापराह्णिके"॥

इत्येतदपि स्मृत्यन्तरवचनं व्याख्यातम्। तदेवं निषेधमुखेन श्राद्धवेला प्रदर्शिता, निषिद्धरात्रिसंध्यादिव्यतिरिक्ताऽहर्भागः सेति। तत्प्रसङ्गेनैव विधिमुखेनापि सा दर्शिता— "पूर्वाह्णे दैविकं श्राद्धम्" इत्यादिवचनैः। तेषां च प्रयोजनमुक्तम्— "प्राशस्त्यार्थानि नियमार्थान्येव च" इति। तत्र दैविकं श्राद्धम्—"देवानुद्दिश्य क्रियते तत्तु दैविकमुच्यते" इति विश्वामित्रोक्तम्। तस्यापि च श्राद्धत्वमभियुक्तश्राद्धप्रसिद्धिविषयत्वरूपश्राद्धलक्षणे वान्यत्र प्रपञ्चयिष्यते।

शूलपाण्यादिभिस्तु मातृकमिति पठितम्—

"पित्रादित्रयपत्नीस्तु भोज्या मातॄः प्रति द्विजाः।
स्त्रीणामेव तु तच्च स्यान्मातृश्राद्धमिहोच्यते"॥

इत्यनन्वितार्थशङ्खनामलिखितवचनोक्तत्वेनोत्प्रेक्षितमन्वष्टक्यं च मातृकत्वेन व्याख्यातम्। तन्मेधातिथिकल्पतरुकारप्रभृतिप्रामाणिकनिबन्धृलिखितपाठेन शिष्टाचारेण च विरुद्धमित्युपेक्षणीयम्। पूर्वाह्णशब्देन चात्र मध्याह्नपूर्वभावी सङ्गवो ग्राह्यः। प्रातर्व्यपदेशादत्रापि प्रातःकालनिषेधप्रवृत्तौ बाधकाभावाच्च। "आमश्राद्धं तु पूर्वाह्णे" इत्यत्रापि स एव।

"कालात्प्रातस्तनादूर्ध्वं त्रिमुहूर्ता तु या तिथिः।
आमश्राद्धं तत्र कुर्याद्द्विमुहूर्तापि वा भवेत्"॥

इति व्याघ्रपादवचनाच्च।

अयं चामश्राद्धे पूर्वाह्णविधिर्द्विजातिकर्तृकामश्राद्ध एव न तु शूद्रकर्तृकामश्राद्धेऽपीति हेमाद्रिः।

तथा हि अस्योभयविषयत्वे नित्यानित्यत्वेन वैषम्यं स्यात्। द्विजांशे आतिदेशिकापराह्णस्य नित्यं बाधेन नित्यत्वाच्छूद्रांशे औपदेशिकस्य तस्य पाक्षिकबाधेनानित्यत्वात्।

कथं पुनर्द्विजकर्तृके आमश्राद्धे अपराह्णस्यातिदेशिकत्वं शूद्रकर्तृके चौपदेशिकत्वम्। इत्थं द्विजानां तावदन्नश्राद्धमेव नित्यवच्छ्रुतं नित्यमामश्राद्धं तु पाकासंभवाद्युपाधौ श्रुतमनित्यम्। शूद्राणां तु "शूद्रः कुर्यात्सदैव हि" इति नित्यवच्छ्रुतं तदपि नित्यम्। तथा च प्रकृतावपराह्णविधिर्द्विजकर्तृकान्नश्राद्धे शूद्रकर्तृकामश्राद्धे चोपदेशत एव भवति साधारणः प्रोक्षणावघातादिविधिरिव व्रीहियवयागयोः। द्विजकर्तृकामश्राद्धे त्वनित्ये उपदेशतस्तथा भवितुमशक्नुवन्नतिदेशत एव भवति। क्रयाभिषवादिविधिरिव फलचमसयागे। ततश्चायं पूर्वाह्णविधिर्नित्यानित्यत्ववैषम्यप्रसङ्गादुभयविषयो भवितुं शक्नुवन्विकल्पापत्तेरेव शूद्रामश्राद्धं परिहृत्य द्विजामश्राद्धविषयो भवति। एवं सति—

"मध्याह्नात्परतो यस्तु कुतपः समुदाहृतः।
आममात्रेण तत्रैव पितॄणां दत्तमक्षयम्" ॥

इति शातातपवचनस्यापि मध्याह्नोत्तरकालविधायकस्य सविषमकता भवति। पूर्वाह्णस्यामश्राद्धमात्रविषयत्वे त्विदं निर्विषयं स्यादिति।

तदिदमापातरमणीयम्। तथाहि अग्निष्टोमतदितरसंस्थज्योतिष्टोमदृष्टान्तोपवर्णनात्सोमफलचमससाध्ययागदृष्टान्तसंकीर्त्तनाच्चाधिकरणद्वयव्युत्पादितस्यापि न्यायस्यायं विषयस्तस्याभिमतः। तत्र न तावत्संस्थाधिकरणन्यायोऽत्र संभवति। तथाहि। किमग्निष्टोमसंस्थस्योक्थ्यादिसंस्थस्य च ज्योतिष्टोमस्य समानं दीक्षणीयादिधर्मविधानम्, उताग्निष्टोमसंस्थस्यैव तत्, इतरसंस्थस्य त्वतिदेशादिति भाष्यकारोपन्यस्तविचारस्यायं तात्पर्यार्थो वार्त्तिके दर्शितः। किं

यथा पौरोडाशिककाण्डाधीता अग्न्यन्वाधानादयो धर्माः षण्णामप्याग्नेयादिभावनानां प्रकरणाख्योपदेशादेवाङ्गम्। तथा दीक्षणीयादयो ज्योतिष्टोमभावनायास्तदाश्रितोक्थ्यादिकरणकफलभावनायाश्च तज्ज्योतिष्टोमभावनाया एव ते। तथोक्थ्यादिभावनानां त्वतिदेशादिति। तत्रोभयार्थत्वे यदा यदा ज्योतिष्टोमेन स्वापूर्वं कुर्यात्तदेत्थम्, यदा च तत्रैव कदाचिदुक्थ्यादिभिः स्वफलापूर्वं कुर्यात्तदेत्थमिति नित्यानित्यशेष्यन्वयाधीनशेषनित्यत्वानित्यत्वगोचरतापर्यवैरूप्यापत्तेरङ्गानामाश्रयान्वयस्य पूर्वमवश्यं वाच्यत्वेनान्वययौगपद्यासंभवादाश्रयेणासम्बध्यतदाश्रितगुणान्वयासंभवाद्गुणेनासम्बध्य द्रव्याश्रयान्वयसंभवाच्च, आश्रयभूतस्य ज्योतिष्टोमस्यैवोपदेशतो धर्मा उक्थ्यादिसंस्थानां त्वतिदेशत इति च तत्र निर्णयः।

न चायं न्यायः प्रकृते संभवति। तदा ह्ययं न्यायः प्रकृते स्याद्यद्यन्नश्राद्धाद्भिन्नमामश्राद्धं नाम कर्म स्यात्तदपि च द्विजशूद्रकर्तृभेदेन। तदा ह्येवं वक्तुं शक्यते—द्विजान् शूद्रं च प्रति नित्यत्वेन समानयोरन्नश्राद्धशूद्रकर्तृकामश्राद्धयोरेवापराह्णादयो धर्मा उपदेशतः समानाः द्विजान्प्रत्येवानित्यस्य तत्कर्तृकामश्राद्धस्य तु वैधर्म्यान्न तथा किन्त्वातिदेशिका इति। न च श्राद्धभेदोऽत्रास्ति। एकमेव दर्शश्राद्धम्। तत्रान्नं नित्यवच्छ्रुतं साधनं सोमवत्। आमं तु शूद्रकर्तृकत्वेन निमित्तेन श्रुतमपि फलचमसवदनित्यमेव। पाकासंभवादिनिमित्तेनापि श्रुतमनित्यमेव। तत्रान्तरं परिशेषाद् द्विजातिविषयमेव भवति। न चापराह्णादयो धर्मा द्रव्यान्वयिनः किन्तु कर्मान्वयिनः। तच्च कर्मैकमेवेति।

एतेन फलचमसन्यायोऽपीह प्रत्युक्तः। द्रव्यधर्मगोचरो हि स न्यायः। अभिषवादयो द्रव्यधर्मा नित्यवच्छ्रुता नित्यवदेव ज्योतिष्टोमापूर्वान्विता यावत्तदपूर्वभाविना नित्येन सोमद्रव्येणैव द्वारेणान्वेतु-

मर्हन्ति नानित्येन फलचमसेन। प्रोक्षणावघातादीनां त्वाम्नानतः प्रयोगतश्च व्रीहियवयोः समानत्वेन विशेषाग्रहणाद्युक्तस्तदुभयद्वारा कर्मान्वय इति। न चापराह्णादयो द्रव्यद्वारा कर्मान्वयिनो येन तन्न्यायगोचराः स्युः। ये तु द्रव्यधर्मा अभिमर्शनादयस्तत्रेष्यत एवायं न्यायः। उपदेशादन्ने आमे तु द्विजसम्बन्धिनि शूद्रसम्बन्धिनि वातिदेशादिति।

यच्च शातातपवचनं तत्प्रत्युत द्विजातिविषयमेव प्रतीयते। मात्रशब्दादामस्यानुकल्पत्वप्रतीतेः। द्विजान्प्रत्येव च तस्य तथात्वात्। किं च यदि पूर्वाह्णविधिर्न्यायादेव द्विजकर्तृकामश्राद्धविषयस्तदा शूद्रामश्राद्धस्य द्विजान्नश्राद्धसामानविध्यादेव कुतपोत्तरार्द्धापराह्णकालत्वसिद्धया तद्विषयत्वे वैयर्थ्यापत्तेः सार्थक्याय द्विजामश्राद्धमेव विषयीकुर्यादिदम्। अगत्या च पूर्वाह्णविधिना विकल्पतेति द्विजातिविषयत्वेऽपि पूर्वाह्णविधेर्विकल्पप्रसङ्गस्तुल्यः। यदा च मात्रशब्दस्वरसाच्छातातपवाक्यं द्विजातिविषयमेवापद्यते तदा पूर्वाह्णविधेः प्रस्तुततद्विषयत्व एव विकल्पः प्रसज्यते न तु शूद्रविषयत्वे।

तदाश्रामश्राद्धे उपदेशादपि सामान्यविषयात्सावकाशाच्च प्राप्तस्यापराह्णस्य निरवकाशविशेषशास्त्रविहितेन पूर्वाह्णेन। नित्यबाधसंभवोदामश्राद्धत्वप्रयुक्तैरन्यधर्मैरितरधर्माणामिव। तेन हेमाद्रिमात्रोपज्ञमिदं यदि साकरं तर्हि सर्वत्रामश्राद्धे पूर्वाह्णे विकल्पितं कुतपोत्तरार्धादिकालं विधत्ताम्। द्विजामश्राद्ध एव वा पूर्वाह्णविधिस्तु शूद्रामश्राद्धविषय एवास्त्वित्यलमनेन।

प्रातर्वृद्धिनिमित्तकमिति पुत्रजन्मातिरिक्तवृद्धिपरम्। पुत्रजन्मरूपवृद्धिनिमित्तकं तु तदनन्तरमेव कर्त्तव्यम्। निमित्तस्वभावनिबन्धनतदानन्तर्योपदेशकेन नैमित्तिकविधिनैव विशेषरूपेण सामान्यशास्त्रबाधात्। न्यायप्राप्तार्थप्रपञ्चकान्येव—

"पूर्वाह्णे वै भवेद्वृद्धिर्विना जन्मनिमित्तकम्।

पुत्रजन्मनि कुर्वीत श्राद्धं तात्कालिकं बुधः" ॥

इत्यादीनि प्रजापत्यादिवचनानि । वृद्धिवृद्धिश्राद्धम् । अत एव रात्र्यादिनिषेधोऽपि सामान्यरूपोऽत्र न प्रवर्त्तते । उपोद्बलकं च राहुदर्शनेत्यादि देवलवचनं पूर्वं दर्शितम् । न्यायप्राप्तानुवादत्वाच्चैवंजातीयकानां वचनानाम् ।

"सन्ध्यारात्र्योर्न कर्त्तव्यं श्राद्धं खलु विचक्षणैः ।
तयोरपि च कर्त्तव्यं यदि स्याद्राहुदर्शनम्" ॥
स्नानं दानं तपः श्राद्धमनन्तं राहुदर्शने ।
आसुरी रात्रिरन्यत्र तस्मात्तां परिवर्जयेत्" ॥

इत्यादिवचनेषु कस्यचिदेकस्य निमित्तस्योपादानमुपलक्षणमेव सर्वेषाम् । अत एवाशौचसंनिपातेऽपि न पूर्वप्रवृत्तनिमित्तकमुत्तरप्रवृत्तेनात्तरप्रवृत्तनिमित्तकं वा पूर्वप्रवृत्तेन श्राद्धजातकर्मौर्ध्वदेहिकाद्यधिकारिणः प्रति बध्यते । वचनमपि—

'सूतके तु समुत्पन्ने पुत्रजन्म यदा भवेत् ।
कर्तुस्तात्कालिकी शुद्धिः पूर्वाशौचेन शुध्यति' ॥ इति ।

सूतकादिग्रहणं चोपलक्षणं पूर्वोक्तादेव हेतोः । तेन पूर्वप्रवृत्ताशौचमध्ये भर्तृमरणे आशौचवतीनामपि पत्नीनामनुमरणमपि भवति । तस्यापि भर्त्तरि प्रेते ब्रह्मचर्यं तदन्वारोहणं वेति "यस्य च भावेन भावलक्षणम्" इत्यनुशिष्टसतिसप्तम्या नैमित्तिकत्वावगमाद्भर्तृसंस्कारप्रयुक्तत्वेत्युपजीवित्वेन निरवकाशत्वाच्च । फलश्रवणं तु न नैमित्तिकत्वविरोधि । निमित्तेन भाव्यांशापूरणान्नैमित्तिकस्यापि फलाकाङ्क्षत्वात् । अत एव जातेष्टावार्थवादिकफलकल्पनया संवलिताधिकारत्वम् । तत्र यदि विधावर्थवादे वा फलं न श्रूयेत तदा पापक्षयः फलं कल्प्येत ।

सति तु तस्मिंस्तदेवाम्वीयते। अकरणप्रत्यवायाभावस्तु पाक्षिकत्वेन श्रवणात्सत्यपि नैमित्तिकत्वे, तदेव च प्रयोजकमङ्ग-संकोचे तच्चेहाप्यस्त्येव। सति हि निमित्तसम्बन्धे तदानन्तर्योपदेश-केन तद्विधिनैव विशेषरूपेण सामान्यशास्त्रविहितानामुपादेयानामनु-पादेयानां वा तद्विरोधिनामङ्गानां भवति बाधः।

रजस्वलाशास्त्रु न भवति। अशुचित्वादेव सर्वनित्यकाम्यकर्मनि-षेधे सिद्धे "न च किंचिदाचरेत्" इति पुनर्निषेधस्य किंचिच्छन्दसम-भिव्याहृतस्य नैमित्तिकानामपि निषेधफलत्वात्। सूतिकायाश्च "उदक्या सूतिका वापि" इत्यादिव्यवहारादुदक्यासमानधर्मत्वावगमा-त्। किञ्च सूतिकोदक्यामरणे नैमित्तिकप्रायश्चित्तादिविधानादना-पाद्यमपि तदवस्थामरणमनर्थहेतुतयावगम्यते किमुतापाद्यमिति सा-वकाशोऽनुमरणविधिस्तद्भिन्नविषय एवोचितः।

नन्वाशौचे न्यायतः प्राप्तानामपि नैमित्तिकानां "नित्यानि निव-र्तेरन्" इति वचनादेव निवृत्तिर्भवतु। तेषामपि निमित्तसम्बन्धा-दावश्यकत्वपर्यायनित्यत्वावगतेः। नित्यानामपि च नैमित्तिकत्वात्। अन्यथा नित्यत्वस्यैवासिद्धेः। न चाकरणे प्रत्यवायश्रवणात्तत्सिद्धिः। नित्यानां सतामकरणे प्रत्यवायस्य स्मृत्याऽबोधनात्। यत्तु केषांचि-न्नैमित्तिकानां तत्रानुष्ठानं तत्प्रतिप्रसवरूपवचननिबन्धनमेव यावद्वचनमस्तु।

उच्यते—"नित्यं नैमित्तिकं काम्यं त्रिविधं कर्म वैदिकम्" इति-परिभाषितानां नियतनिमित्तोपाधौ श्रुतानां पञ्चमहायज्ञादीनामेव नित्यपदेन ग्रहणम्। "कार्यकालं संज्ञापरिभाषयोरुपस्थानम्" इति न्यायात्। अत एव नित्यानीति संक्षेपप्रपञ्चवचनेषु—

"पञ्चयज्ञविधानं च न कुर्यान्मृत्युजन्मनोः।
सूतके कर्मणां त्यागः सन्ध्यादीनां विधीयते"॥

इत्यादिषु तादृशानामेवोपादानं दृश्यते। यानि तु नैमित्तिकानां केषांचित्प्रतिप्रसववचनानि तानि मन्दमतीनां न्यायप्राप्तार्थस्पष्टीकरणार्थान्येव। अत एव "सूतके तु समुत्पन्ने" इति वचनमुपन्यस्य तुल्यन्यायत्वात् "उदकपिण्डदानाद्यपि" इत्यादि विज्ञानेश्वरप्रभृतिभिरुच्यत इति।

पुत्रजन्मनिमित्तं च श्राद्धदानादि नालच्छेदात्पूर्वमेव कर्त्तव्यं न तदुत्तरम्। तथा च मनुः—'प्राङ्नाभिवर्द्धनात्पुंसो जातकर्म विधीयते" इति। हारितोऽपि-"प्राङ्नाड्याश्छेदात्संस्कारपुण्यार्थान्कुर्वन्ति, नाड्यां तु छिन्नायामाशौचम्" इति। संस्कारे जातकर्मणि पुण्यार्थेषु च हिरण्यवस्त्रादिदानेष्वधिकार इत्यर्थः। आशौचस्यातिशयविशेषरूपस्येतरकर्मानधिकारस्य च नालच्छेदात्पूर्वमपि सत्त्वात्।

विष्णुधर्मोत्तरेऽपि—"अच्छिन्नायां तु नालायां श्राद्धं वै पुत्रजन्मनि" इति। यदि तत्र कयाचिदसंपत्त्या न जातं तदा सूतकोत्तरं जातेष्टिवत्कर्त्तव्यम्। तथा च देवलः—

"जन्मनोऽनन्तरं कार्यं जातकर्म यथाविधि।
दैवादतीतकालं चेदतीते सूतके भवेत्" ॥ इति।

"आशौचोपरमे कार्यमथवा नियतात्मभिः" इति विष्णुधर्मोत्तरमप्येतद्विषयमेव। अत्र च प्रातःकालस्तावत्पञ्चधाविभागेनैव दिनाद्यमुहूर्त्तत्रयात्मकः। पक्षान्तरेषु प्रातर्विभागाभावात्। यस्तु त्रेधाचतुर्धाविभक्तदिनाद्यभागयोरपि क्वचित्प्रातःशब्दप्रयोगः स गौण इत्युक्तं पर्वनिर्णये। पूर्वाह्णश्च द्वेधात्रेधाचतुर्धाविभागेष्वह्नः प्रथमो भागो यौगिकः। अपराह्णोऽपि द्वेधात्रेधाविभागयोरावर्त्तनमध्याह्नापेक्षया तथा। मध्याह्नश्च त्रेधाविभागे पूर्वापराह्णापेक्षया तथैव। चतु-

र्धापञ्चधाविभागसम्बन्धिनोस्तु मध्याह्नापराह्णयोः परिभाषिकत्वाद्द्वय'शोऽपि स्वीकार्यः। मध्यत्वापरत्वयोरापेक्षिकत्वेन योगस्यान्यत्रापि संभवात्। तत्र संज्ञापरिभाषयोः कार्यविनियोगार्थत्वात्परिभाषयैव च तद्विषये रूढेरात्मलाभात्पारिभाषिकस्यैव मध्याह्नादेः सर्वविनियोगेषु ग्रहणं स्यान्न तु यौगिकस्येति तस्यापि तत्र ग्रहणसिद्ध्यर्थं द्वेधात्रेधाविभागयोर्योगसिद्धोऽप्यपराह्णादिः पुनः परिभाषितोऽपि "आवर्त्तनात्तु पूर्वाह्णो ह्यपराह्णस्ततः परः" इति, "पूर्वाह्णो वै देवानां मध्यन्दिनो मनुष्याणामपराह्णः पितॄणाम्" इति च। यद्यपीयं श्रुतिः पूर्वाह्णादीनां दैवादिषु विनियोगफला, तथाप्यह्नस्त्रेधाविभागं तेषां च भागानां पूर्वाह्णादिसंज्ञकत्वमपि द्योतयति। श्राद्धे च सर्वपक्षसम्बन्धिनोऽपराह्णस्य ग्रहणद्योतकानि दृश्यन्ते। "यथा चैवापरः पक्ष" इति द्वेधाविभागसम्बन्धिनः, "वासरस्य तृतीयेंऽशे" इतित्रेधाविभागसम्बन्धिनः, "चतुर्थे प्रहरे प्राप्ते" इतिचतुर्धाविभागसम्बन्धिनश्चतुर्थप्रहरात्मकस्य सायाह्नस्य श्राद्धे निषेधस्तादृशस्यैवापराह्णस्य तदङ्गत्वद्योतकः। पञ्चधाविभागस्तु श्राद्धप्रकरण एवाह्नस्योक्तो मत्स्यपुराणे—

"प्रातःकालो मुहूर्त्तांस्त्रीन्सङ्गवस्तावदेव तु।
मध्याह्नस्त्रिमुहूर्तः स्यादपराह्णस्ततः परम्॥

सायाह्नस्त्रिमुहूर्त्तः स्यात्" इत्यादि। यद्यपि चैतानि द्योतकानि स्मार्त्तानि, श्रुतौ तु "पूर्वाह्णो देवानाम्" इत्याद्यभिधाय "तस्मादपराह्णे ददाति" इति साक्षात्त्रेधाविभागसम्बन्धिनो विनियोगस्तथापि तस्य पिण्डपितृयज्ञविषयत्वात्तदुत्तरभाविन्याहिताग्निपार्वण एव तादृशापराह्णनियमो न सर्वत्रेति।

# अथ तिथियुक्तश्राद्धे खण्डातिथिविवेचनम् ।

एवं तत्तच्छ्राद्धगोचरतत्तद्वेलानिरूपणे कृते तिथिप्रयुक्तश्राद्धेषु खण्डा तत्तिथिर्निर्णीयते । तिथिप्रयुक्तानि च श्राद्धानि प्रकारभेदेन द्विविधानि। कानिचिदेकोद्दिष्टानि कानिचित्पार्वणानि। तत्र यद्यपि योगात् "दर्शश्राद्धं तु यत्प्रोक्तं पार्वणं तत्प्रकीर्त्तितम्" इति परिभाषया च मुख्यं पार्वणं दर्शश्राद्धमेव तदन्यस्यां तिथौ नैव प्राप्नोति, तथापि त्रिपुरुषदेवत्यत्वे तत्सदृशप्रचुरप्रयोगविषयत्वात्तेनैव सादृश्येन निमित्तेन "त्रीनुद्दिश्य तु यत्तद्धि पार्वणं मुनयो विदुः" इत्यादिवचनैः परिभावितं च यद्गौणं पार्वणं तत्र तावदेकोद्दिष्टसाहित्येन सर्वा तिथिर्निर्णीयते। मुख्यपार्वणमात्रे त्वमावास्या पश्चात् निर्णेष्यते।

तत्र सर्वतिथिषु सपिण्डीकरणपूर्वभाविमासिकमेकोद्दिष्टरूपं तदुत्तरभावितदाब्दिकं चैकोद्दिष्टरूपं पार्वणरूपं वा काम्यं च 'प्रतिपद्धनलाभाय' इत्यादिवाक्यैर्विहितं पार्वणरूपं प्राप्नोति। तत्रैकोद्दिष्टरूपे कुतपरौहिणरूपमध्याह्नैकदेशव्यापिनी पार्वणरूपे च कुतपादिमुहूर्त्तपञ्चकव्यापिनी शुक्लपक्षपुरस्कारविहिते तदुत्तरार्धादिसार्धमुहूर्त्तचतुष्टयव्यापिनी च तदतिरिक्ते तिथिर्ग्राह्या। "आरभ्य कुतपे श्राद्धं कुर्यादारौहिणाद्बुधः" इत्येकोद्दिष्टस्य तत्कालत्वात्।

"ऊर्ध्वं मुहूर्तात्कुतपाद्यन्मुहूर्त्तचतुष्टयम्।
मुहूर्त्तपञ्चकं ह्येतत्स्वधाभवनमिष्यते"॥

इति च पार्वणस्य तत्कालत्वात्। "कर्मणो यस्य यः कालः" इत्यादि वचनात्।

"मध्याह्नव्यापिनी या स्यात्सैकोद्दिष्टे तिथिर्भवेत्।
अपराह्णव्यापिनी या पार्वणे सा तिथिर्भवेत्"

इति विशेषवचनाच्च।

यद्यपि चैते पराह्णद्वयस्तत्र तत्र प्रशस्ताः काला न तु नियता इत्युक्तं तथापि विशेषवचनात्तिथिनिर्णयस्तद्व्याप्त्यैव कर्तव्यः। अनुष्ठानार्थत्वाच्च निर्णयस्य, अनुष्ठानस्य च कण्ठागतमध्वास्वादन्यायेन तत्रैवोचितत्वात्। अपराह्णग्रहणेन च यद्यपि मुहूर्तपञ्चकं सार्धमुहूर्तचतुष्टयं वा संपूर्णपार्वणप्रयोगकालः। यदि च तावत्कालव्यापिनी लभ्यते तदोदारः कल्पस्तथापि यदा तादृशी न लभ्यते तदा प्रधानप्रयोगकालत्रिमुहूर्तात्मकापराह्णमात्रव्यापिन्यपि ग्राह्या, निर्णयश्च तद्व्याप्त्यैव कर्त्तव्यस्तत्रैव कालव्याप्तिषट्पक्षसंभवात् इति द्योतितम्। तत्रयैकस्मिन्नेव दिने कार्त्स्न्येनैकदेशेन वोक्तयोरेकोद्दिष्टपार्वणकालयोर्वर्तते सैव तयोर्ग्राह्या। दिनद्वयेऽपि वैषम्येण तदेकदेशव्याप्तौ तदाधिक्यवती। अपराह्णांशे वचनमपि मरीचेः—

"द्व्यपराह्णव्यापिनी चेदाब्दिकस्य यदा तिथिः।
महती यत्र तद्दिर्शां प्रशंसन्ति महर्षयः" ॥ इति।

दिनद्वयेऽपि साम्येन तदेकदेशव्याप्तिस्तस्या एव तिथेः क्षयेण साम्येन वृद्ध्या च भवति। तत्र—

"खर्वो दर्पस्तथा हिंसा त्रिविधं तिथिलक्षणम्।
खर्वदर्पौ परौ पूज्यौ हिंसा स्यात्पूर्वकालिकी" ॥ इति वचनान्निर्णयः।

खर्वः साम्यवांस्तिथिः। दर्पो वृद्धिमान्। हिंसाक्षयस्तद्वानित्यगुणवचनस्यापि साम्प्रतिकलक्षणया प्रयोगः। अत एव लिङ्गत्यागो गङ्गाशब्दवत्। तिथिलक्षणं तिथिस्वरूपम्। भावपरत्वेन खर्वादिशब्दानां व्याख्यानं परौ पूर्वकालिकीत्यनेनानन्वयादुपेक्षितम्। अत्र च खर्वादीनां परपूर्वविभागेन ग्राह्यत्वाभिधानात्स्पष्टमेव खर्वत्वादीनां ग्राह्यतिथिगतत्वम्। यदा वृद्ध्यादिदिनद्वयेऽप्येकोद्दिष्टकालं पार्वणकालं वा प्राप्नोति तदा क्षयाहश्राद्धे तावदाह बौधायनः—

"अपराह्णद्वयव्यापिन्यतीतस्य यदा तिथिः।
क्षये पूर्वा तु कर्त्तव्या वृद्धौ कार्या तथोत्तरा" ॥ इति।

अपराह्णग्रहणमेकोद्दिष्टकालस्य मध्याह्नस्याप्युपलक्षणम्। कालद्वयव्यापिनीत्येव विवक्षितम्। अत एव सामान्यत एव परिशेषात्साम्यविषयमिदं सुमन्तुवचनम्—

"द्व्यहे तु व्यापिनी चेत्स्यान्मृताहस्य तु या तिथिः।
पूर्वस्यां निर्वपेत्पिण्डमित्याङ्गिरसभाषितम्" ॥ इति।

अत्र क्षयवृद्धिसाम्यानि दिनद्वये सम्पूर्णकालव्याप्तेर्वृद्ध्येकनियतत्वात्तत्र तिथावसंभवेन ग्राह्यतिथ्युत्तरतिथिगतानि ग्राह्याणि।

"दर्शं च पौर्णमासं च पितुः सांवत्सरं दिनम्।
पूर्वविद्धमकुर्वाणो नरकं प्रतिपद्यते" ॥

इति नारदीयपुराणं च। उक्तं ह्येतत्तत्र तत्र यत् कालव्याप्त्यनिर्णयपक्षेषु पूर्वोत्तरविद्धाग्राह्यत्ववचनानि प्रवर्त्तन्त इति।

"पैत्रं मूलं तिथेः प्रोक्तं शास्त्रज्ञैः कालकोविदैः।
यस्यामस्तं रविर्याति पितरस्तामुपासते ॥
सायाह्नव्यापिनी या तु पार्वणे सा उदाहृता" ॥

इत्यादीनि वचनान्यत्रोपोद्वलकानि।

यत्तूत्तरतिथेः साम्ये पूर्वतिथौ बहुगुणसत्त्वेऽपि देवस्वामिवचनादुपक्रममारभ्य कृत्स्नकालव्यापिन्युत्तरैव ग्राह्येत्युक्तं माधवेन तदप्यार्षवचनैरेव पूर्वाग्राह्यत्वनिर्णयेनापास्तं वेदितव्यम्।

यदपि मदनरत्ने "उत्तरतिथिगतवृद्धिक्षयाभ्यां निर्णायकं यद्बौधायनवचनं तत्साम्येन कर्मकालैकदेशव्याप्तिविषयम्। तत्रैव चोत्तरतिथि-

साम्ये पूर्वाखर्वादिवचनं तु क्षयाहश्राद्धव्यतिरिक्तविषयम् । दिनद्वये सम्पूर्णकर्मकालव्याप्तौ तु सुमन्तुवचनात् सर्वदा पूर्वैव" इत्युक्तम् ।

तदप्ययुक्तम् । वचनद्वयेऽपि हि सम्पूर्णकर्मकालव्याप्तावेव स्पष्टं प्रतीयमानायां केन विशेषेण बौधायनवचनमेकदेशव्याप्तिविषयं क्रियते । एकदेशव्याप्तिविषयत्वे चैतस्य तद्गतयोः क्षयवृद्धयोरुत्तरतिथिगतत्वं निःप्रमाणकं तदा तत्तिथिगतयोरेव तयोः संभवात् ।

न च खर्वादिवाक्यवदत्रापि तत्तिथिगतावेव तौ न तूत्तरतिथिगताविति वाच्यम् । तथा हि "एकोद्दिष्टादिवृद्ध्यादौ ह्रासवृद्ध्यादिचोदना" इति वचनात्सर्वपित्र्यविषयेण तेनैव वाक्येन सिद्धौ क्षयाहे पुनर्वचनमनर्थकम् । उपात्तयोः क्षयवृद्ध्योस्तत्समानार्थत्वात्, साम्यस्य त्वनुपादानादेव । वृद्धिगोचरपरपुनर्वचनस्य साम्यगोचरपरनिवृत्त्यर्थत्वे तु परिसंख्यापत्तेः । तस्मान्मदुक्तमेव साधीयः । मासिकेष्वप्याब्दिकवदेव निर्णयः । तेषामपि मृताहकालकत्वात् । मृताहव्यतिरिक्तेषु तु काम्यादिषु दिनद्वये कालव्याप्तौ सर्वदा पूर्वैव । मूलादिवचनेभ्यः । प्रथमातिक्रमकारणाभावाच्च । कुतपस्य चोपक्रमे प्रशस्तकालमात्रत्वेन मुख्यगौणसकलप्राधानकालव्याप्तेः पूर्वदिन एव लाभात् । कुतपकालिकतिथिग्राह्यत्ववचनानां च निरग्निकदर्शश्राद्धविषयत्वात् । क्षयाहादिश्राद्धस्य च दर्शश्राद्धविकारत्वेऽपि तत्तिथिनिर्णयस्योपदेशादेव संभवेनातिदेशानधीनत्वात् ।

कालादर्शे तु क्षयाहश्राद्धव्यतिरिक्तविकृतिश्राद्धेषु दर्शश्राद्धवदेव तिथिनिर्णय इत्युक्तम् ।

एवं मन्वन्तरादीनां युगादीनां विनिर्णयः ।

"महालयस्य पक्षस्य ह्यष्टकानामपि स्मृतः" इति ।

तत्र तु दर्शक्षयाहव्यतिरिक्तसामान्यश्राद्धतिथिनिर्णयस्य सकलनिबन्धकारैः कृतस्य विषयश्चिन्त्यः । दिनद्वये कर्मकालास्पर्शनी उक्तन्यायवचनैः सर्वत्र पूर्वैव ।

"न ह्यहर्व्यापिनी चेत्स्यान्मृताहस्य यदा तिथिः ।
पूर्वविद्धैव कर्त्तव्या त्रिमुहूर्तापि या भवेत्" ॥

इति मनुवचनाच्च यद्यपि व्याप्त्यभाव एकदेशसत्त्वेऽपि संभवति तथापि "त्रिमुहूर्तापि या भवेत्" इति वाक्यशेषान्स्पर्शाभाव एवात्र सः । माधवेन तु सुमन्तुवचनमपि "न ह्यहर्व्यापिनी चेत्" इत्येव पठितं तद्धेमाद्र्यादिसकलग्रन्थविरुद्धम् । श्राद्धं त्वेकभक्तादिवत्स्वकाल एव तत्र तिथ्यभावेऽपि कर्त्तव्यम् 'तिथ्यादौ च भवेद्यावान्'इति वचनात्त-त्तिथिक्षयस्य पूर्वतिथौ प्रक्षेपेण "यां तिथिं समनुप्राप्य अस्तं याति" इति साकल्यवचनेन च शास्त्रतस्तत्र तिथेः सत्त्वात् । कृष्णपक्षतिथि-पौर्णमासीविशेषव्रीहियवपाकश्राद्धतिथियुगादिमन्वन्तराद्यष्टकानक्षत्र-योगादीनामप्ययमेव पित्र्ये निर्णयः ।

यत्तु "शुक्लपक्षस्य पूर्वाह्णे"इत्यादिपक्षभेदेन कुतपपूर्वापर-भागोपक्रमविधायकवचनं तदनुष्ठानार्थं न तु निर्णायकम् । कुतपो-पक्रमविधायकवाक्यवत् । निर्णयस्तु पक्षद्वयेऽप्यपराह्णव्याप्त्यैव ।

यदपि "द्वे शुक्ले" इत्यादिनिर्णायकमिव प्रतिभाति तदप्ये-तत्सामान्यवचनसिद्धस्यैवार्थस्य विशेषे योजनमात्रार्थमिति "श्राद्धो-पक्रमे ग्राह्या" इत्येवमनुष्ठानार्थतयैव व्याख्येयम् ।

अथवा शुक्लपक्षगतयुगादिश्राद्धतिथिर्यदा पूर्वदिने कुतपो-त्तरार्द्धमेवारभ्य प्रवृत्तोत्तरदिने त्रिमुहूर्त्तं किञ्चिदूनं वा वर्द्धते तदा पूर्वोक्तनिर्णयेन प्रथमदिनगता ग्राह्यत्वेन प्राप्नोति तदपवादत्वेन कुतप-पूर्वार्द्धरूपपूर्वाह्णव्यापिन्युत्तरा ग्राह्येति विधत्ताम् ।

न च तदाऽपराह्णशास्त्रस्याप्यत्यन्तं बाधः । अपराह्णेऽपि किञ्चित्तस्या विद्यमानत्वात्पिण्डनिर्वापरहितस्य च साकल्ययुगादि-

श्राद्धस्य कुतपपूर्वार्द्धोपक्रान्तस्य तावति काले सुखेनानुष्ठातुं शक्यत्वात्। कृष्णे चैवापराह्णिक इति त्वनुवादः। युगादिमात्रविषयश्चायं शुक्लपक्षे ईदृशे विषये पौर्वाह्णिकग्राह्यत्वविधिः। वाचनिकत्वात्।

हेमाद्रेस्तु मन्वन्तरादिष्वपि शुक्लपक्षगतास्वयं निर्णयः संमतः।

शूलपाण्यादिमतं तु पूर्वमुक्तमेवेति। सङ्गवकालिकयोरामदैविकश्राद्धयोरप्ययमेव तद्व्याप्त्यादौ तिथिनिर्णयः। सामान्यतिथिनिर्णयप्रस्तावव्याख्यानवृद्ध्यादिवशाद्दैवश्राद्धेऽपि खर्वादिवाक्यप्रवृत्तेर्दर्शितत्वात्। दिनद्वये तु कृत्स्नकर्मकालव्याप्तौ तदस्पर्शे च दैविके उत्तरा। "दैवकार्ये तिथिर्ज्ञेया यस्यामभ्युदितो रविः। उदिते दैवतं भानौ" इत्यादिवचनात्। न तु पूर्वोक्तनिर्णयेन पूर्वा। पित्र्यत्वाभावेन तिथिमूलास्तमयादिवचनानामप्रवृत्तेरिति।

## अथामावास्या निर्णीयते।

तत्र येषां तावत्साग्निकानाम्—

"पक्षान्तं कर्म निर्वर्त्य वैश्वदेवं च साग्निकः।
पिण्डयज्ञं ततः कुर्यात्ततोऽन्वाहार्यकं बुधः"॥

इत्यादिवचनबलादन्वाधानपिण्डपितृयज्ञश्राद्धान्येकदिनकर्त्तव्यत्वेन नियतानि तैस्त्रेधाविभक्तदिनतृतीयभागरूपापराह्णव्यापिन्याममावास्यायां श्राद्धं कर्त्तव्यम्।

"पिण्डान्वाहार्यकं श्राद्धं क्षीणे राजनि शस्यते।
वासरस्य तृतीयेंऽशे नातिसन्ध्यासमीपतः"॥

इति छन्दोगपारिशिष्टात् ।

पिण्डान्वाहार्यकमिति च पिण्डपितृयज्ञादनुक्रियमाणत्वात्तत्प्रख्यन्यायेन नामधेयम् । तत्प्राप्तिश्च—

"पितृयज्ञं तु निर्वर्त्य विप्रश्चन्द्रक्षयेऽग्निमान् ।
पिण्डान्वाहार्यकं श्राद्धं कुर्यान्मासानुमासिकम्" ॥

इति मनुवचनात् ।

चन्द्रक्षयेऽमावास्यायाम् । परिशिष्टे तु राशश्चन्द्रस्य क्षयोऽष्टमेऽश इति तदुक्त एव गृह्यते । शस्यत इति समभिव्याहारात् । मासानुमासशब्दश्च वीप्सापर्यायस्तेन मासे मासे भवमित्यर्थः ।

पितृयज्ञशब्देन च यद्यपि "पितृयज्ञस्तु तर्पणम्" इति वचनात्पितृतर्पणमप्युच्यते ।

"पितृयज्ञं तु निर्वर्त्य तर्पणाख्यं द्विजोऽग्निमान् ।
पिण्डान्वाहार्यकं कुर्याच्छ्राद्धमिन्दुक्षये सदा" ॥

इति मत्स्यपुराणे च तदुत्तरकालत्वं दर्शश्राद्धस्योक्तं तथापि मनुवचने तत्प्रख्यन्यायनामधेयपिण्डान्वाहार्यकशब्दबलात् "पिण्डयज्ञं ततः कुर्यात्" इत्याद्येकवाक्यतया च पिण्डपितृयज्ञपर एव सः । अनेकार्थो हि सः । तत्र तर्पणबलिदाननित्यश्राद्धरूपवैकल्पिकप्रकारत्रययुक्ते पञ्चमहायज्ञान्तर्गते प्रयोगात् । तादृशस्य चैकस्मिन् प्रयोगे एकार्थपरत्वावश्यंभावेऽन्यतो निर्णयसंभवात् । पिण्डान्वाहार्यकनामनिर्वचनेन प्रशंसार्थं मानवं वचनान्तरमपीदमेव द्योतयति "पिण्डानां मासिकं श्राद्धमन्वाहार्यं विदुर्बुधाः" इति । पिण्डानां पितृयज्ञपिण्डानामन्वाहार्यं तत्सम्बद्धं तद्वदवश्यकर्तव्यमिति प्रशंसार्थमुच्यते । अवश्यकर्त्तव्यत्वस्यापि मासानुमासिकमित्यनेनैव सिद्धत्वात् । नाप्यङ्गत्वार्थम् । कृतार्थत्वात् । पितॄणामिति पाठे तु स्पष्टैव प्रशंसा—

"यथान्वाहार्यमोदनं दर्शपूर्णमासयोरृत्विजां तृप्त्यर्थं तथेदं श्राद्धं पितॄणामेकमासतृप्त्यर्थम्" इति। तेन पिण्डपितृयज्ञान्तरानुष्ठेयत्वनिमित्तकमेव पिण्डान्वाहार्यकसमाख्यानम्।

मत्स्यपुराणे तु तर्पणाख्यपितृयज्ञोत्तरकालत्वमेव दर्शश्राद्धस्योच्यते। तर्पणं च यद्यपि "पितृयज्ञस्तु तर्पणम्" इति मनुवचने मेधातिथिना "एकमप्याशयेद्विप्रं पित्रर्थं पाञ्चयज्ञिये" इति मनुनैवोक्तो यो ब्राह्मणभोजनात्मकः पितृयज्ञस्तद्रूपत्वेन व्याख्यातम्,। तथापि दर्शे श्राद्धरूपस्य पञ्चमहायज्ञान्तर्गतपितृयज्ञस्य दर्शश्राद्धादेव प्रसङ्गसिद्धत्वेन पृथगभावाद्दर्शश्राद्धस्य तत्पश्चाद्भावविधानानुपपत्तेः श्राद्धबलिदानरूपपितृयज्ञप्रकारद्वयासमर्थस्य योऽनुकल्पभूतो जलतर्पणरूपः पितृयज्ञप्रकारः—

"यदेव तर्पयत्यद्भिः पितॄन् स्नात्वा द्विजोत्तमः।
तेनैव सर्वमाप्नोति पितृयज्ञक्रियाफलम्"॥

इति मनुवचने परिशिष्टादौ चोक्तः स एवात्र गृह्यते तर्पणपदेन। तत्पश्चाद्भावश्च यद्यपि स्नातस्य श्राद्धविधानादेव प्राप्तः। स्नानस्य तर्पणान्तत्वात्। सर्वान्ते कात्यायनेनैव "स्नानविधिः" इत्युपसंहारात्। तथाप्यग्निमतः श्राद्धदिने तर्पणरूप एव पितृयज्ञो भवति यज्ञो भवति न तु पिण्डबलिनित्यश्राद्धरूपोऽपीत्येवमर्थं तर्पणपुनर्वचनम्। छन्दोगपरिशिष्टे हि त्रिप्रकारः पितृयज्ञ उक्तः—"पितृयज्ञस्तु तर्पणम्, श्राद्धं वा पितृयज्ञः स्यात्पित्र्यो बलिरथापि वा,, इति। वाशब्दौ चत्वर्थौ। अत एव—

"निर्वर्त्य प्रणिपत्याथ पर्युक्ष्याग्निं समन्त्रवत्।
वैश्वदेवं प्रकुर्वीत नत्यकं बलिमेव च"॥

इति मत्स्यपुराणे, "वैश्वदेवं ततः कुर्यान्निवृत्ते पितृकर्मणि,, इति-

वचनान्तरे च नित्यश्राद्धं नोक्तम्। बलिरपि न पितृभ्यः किन्तु गृहबलिः। अत एव किल मनुनापि साग्निककर्तृकश्राद्धोत्तरमुक्तम्।

"उच्छेषणं तु तत्तिष्ठेद्यावद्विप्रान् विसर्जयेत्।
ततो गृहबलिं कुर्यादिति धर्मो व्यवस्थितः" ॥ इति।

तेन साग्निकस्य श्राद्धदिनातिरिक्त दिने निरग्नेस्तु श्राद्धदिनेऽपि त्रिप्रकारोऽपि पितृयज्ञो भवति। श्राद्धदिने तु साग्निकस्य तर्पणरूप एवेति स्वच्छन्दव्यवहारिणः परिशिष्टप्रकाशकृच्छूलपाणिप्रभृतयो मन्यन्ते। तत्र यत्तावदुक्तं तर्पणपश्चाद्भावः स्नानपश्चाद्भावादेव श्राद्धस्य प्राप्त इति।

तदयुक्तम्। कातीयानुसारिणां हि कथञ्चित्तर्पणं स्नानप्रयोगान्तर्गतं स्यान्न तु सर्वेषाम्। आश्वलायनेन तावत् "अप आप्लुत्य" इति स्नानोत्तरं ब्रह्मयज्ञं विधाय तत्संदंशेन तर्पणं विहितम्। स्मृतिष्वपि "स्नात्वा देवान् पितॄंश्चैव तर्पयेदर्चयेत्तथा" इति स्नानप्रयोगाद्बहिरेव तद्विहितम्। वस्तुतस्तु कातीयसूत्रेऽपि मुख्यत्वादुपसंहारे स्नानसंकीर्त्तनं प्रदर्शनार्थं स्नानं तु वासःपरिधानान्तमेव, उपस्थानब्रह्मयज्ञतर्पणादिकं पृथगेव प्रधानम्। स्नात्येकवाक्यत्वादेकस्मिन्दिने नानातीर्थादिस्नानप्राप्तौ सकलानुष्ठानस्य तावत्कृत्वः प्रसङ्गाच्च।

तेन स्नानपश्चाद्भावोक्त्या तर्पणपश्चाद्भावस्य नियमेनाप्राप्तेस्तन्नियमविधानसंभवे परिसंख्यात्वाङ्गीकरणमनुचितम्। किञ्च तदङ्गीकरणेऽपि तर्पणरूप एव पितृयज्ञः श्राद्धात्पूर्वं कर्त्तव्यो न तु श्राद्धबलिदानरूप इत्येवं पूर्वकालमात्रे सा स्यान्न तु तद्दिन एव नेति। त्रिरूपोऽपि पितृयज्ञः समुच्चयेन कर्त्तव्य इत्येतदप्ययुक्तम्।

तथाहि। त्रिरूपः पितृयज्ञ इत्यस्य कोऽर्थः। किं तर्पणबलिदानश्राद्धरूपाणि भिन्नानि त्रीणि कर्माण्यदृष्टार्थत्वसमुच्चयार्हाणि,

तान्येव पितृयज्ञसंज्ञकानि न तु पितृयज्ञो नाम ततो भिन्नं किञ्चि-त्कर्मेति। अथवा पितृयज्ञा एवैकं कर्म। तस्य प्रकाराकाङ्क्षायां समुच्चितमिदं प्रकारत्रयम्। तत्समुच्चयसिद्धये च सोऽभ्यस्यत इति।

द्वेधाप्ययुक्तः समुच्चयः। तत्राद्यपक्षे तावत्संज्ञासंज्ञिसम्बन्ध-मात्रपराणि "पितृयज्ञस्तु तर्पणम्, श्राद्धं च" इत्यादिवाक्यानि। त्रयाणामेकसंज्ञाकरणस्य च न चातुर्मास्यादिवत्सौकर्येण युगपत्सं-कल्पादिसिद्धिः प्रयोजनम्। एकप्रयोगविधिपरिग्रहैकफलत्वयोर-भावात्। नापि वैश्वदेवादिवद्गुणोपबन्धसिद्धिस्तदभावात्। तत्रावश्यं सवनीयसमाख्ययेव सवनीयपशूनामाग्नेयैन्द्राग्नादीनां पितृयज्ञसमा-ख्ययैकया त्रयाणामेककार्यत्वं वक्तव्यम्। प्रयाजादिसमाख्यया तु नैकप्रयोजनता। गुणोपबन्धादिप्रयोजनान्तरसंभवात्तस्याः। ततश्चैवां त्रयाणां समाख्यैकत्वेनैककार्यत्वादसत्यपि वचने विकल्पः स्यात्। किमुत वाशब्दयुक्ते आहत्य विकल्पवचने। तद्वशादपि चैककार्यता। तदभावे विकल्पासंभवात्। सवनीयानां तु वचनात्सिद्धान्ते समुच्चयः। तदाह जैमिनिः-"वचनात्तु समुच्चयः" इति।

द्वितीये तु पक्षे पितृयज्ञभावनाया यत्किञ्चिदेकप्रकारापेक्षायां वचनेन पित्र्यबलिदानश्राद्धरूपौ मुख्यौ द्वौ प्रकारौ तर्पणरूपश्चानु-कल्पप्रकारो विकल्पितो विधीयन्त इति स्पष्ट एव समुच्चयः। एकेन प्रकारेण नैराकाङ्क्ष्यात्प्रधानावृत्तेरन्याय्यत्वाद्वचनाच्च। वाशब्द-श्चार्थ इति तु निःप्रमाणकमभिधानं महन्न्यायकौशलमाविष्करोति।

मनुना तु श्राद्धरूप एव पितृयज्ञप्रकारोऽभिहितः। "दद्यादहरहः श्राद्धम्" इति नामधेयेन चोदनासामान्येन वा प्राप्तदर्शश्राद्धप्रकार-विशिष्टं कर्मोत्पाद्य तदन्तर्गतब्राह्मणसंख्यावैश्वदेविकपूजानिवृत्त्यर्थं-

"एकमप्याशयेद्विप्रं पित्रर्थं पाञ्चयज्ञिके।
न चैवात्राशयेत्कञ्चिद्वैश्वदेवं प्रति द्विजम्"।

इत्युत्तरवचने पाञ्चयज्ञिय इत्यभिधानात्।

"पितृयज्ञस्तु तर्पणम्" इत्यनेन चैतस्यैव ब्राह्मणतर्पणस्य पितृयज्ञसंज्ञाकरणात्। "यदेव तर्पयत्यद्भिः" इति त्वनुकल्प इत्युक्तमेव। विकल्पमभिप्रेत्यैव चाश्वलायनसूत्रवृत्तिकृता सूत्रे पित्र्यबलिदानस्यैवाम्नानात्तस्यैव च देवभूतयज्ञप्रायपाठात् "यत्पितृभ्यो ददाति स पितृयज्ञः" इति सूत्राच्च पितृयज्ञरूपत्वात् "दद्यादहरहः श्राद्धम्" इति मनूक्तो ब्राह्मणभोजनपर्यवसन्नः श्राद्धरूपः पितृयज्ञस्तत्सूत्रानुसारिभिर्न कार्य इत्युक्तम्।

यत्र तु सूत्रेषु स्मृतिषु वा द्वयमप्याम्नातं तत्रापि पितृयज्ञरूपतान्यतरस्यैव। यथागमकं वचनबलात्त्वन्यदपि क्रियते। दर्शादिश्राद्धदिनेऽपि पश्चात्पृथङ्नित्यश्राद्धकर्त्तव्यत्वाभिधानं तु प्रसङ्गन्यायाज्ञानमूलकम्। अत एव मत्स्यपुराणादौ श्राद्धोत्तरकर्त्तव्यमध्ये तदनभिधानम्। पित्र्यबलिदानं तु पृथक्कर्त्तव्यमेव तत्र। "स्वधा पितृभ्यः" इति बहुवचनान्तपितृशब्दबलेन तस्य "देवा मनुष्याः पितरः" इति प्रायपठितसाधारणपितृदेवत्यत्वात् श्राद्धेन प्रसङ्गादसिद्धेः। तस्य पितृशब्दस्य जनकपरत्वे बहुवचनान्वयार्थं पितामहादिलक्षणापत्तेः। तत्र च प्रमाणाभावात्। तच्च श्राद्धान्त एव प्रागुदाहृतमार्कण्डेयात्। यज्ञत्रयात्मकं ह्याश्वलायनादीनां वैश्वदेवम्। येषामपि देवयज्ञ एव वैश्वदेवं तेषामपि तदुत्तरभावित्वात्तच्छ्राद्धान्त एव। अत एव मनुवचनगतं गृहबलिग्रहणं सकलोपलक्षणत्वेन मेधातिथिना व्याख्यातम्। एतच्च वैश्वदेवस्य श्राद्धान्तेऽनुष्ठानं केवलौपासनिकस्य। आहिताग्नेस्तु श्राद्धात्पूर्वमेव। येषां यावद्वैश्वदेवं तावत् "पक्षान्तं कर्म निर्वर्त्य" इति वचनात्।

तेन यत्पिण्डान्वाहार्यकसमाख्यातदर्शश्राद्धानुष्ठातुराहिताग्नेरपि मनुवचनस्य तद्विषयत्वमप्यङ्गीकृत्य श्राद्धान्ते वैश्वदेवाभिधानं

परिशिष्टप्रकाशादौ तदयुक्तमेव । तेन स्नानपश्चाद्भावविधानादप्राप्तः प्रधानभूतपश्चाद्भाव एव मत्स्यपुराणवाक्ये विधीयतां नाम । मनुवचने-तु पिण्डपितृयज्ञपश्चाद्भाव एव विधीयत इति तन्निमित्तकमेवेदं दर्श-श्राद्धस्य पिण्डन्वाहार्यकसमाख्यानम् । तादृशं च तत् पिण्डपितृ-यज्ञाधिकारिणः साग्निकस्यैव संभवतीति तद्विषयमेवैवमुपक्रमं सर्वदर्शनिर्णयार्थं छन्दोगपरिशिष्टं मनुवचनं च । न तु सर्व-विषयम् । इतरान्प्रति तत्समाख्याऽसंभवात् । यदप्यन्यथान्वर्थ-त्वमस्याः समाख्याया मत्स्यपुराण उक्तम्—

"यस्मादन्वाहृता मात्रा भक्षयन्ति द्विजातयः ।
अन्वाहार्यकमित्युक्तं तस्मात्तच्चन्द्रसंक्षये" ॥ इति ।

तदपि न सर्वविषयं संभवति । प्रायः सर्वगृह्यस्मृतिषु ब्राह्मण-भोजनोत्तरमेव पिण्डदानविधानदर्शनात् । ब्राह्मणानां पिण्डैकदेश-भक्षणविधानादर्शनाच्च । किन्तु—

"पिण्डेभ्यस्त्वल्पिकां मात्रां समादायानुपूर्वशः ।
तानेव विप्रानासीनान्विधिवत्पूर्वमाशयेत्" ॥

इति मनूक्तश्राद्धे प्रकारानुष्ठातृविषयमेव ।

यदपि "ततः प्रभृति पितरः पिण्डसंज्ञां तु लेभिरे" इति मात्स्यात् पितृणामपि पिण्डशब्दवाच्यत्वात्, "पिण्डानां मासिकं श्राद्धमन्वाहार्यं विदुर्बुधाः" इति मनुवचनोपदर्शितपूर्वव्याख्यातयोग-निमित्ता सा सर्वान्प्रति संभवतीति कैश्चिदुक्तम् । तदपि काचित्कबृह-द्रथन्तरादिगोचरपृष्ठशब्दप्रयोगनिमित्तप्रदर्शनार्थस्पर्शनप्रभवत्वार्थवा-दवत्, "ततः प्रभृति" इत्यस्यापि काचित्कपितृगोचरपिण्ड-शब्दप्रयोगनिमित्तप्रतिपादकार्थवादमात्रत्वात्पिण्डेषु संज्ञामुद्देशं लेभिर इत्यर्थकत्वाद्वा न युक्तम् । क्वचिच्च पिण्डशब्दस्य लक्षणया पितृषु प्रयोगेऽपि समाख्यान्तर्गतस्य संभवन्मुख्यत्वस्य तथात्वे प्रमाणाभावात् । तेन परिशिष्टोक्तो वासरतृतीयांशबोधा-

विभागपक्षापराह्णरूप आहिताग्नेरेव दर्शश्राद्धकालः । तं प्रत्येव पिण्डपितृयज्ञश्राद्धोभयानुष्ठानार्थं दीर्घापराह्णापेक्षणात् ।

अत एवातिसन्ध्यासमीपरूपो दिवान्त्यमुहूर्त एव तं प्रति निषिध्यते न तु "सायाह्नस्त्रिमुहूर्तः स्याच्छ्राद्धं तत्र न कारयेत्" इति सकलसायाह्ननिषेधस्तं प्रति । तथात्वे पञ्चमुहूर्तात्मकदिनतृतीयभागरूपापराह्णमध्येऽवशिष्टयोरेकादशद्वादशमुहूर्तयोरुभयानुष्ठानासंभवात् । पिण्डपितृयज्ञोऽपि हि "पूर्वाह्णो वै देवानाम्" इत्यादितत्प्रकरणपठितश्रुत्या तत्रैव विहितः । तेन वासरतृतीयांशोऽपि पञ्चधाविभागापराह्णपर्यवसन्न एव "नातिसंध्यासमीपतः" इति सकलसायाह्ननिषेधादिति माधवोक्तिर्निरस्ता वेदितव्या । अतीत्यस्य वैयर्थ्याच्च । एतेनैव "अमावास्यामपराह्णे पिण्डपितृयज्ञेन चरन्ति" इति पिण्डपितृयज्ञे, "अपराह्णे च पार्वणम्" इति च श्राद्धे संज्ञाविध्यर्थत्वाय पञ्चधाविभक्तदिनचतुर्थभागरूपस्यैवापराह्णस्योभयत्रापि ग्रहणम् ।

एवं सति यदेकादशादिमुहूर्तपञ्चकस्य परिशिष्टवचने श्राद्धे विधानं तदेव पिण्डान्वाहार्यकसमाख्यायाः पिण्डपितृयज्ञानन्तरभावाभावेऽप्यन्यथाप्यन्वर्थत्वसंभवेऽपि दशममुहूर्ते पञ्चधाविभागपक्षापराह्णान्तर्गते पिण्डपितृयज्ञानुष्ठानं सूचयति । "नातिसन्ध्यासमीपतः" इत्यन्तिममुहूर्तनिषेधश्च समस्तसायाह्ननिषेधेऽपि तदन्तर्गतयोस्त्रयोदशचतुर्दशमुहूर्तयोरापद्यभ्यनुज्ञार्थो इति यत्परिशिष्टप्रकाश उक्तं तदपहस्तितं वेदितव्यम् । न च विषयविशेषे पारिभाषिकापराह्णग्रहणेऽपि तस्यानर्थक्यम् । विषयान्तरे तस्यैव ग्रहणात् । उचिता च श्रुत्यविषये विशेषाविषये च सामान्यतः परिभाषितस्य पौराणिकस्यापराह्णस्य प्रवृत्तिः ।

यत्त्वाश्वलायनसूत्रवृत्तिकृता चतुर्थभागपदेन पञ्चधाविभागेनैवाऽपराह्णो व्याख्यातः । चतुर्धाविभागे चतुर्थभागस्यापराह्णशब्दावाच्यत्वात् । तदपि त्रेधाविभागपक्षापराह्णे पञ्चधाविभागपक्षापराह्णस्य

मुहूर्त्तद्वयेनान्तर्गतत्वादविरोधि। यथा च तत्रैव मुहूर्त्तद्वये "अपराह्णे पितॄणां तु तत्र दानं प्रशस्यते" इति वचनाच्छ्राद्धस्याप्युपक्रमो भवति। तथा पिण्डपितृयज्ञः कर्त्तव्यस्तीव्रेण प्रयत्नेन, शिथिलप्रयत्न-प्रकृतेस्तत्रैवोपक्रमस्य तत्समापनाशक्तौ तत्पूर्वभाविनि दशममुहूर्त्तेऽपि तदुपक्रमः कर्त्तव्य इत्येवमर्थमिति।

तस्माद्दर्शेष्टयङ्गान्वाधानोत्तरानुष्ठेयपिण्डपितृयज्ञोत्तरं दर्शश्राद्धानुष्ठातॄणां त्रेधाविभागपक्षापराह्ण एव श्राद्धकालस्तेषामेव च सः। पिण्डान्वाहार्यकसमाख्यापि तत्कर्तृकदर्शश्राद्धविषयैवेति छन्दोगपरिशिष्टोक्तो दर्शनिर्णयस्तु तद्विषय एव। तत्रापि यैः पश्चाच्चन्द्रदर्शनवति प्रतिपद्दिने दर्शेष्टिनिषेध आद्रियते तेषामेव। "सन्ध्यां पौर्णमासीमुपवसेत्" "पक्षान्ता उपवस्तव्याः" इत्येवमुपक्रमकाणाम्—"यदहस्त्वेव चन्द्रमा न दृश्यतेताममावास्यां कुर्वीत, दृश्यमानेप्येकदा (१), गताऽवा

(१) द्वितीयपुस्तके त्वत्राय' पाठोऽधिको वर्तते—

"दृश्यामानेप्येकदा गता" कलावशिष्ट इत्यग्रे परमसूक्ष्मताया अभिधानात्। अमावास्यासप्तमांशे च कृत्स्नक्षयः। तेन परमसूक्ष्मता कृत्स्नक्षयश्च द्वयं क्षयशब्दवाच्यम्। यद्यपि च पुनःशब्दवशाद्यादृशी परमा सूक्ष्मता चतुर्दश्यष्टमभागे तादृश्येवामावास्याष्टमभागेऽपि। न च तद्गता सा चन्द्रक्षयशब्दवाच्या। तथा सत्यमावास्यायाश्चन्द्रक्षयाव्यभिचारात्तेन विशेषणं व्यर्थं स्यात्। अत एव चतुर्दश्यष्टमभागकृत्स्नामावास्यात्मकरूपं चन्द्रक्षयकालस्य कैश्चित्परिशिष्टभाष्यकारैरुक्तमयुक्तम्। तथापि कृत्स्नक्षययोगिनी परमसूक्ष्मता विवक्षिता। न च तदुत्तरभावि" इति।

अत्रायं पाठस्तावदसम्बद्धः किन्तु ५४८ पृष्ठे १६ पङ्क्तौ संगच्छते। मुद्रणाधारपुस्तकेऽपि च तत्रैवोपात्तः। द्वितीयपुस्तके तु स्थलद्वयेऽप्युपात्तः।

भवति" इति सूत्राणां मध्ये आद्यस्य दर्शाङ्गभूतोपवासविषयत्वात्। उत्तरयोः श्राद्धविषययोरुपवासाधिकारिकर्तृकश्राद्धविषयत्वस्य स्पष्टं प्रतीतेः। परिशिष्टस्य च तत्तात्पर्यव्याख्यानेन तदनुसारित्वात्।

किञ्च। गताध्वसूत्रे—

"संमिश्रा या चतुर्दश्या अमावास्या भवेत् क्वचित्।
खर्विकां तां विदुः केचिद् गताध्वामिति चापरे"॥

इति च परिशिष्टे सायाह्नवर्त्यमावास्यायुक्ताया आपराह्णिकाष्टमांशावच्छिन्नायाश्चतुर्दश्या एव "अष्टमेऽशे चतुर्दश्याः क्षीणो भवति चन्द्रमाः" इत्युक्तचन्द्रक्षययोगेनामावास्यात्वसंपत्त्युक्त्या तादृशचतुर्दशीमिश्रपूर्वामावास्याया एवोपवासश्राद्धार्हत्वं यदुक्तम्। तदमावास्यात्वेनाक्षिप्य समादधता तद्भाष्यकारेण पूर्वस्यां सोमक्षययुक्तापराह्णसम्पत्तिम्, उत्तरस्यां च "अमावास्याष्टमांशे च पुनः किल भवेदणुः" इति वचनात्तदसम्पत्तिमेकं हेतुमुक्त्वोत्तरस्यां तदनुष्ठाने तदुत्तरद्वितीयामिश्रप्रतिपद्दिने पश्चाच्चन्द्रदर्शनवति यागानुष्ठानप्रसङ्गस्तत्र च प्रायश्चित्तापत्तिरिति द्वितीयो हेतुरुक्तः।

यदि च चतुर्दशीमिश्रामावास्यापेक्षयामावास्यायाः प्रतिपदश्च विवृद्ध्या प्रतिपन्मिश्रामावास्यायामप्यपराह्णे किञ्चिच्चन्द्रक्षयैकदेशस्तदुत्तरयागदिने च पश्चाच्चन्द्रादर्शनं लभ्यते तदा तयोरेव यथाक्रममुपवासयागयोरनुष्ठानमिति च—

"वर्धमानाममावास्यां लभेच्चेदपरेऽहनि।
यामांस्त्रीनधिकान्वापि पितृयज्ञस्ततो भवेत्"॥

इति परिशिष्टवचनोपन्यासेन तत्रैव दर्शितम्।

तदेवं दर्शतदङ्गभूतोपवासकालविवेचनार्थयोर्गृह्यतद्भाष्ययोः श्राद्धपिण्डपितृयज्ञविषयपरिशिष्टोपजीवनात्तस्मिंश्च परिशिष्टे तादृशतदुपजीवनात्त्रयाणामप्युपवासादीनामेकदिनेऽनुष्ठानम्। येषां चानुष्ठातॄणां तत्तद्विषयमेव दर्शश्राद्धकालविवेचनार्थं परिशिष्टमिति स्पष्टं तद्ग्रन्थालोचया प्रतीतौ यत्पिण्डान्वाहार्यकसमाख्याया यथाकथञ्चित्साग्निनिरग्निसाधारणान्वर्थतासम्पादनेन परिशिष्टोक्तव्यवस्थाया अपि तत्साधारण्याभिधानं गौडानां तत्तन्मात्रालोचनमूलकमनादृत्यम्।

तेन तादृशानुष्ठानकर्तॄन्साग्निकान्प्रति यागकालानुरोधेन परिशिष्टानुसारेणामावास्या निर्णीयते।

तत्र तृतीयभागरूपोऽपराह्णस्तावत्तान्प्रति श्राद्धकाल इत्युक्तम्। तत्रापि चन्द्रक्षयकालः प्रशस्तः। 'क्षीणे राजनि शस्यते" इति वचनात्। स च कालः परिशिष्ट एवोक्तः।

"अष्टमेंऽशे चतुर्दश्याः क्षीणो भवति चन्द्रमाः।
अमावास्याष्टमांशे च पुनः किल भवेदणुः" ॥ इति।

क्षीणश्चतुर्थभागोनकलावशिष्टः। चतुर्थभागोनकलावशिष्ट इत्यग्रे परमसूक्ष्मताया अभिधानात्। अमावास्यासप्तमांशे च कृत्स्नक्षयः। तेन परमसूक्ष्मता कृत्स्नक्षयश्च द्वयं क्षयशब्दवाच्यम्।

यद्यपि च पुनःशब्दवशाद्यादृशी परमसूक्ष्मता चतुर्दश्यष्टमभागे तादृश्येवामावास्याष्टमभागेऽपि। न च तद्गता सा चन्द्रक्षयशब्दवाच्या। तथा सत्यमावास्यायाश्चन्द्रक्षयाव्यभिचारात्तेन विशेषणं व्यर्थं स्यात्। अत एव चतुर्दश्यष्टमभागकृत्स्नामावास्यात्मकप्रहरनवकरूपत्वं चन्द्रक्षयकालस्य कैश्चित्परिशिष्टभाष्यकारैरुक्तमयुक्तम्। तथापि कृत्स्नक्षयोपयोगिनी परमसूक्ष्मता विवक्षिता। न च

तदुत्तरभाविन्यमावास्याष्टमभागगता सा तादृशी भवति ।मार्गशीर्ष-ज्यैष्ठामावास्ययोस्त्वितरविलक्षणा अष्टयामव्यापिता क्षयस्येत्युक्तं तत्रैव ।

"आग्रहायण्यमावास्या तथा ज्यैष्ठस्य या भवेत् ।
विशेषमाभ्यां ब्रुवते चन्द्रचारविदो जनाः" ॥

"अत्रेन्दुराद्ये प्रहरेऽवतिष्ठते चतुर्थभागोनकलावशिष्टः ।
तदन्त एव क्षयमेति कृत्स्न एवं ज्योतिश्चक्रविदो वदन्ति" ॥

आभ्यां अनयोः । तदन्त एवामावास्यान्त एव । मलमासयुताब्दे त्वनयोरपीतरतुल्य एव क्षय इत्युक्तम् । यस्मिन्नब्दे द्वादशैकश्च यव्यस्तस्मिंस्तृतीयापरिदृश्यो नोपजायेत । यव्यो मासः । तृतीयया चतुर्थभागमात्रोनत्वात्त्रिभागमात्रावशिष्टया कलया परिदृश्योऽनयो-रप्यमावास्ययोराद्ययामे न जायते नावतिष्ठते । किन्तु इतरमा-सवदत्रानयोरप्यमावास्ययोश्चतुर्दश्यन्त्ययाम एव चतुर्थभागो-नकलावशिष्टत्वाच्चन्द्रस्य तदधिकभागोनत्वात्त्रिभागमध्येऽपि किञ्चि-न्न्यूनकलावशिष्टतयावतिष्ठत इत्यर्थः ।

अत्र च पौर्णमास्यन्तौ ज्यैष्ठमार्गशीर्षाविति परिशिष्टप्रकाशकारः ।

हेमाद्रिरपि "वृषस्थे चन्द्रे ज्यैष्ठस्यामावास्या वृश्चिकस्थे च मार्गशीर्षस्य" इति वदंस्तथैव मन्यते । अत्र च मूलं ज्योतिःशास्त्रमेव । ज्योतिश्चक्रविदो वदन्तीत्यभिधानात् । "ते च चन्द्रस्य परमोच्चनीच-स्थाने" इत्यादि ज्योतिःशास्त्रसम्बन्धिवासनाया एव हेमाद्रिणा-भिधानाच्च ।

यत्तु तिथितत्त्वकृता "पयोमूलफलैः शाकैः कृष्णपक्षे च सर्वदा" इति वचनेनैव ब्रह्मपुराणेऽमावास्याश्राद्धस्यापि विधानाद्ब्रह्मपुरा-

णीयतिथिकृत्यत्वमत्र पौर्णमास्यन्तमासग्रहणे बीजमुक्तम्। तदेतत्प्रकरणादावमावास्याश्राद्धस्य कृष्णपक्षश्राद्धाङ्गत्वव्यवस्थापनादयुक्तम्। एवं चन्द्रक्षयकालमुक्त्वा तस्य प्रयोजनं "क्षीणे राजनि" इति पूर्वोपक्षिप्तमेवोपसंहृतं तत्रैव। एवं चारं चन्द्रमसो विदित्वा क्षीणे तस्मिन्नपराह्णे च दद्यादिति।

एवं सति तृतीयभागरूपापराह्णव्याप्तौ कालव्याप्तिविषयपक्षषट्कमध्ये त्रिमुहूर्ताधिकवृद्धिक्षयाभावेन दिनद्वये समस्ततद्व्याप्तितदस्पर्शपक्षयोरसंभवाच्चत्वार एव पक्षाः संभवन्ति। पूर्वेद्युरेव परेद्युरेव वा कार्त्स्न्येनैकदेशेन वा तद्व्याप्तिः। दिनद्वयेऽपि साम्येन वैषम्येण वा तदेकदेशस्यैव व्याप्तिरिति।

तत्रैकस्मिन्नेव दिने कृत्स्नकालव्याप्तिरितरदिने तदस्पर्शेनैकदेशव्याप्त्या वा भवति। तत्र तदस्पर्शश्चतुर्दश्यपेक्षयामावास्यायाः साम्येनाधिक्येन क्षयेण वा। यथा दशमुहूर्ता चतुर्दशी दशमुहूर्तामावास्या, नवाष्टसप्तमुहूर्ता चतुर्दशी दशमुहूर्ता परा, दशमुहूर्ता चतुर्दशी नवाष्टादिमुहूर्ता परेति। पञ्चदशमुहूर्ता पूर्वा तावत्येव परा, तावत्येव पूर्वा षोडशादिमुहूर्ता परा,तादृशी पूर्वा पञ्चदशमुहूर्ता परेति वा। एकदेशव्याप्ति राधिक्येनैव। यथा पूर्वत्रैकादशमुहूर्तमारभ्य प्रवृत्तोत्तरत्रैकादशत्रयोदशादिमुहूर्तपर्यन्तामावास्या, उत्तरत्र पञ्चदशमुहूर्तपर्यन्ता पूर्वत्र त्रयोदशादिमुहूर्तमारभ्य प्रवृत्ता चेति। एकस्मिन्नेव दिने कालैकदेशव्याप्तिः क्षयेणैव। यथा पूर्वत्र द्वादशादिमुहूर्तमारभ्य प्रवृत्तोत्तरत्र नवमदशममुहूर्तपर्यन्ता, उत्तरत्र द्वादशत्रयोदशादिमुहूर्तपर्यन्ता पूर्वत्र षोडशादिमुहूर्तमारभ्य प्रवृत्ता चेति। दिनद्वयेऽपि साम्येनैकदेशव्याप्तिरपि वृद्ध्या साम्येन क्षयेण वा। यथा द्वादशत्रयोदशमुहूर्तमारभ्य प्रवृत्ता द्वादशैकादशपर्यन्तेति। एवं वैषम्येणैकदेशव्याप्तिरपि। यथा द्वादशमुहूर्तमारभ्य प्रवृत्ता द्वादशपर्यन्ता, द्वादशत्रयोदशमुहूर्तमारभ्य प्रवृत्तैकादशद्वादशपर्यन्ता,

त्रयोदशमारभ्य प्रवृत्तैकादशपर्यन्ता च। चतुर्दशपर्यन्ता चतुर्दशमारभ्य प्रवृत्ता, चतुर्दशत्रयोदशपर्यन्ता पञ्चदशं चतुर्दशं वारभ्य प्रवृत्ता, त्रयोदशपर्यन्ता पञ्चदशमारभ्य प्रवृत्ता चेति। तत्र या पूर्वेद्युरेव कृत्स्न-कालव्यापिनी, उत्तरत्र तदेकदेशमपि न स्पृशति सा तावत्पूर्वैव भवति। तत्र कदाचिच्चतुर्दश्यपेक्षयामावास्याया दशमुहूर्तमध्ये वृद्धावपि वर्धमानावाक्यविषयभूतायास्तस्या अभावात्। यापि तादृशी, उत्तरत्र च तदेकदेशव्यापिनी सापि पूर्वैव। यदि यजनीयदिने चन्द्र-दर्शनादेकदेशव्याप्तिदिने एव यागः। कृत्स्नकर्मकालव्याप्तिलाभात्तत्र चन्द्रक्षयलाभादुत्तरत्र तदलाभाद्यागेनावरोधाच्च।

न च वर्धमानावाक्यविरोधः। तत्रापि यागदिनगतचन्द्रादर्शन-प्रयोजिकायाः प्रतिपद्वृद्धिसहिताया अमावास्यावृद्धेर्विवक्षितत्वात्। अत एव यदि वृद्ध्या चन्द्रादर्शनात्प्रतिपद्येव यागस्तदा तदनन्तरपूर्वदि-नकर्तव्यान्वाधानानुरोधेन त्रयाणामैककाल्यनियमाच्छ्राद्धमप्येकदेश-व्याप्तिदिन एव भवति। कृत्स्नकालव्यापिनीं तद्गतचन्द्रक्षयवतीमपि पूर्वां परित्यज्य। अत एव गोभिलगृह्यभाष्ये क्षीयमाणावाक्यात्पूर्वस्या वर्धमानावाक्याच्चोत्तरस्या यद्ग्राह्यत्वं तद्यागदिनगतपश्चाच्चन्द्रदर्शना-दर्शनप्रयुक्तमेव निष्कृष्टं प्रतीयते। तेनैतत्प्रयुक्तनिर्णयविरुद्धश्चन्द्रक्षया-पराह्णशास्त्रपक्षपातोऽपि त्याज्यः। अत एवोभयत्रापि शस्यत इत्युक्तम्।

या त्वेकदेशमपि पूर्वेद्युरेव व्याप्नोति सा सुतरां पूर्वा। तथा च परिशिष्टम्—

"यदा चतुर्दशी यामं तुरीयमनुपूरयेत्।
अमावास्या क्षीयमाणा तदैव श्राद्धमिष्यते" ॥ इति।

चतुर्दश्या भूयश्चतुर्दशीयुक्तस्य दिनस्य "आधिक्येन हि व्यपदेशाः" भवन्ति। याममित्यर्थं। तदनुपूरणं च समतस्तद्व्यापनेनापि भवति।

तदेकदेशप्रवेशेन च। अत एव "त्रिमुहूर्त्तापि कर्त्तव्या" इति वचनानन्तरम्। तृतीयभागैकदेशव्याप्तिमात्रं तु विवक्षितम्। क्षीयमाणा चतुर्दश्यपेक्षया। यागदिनगतचन्द्रदर्शनप्रयोजकक्षयवती। न तु वासरतृतीयांशे क्षीयमाणा तदस्पर्शिनीति व्याख्या युक्ता। तत्र कर्मकालव्याप्तिवशादेव पूर्वाग्रहणसिद्धेरेतस्य वैयर्थ्यापत्तेः।

उपोद्बलकमात्रत्वेन तत्रैतस्योपन्यासात्। पूर्वदिने किञ्चिदूनचतुर्मुहूर्त्तात्मकसमस्तचतुर्थयामपूरणस्य विवक्षितत्वेऽप्युत्तरदिने दण्डमात्रादिक्षयेण तृतीयभागान्तर्गतकिञ्चिदधिकाद्यमुहूर्त्तैकदेशव्याप्तेः संभवात्। तत्रापि चैतद्वचनप्रवृत्तेरुपपत्तेश्च। वृद्धेश्च चतुर्दश्यपेक्षत्वात्। क्षयस्यापि तादृशस्यैव ग्रहणौचित्यात्। अत एव दिनद्वयेऽपि क्षयेणैकदेशसमव्याप्तावेतद्वचनवशादेव पूर्वा भविष्यति। तत्रैव चैतस्य वचनपरभागः। अन्यत्र कालव्याप्तिलाभाधिक्यादिनापि निर्णयसंभवात्।

नन्वेवं पूर्वस्यां श्राद्धानुष्ठाने उपवासपितृयज्ञाभ्यामपि तत्रैव भवितव्यम्। तत्र च "यदहरेष न पुरस्तान्न पश्चाद्ददृशे" इति, "यदहस्त्वेवं चन्द्रमा न दृश्येतताममावास्यां कुर्वीत" इति च श्रुतिसूत्राभ्यामुपवासकालविधायकाभ्यां विरोधः। पूर्वस्यां सिनीवाल्यां पुरस्ताच्चन्द्रदर्शनस्यावश्यंभावात्। इत्यतः परिशिष्टान्तरं—

"यदुक्तं यदहस्त्वेव दर्शनं नैति चन्द्रमाः।
तत्क्षयापेक्षया ज्ञेयं क्षीणे राजनि चेत्यपि" ॥ इति।

अर्थानुभाषणं चैतच्छ्रुतेः सूत्रस्य च। क्षीणे राजनीति तु स्ववाक्यस्यैव।

नन्वदर्शनविषयायाः श्रुतेः क्षयपरत्वेन पौरुषेये व्याख्याने किं मूलम्। सूत्रस्य तु तथा व्याख्याने "अथ यदहश्चन्द्रमा न दृश्यते

## THE PRINCESS OF WALES SARASVATI BHAVANA TEXTS.

Edited by

GOPINATH KAVIRAJ, M. A.

No. 1—The Kiranavrli Bhaskara a Commentary on Udayana's Kiranavali, Dravya Section, by Padmanabha Misra.
Ed. With Introductian and Index by Gopinath Kaviraj, M. A, Rs. 1-12

No 2—The Advaita Chintamani, by Rangoji Bhatta.
Ed. with Introduction etc. by Narayan Sastri Khiste Sahityacharya. Rs. 1-12

No 3—The Vedanta Kalpalatika, Madhusudana Sarasvati.
Edited with Introduction etc.by Ramajna Pandeya Vyakaranacharya. Rs. 1-12

No 4—The Kusumanjali Bodhani, a Commentary on Udayana's Theistic Tract, Nyaya Kusumonjali,by Varadaraja. Ed. with Introduction etc. by Gopinath Kaviraj, M. A. Rs. 2-0

No 5—The Rasasara, a Commentray on Udayana's Kiranavali, Guna Section, by Bhatt Vadindra.
Ed. with a Introduction etc. by Gopinath Kaviraj M. A. Rs. 1-2

No 6—(Part I)—Thd Bhavana Viveka by Madana Misra, with a Commentary by Bhatta Umbeka.
Ed. With Introduction etc. by M. M. Ganganatha Jha, M. A., D. Litt, 0-12

No. 6—(Part II)—Ditto Ditto Bs. 0-12

No. 7—(Part I)—The Yoginihrdaya dipika, by Amrtananda Natha, being a Commentary on Yoginihrday, a part of Vamakesvara Tantra.
Ed. with Introduction etc. by Gopinath Kaviraj, M. A. Rs. 1-8

No. 7—(Part II) Ditto Ditto Rs. 1-4

No. 8—Rhe Kavyadakini, by Gangananda Kavindra.
Ed. with Introduction etc, by Jagannatha Sastri Hoshing Sahityopadhyaya. Rs. 0-10

No. 9—(Part I)—The Bhakti Chondrika, a Commentary on S'andilya's Bhaktisutras, by Narayana Tirtha.
Ed. with a Prefactory Note by Gopinath Kaviraj, M. A. Rs. 0-15

Oo. 10—(Part I)—The Siddhantaratna, by Baladeva Vidyabhusana.
Ed. with a Prefactory Note by Gopinath Kaviraj, M. A. Rs. 1-2

No. 10.—(Part II)—Do. Do. Rs. 2-12

No. 11—The Sri Vidya Ratna Sutras, by Gaudapada, with a Commentary by Sankararanya.
Ed. with Introduction etc. by Narayana Sastri Khiste Sahityacharya. Rs. 0-9

No. 12—The Rasapradipa, by Prabhakara Bhatta.
Ed. with Introduction etc. by Narayana Sastai Khiste Sahityacharya. Rs. 0-9

No. 13 –The Siddhasidhanta Sangraha, by Balabhadra.
Ed. with Introduction by Gopinath Kaviraj, M. A. Rs. 0-14

No. 14—The Trivenika, by Asadhara Bhatta.
Ed. with Introduction by Batukanatha S'arma Sahityopadhyaya, M. A. and Jagannatha Sastri Hoshing Sahityopadhyaya. Rs. 0-14

No. 15—(Part I)The Tripurarahasya. ( Jnana Khanda )
Ed. with a Prefactory Note by Gopinath Kaviraj M. A. Rs. 0-14

No. 15—(Part II )—Do. Do. Rs. 2-4

No. 15—(Part III )—Do. Do. Rs. 1-2

No. 15—(Part IV )—Do. with Introduction, etc. by Gopinath Kaviraj, M. A.

No. 16—The Kavya Vilasa, by Chiranjiva Bhattacharya.
Ed. with Introbuction etc. by Batukanatha S'arma Sahityopadhyaya. Rs. 1-2

No. 17—The Nyava Kalika, by Bhatta Jayanta.
Ed. with Introduction by M. M. Ganganatha Jha, M. A., D, Litt. Rs. 0-14

No. 18—(Part I)—The Goraksa Sidhanta Sangrha.
Ed. with a Prefactory Note by Gopinath Kaviraj. M. A. Rs. 0-14

No. 19—(Part I)—The Prakrita Prakasa by Vararuchi with the Prakrita Sanjivani by Vasantaraja and the Subodhini by Sadanada.
Ed. with Prefactory Note etc. by Batuk Nath Sarma, M. A. and Baladeva Upadhyaya, M. A. Rs. 2-4

No. 19—(Part II) Dito Dito Rs. 2-12

No. 19—(Part III) Introduction etc. (In preparation)

No. 20—The Mansa Tattva Viveka by Visvanatha Nyaya-panchanana Bhattacharya.
Edited with Introduction etc. by Jagannatha Sastri Hoshing Sahityopadhyaya, with a Foreword by Pandit Gopi Nath Kaviraja, M. A. Principal, Government Sanskrit College, Benares. Rs. 0-12

No. 21—(Part I—The Nyaya Sidhanta Mala by Jayarama Nyaya Panchanana Bhattacharya.
Edited with Introduction etc. by Mangal Deva Sastri M. A., D. Phil. (Oxon) Librarian, Govt. Sanskrit Library, Sarasvati Bhavana Benares. Rs. 1-0

No. 21—(Part II) Ditto Ditto Rs. 2-0

No. 22—The Dharmanubandhi Slokachaturdasi by Sri Sesa Krsna with a Commentary by Rama Pandit.
Edited with Introduction etc. by Narayana Sastri Khiste Sahityacharya, Assistant Librarian, Government Sanskrit Library, Saraswati Bhavana, Benares. Rs. 1-0

No. 23—Navaratrapradipa by Nanda Pandit Dharma-dhikari.
Ed. with Introduction etc. by Vaijnatha Sastri

Varakale. Dharmasastra-Sastri, Sadholal Research Scholar, Sanskrit College, Benares wiih a Foreword by P. Gopinath Kaviraj, M. A., Principal, Government Sanskrit College Benares. Rs. 2-0

No. 24—The Sri Ramatapiniyopanisad with the commentary Called Rama Kasika in Purvatapini and Anandanidhi in Uttaratapini by Anand Vana. and Ed. with Introduction et·. by Anantarama Sastri Vetala Sahityopadhyaya, Post-acharya Scholar, Govt. Sanskrit College, Benares. with a Foreword by Pandit Gopi Nath Kaviraja, M. A. Principal, Government Sanskrit College, Benares. Rs. 3-12.

No. 25—The Sapindyakalpalatika by Sadasivadeva alias Apadeva with a Commentary by Narayana Deva. Edited with Introduction etc. by Jagannatha Sastri Hoshinga, Sahityopadhya Sadholal Research Scholar, Govt. Sanskrit College, Benares. Rs. 1-4

No. 26—The Mrigankalekha Natika by Visvanatha Deva Kavi.

Edited with Introduction etc by Narayana Sastri Khiste Sahityacharya. Asst. Librarian. Government Sanskrit Library, Benares. Rs. 1-0

No. 27—The Vidvacharita, Panchakam by Narayana Sastri Khiste Sahityacharya, Assistant Librarian, Govt. Sanskrit College Library, Sarasvati Bhavana, Benares. With an Introduction by Gopinath Kaviraja, M. A., Principal, Govt. Sanskrit College, Benares. Rs. 2-0

No. 28—The Vrata Kosa by Jagannatha Sastri Hosinga Sahityopadhyaya, late Sadholal Research Scholar, Sanskrit College, Benares. With a Foreword by Principal Gopinath Kaviraja M. A., Principal, Govt. Sanskrit College Benares. Rs. 4-0

No. 29—The Vritti dipika by Mauni Sri Krsna Bhatta. Edited with Introduction etc. by Pt. Gangadhara Sastri Bharadvaja. Professor, Govt. Sanskrit College Benares. Rs. 1-2

No. 30—The Padartha Mandanam By Sri Venidatta.
Edited with Introduction etc. by Pndit Gopala Sastri Nene, Professor, Govt. Sanskrit College, Benares. Rs. 0-14

No. 31—( Part I )—The Tantraratna by Partha Sarathi Misra.
Edited by M. M. Dr. Ganganatha Jha, M. A. D. Litt. Vice—Chancellor. Allahabad University, Allahabad. Rs. 1-14

No. 32—The Tattvasara by Rakhaldasa Nyayaratna.
Edited with Introduction etc. by Harihara Sastri, Benares Hindu Universiiy, Benares. Rs. 1-0

NO. 33—( Part I ) The Nyaya Kaustubha by Mahadeva Puntamkar. Edited with Introddction etc. by Umesa Misra, M., A., Allahabad University, Allahabad. Rs. 3-4

No. 34—( Part I ) The Advaita Vidyatilakam by Sri Samarapungava Diksita. With a Commentary by Sri Dharmayya Diksita. Rs. 1-4
Edited with Introduction, etc. by Ganapati Lal Jha, M. A.. Sadholal Research Scholar, Govt. Sanskrit Library, Benares.

No. 35—The Dharma Vijaya Nataka by Bhudeva Sukla.
Edited with Introduction etc. by Pandit Narayana Sastri Khiste, Asstt. Librarian, Govt. Sanskri, Library, Benares. Rs. 1-4

No. 36—The Ananda Kanda Champu, by Mitra Misra.
Edited with a Foreword by Gopinath Kaviraj, M. A. by Nanda Kishore Sahtyacharya, Research Scholar. Sanskrit College, Benares. Rs. 3-8

No. 37—The Upanidana Sutra Edited with Introduction by Dr. Mangal Deva Sastri M. A. D. Phil, Librarian Govt. Sanskrit Library, Benares. Rs. 1-0

No. 38—The Kiranavali prakasa didhiti ( Guna section ) by Raghu natha Siromani.
Edited with Introduction by Pandit Badri nath

Sastri, M. A., Lecturer in Sanskret, Lucknow University. Lucknow. Rs. 1-12

No. 39—The Rama Vijaya Maha Kavya. by Rupa Natha. Edited with Introduction by Pandit Ganapatilal Jha, M. A., Sadholal Research Scholar, Govt. Sanskrit Libraiy, Benares. Rs. 2-0

No. 40—( Part I )—The Kalatattva Vivechan, by Raghunatha Bhatta. With a Foreword by Principal Gopinath Kaviraj Edited with Introduction by Pandit Nanda Kianhore Sarma Sahityachrya, Research Scholar, Govt. Sanskrit Library, Benares Rs. 4-0

No. 40—( Part II ) Ditto Ditto

No. 40—(Part III) Ditto Ditto ( In preparation )

No. 41—( Part I ) The Siddhanta Sarva Bhauma by Sri Munisvara.
Edited with Introduction etc. by Jyautisacharya. Pandit Sri Murlidhar Thakker.
Late Sadholal Research Scholar Sanskrit College, Benares. Rs. 3-0

No. 42—Bheda Siddhi. by Visvanatha Panchanan Bhattacharya.
Edited with notes etc. by Nyaya Vyakaranacharya Pandit Sri Surya Narayan Shukla, Professor Govt. Sanskrit College, Benares.

# THE PRINCESS OF WALES SARASVATI BHAVANA STUDIES.

Edited by

GOPINATH KAVIRAJ, *M.* A.

Vol. I—

(a) Studies in Hindu Law (1): its Evolution, by Ganganatha Jha,

(b) The View of Nyaay Vaisesika Philosophy, by Gopinath Kaviraj.

(c) Nirmana Kaya, by Gopinath Kaviraj. Rs. 1-12

Vol. II—

(a) Parasurama Misra alias Vani Rasala Raya. by Gopinath Kaviraj.

(b) Index to Sabara's Bhasya, by the late Col. G. A. Jacob.

(c) Studies in Hindu Law (12):—its sources, by Ganga natha Jha.

(d) A New Bhakti Sutra, by Gopinath Kaviraj.

(e) The System of Chakras according to Goraksa natha, by Gopinath Kaviraj,

(f) Theism in Ancient India, by Gopinath Kaviraj.

(g) Hindu Poetics, by Batuka natha Sarma.

(h) A Seventeenth Century Astrolabe, by Padmakara Dvivedi.

(i) Some aspects of vira Saiva Philosophy, by Gopinath Kaviraj.

(j) Nyaya Kusumanjali (English Translation), by Gopinath Kaviraj.

(k) The Definition of Poetry, by Narayana Sastri Khiste.

(l) Sondala Upadhyaya, by Gopinath Kaviraj, Rs. 5

Vol. III—

(a) Index to Sabara's Bhasya, by the late Col. G. A. Jacob.

(b) Studies in Hindu Law (3):—Judical Procedure: by Ganganatha Jha.
(c) Theisim in Ancient India, By Gopinath Kaviraj.
(d) History and Bibliography of Nyaya Vaisesika Literature by Gopinath Kaviraj.
(e Naisadha and Sri Harsa by Nilakamala Bhattacharya.
(f) Indian Dramaturgy, by P. N. Patankar. Rs. 5

Vol, IV.—
(a) Studies in Hindu Law (4):—Judicial Procedure by Ganganatha Jha.
(b) History and Bibliography of Nyaya Vaisesika Literature, by Gopinath Kaviraj.
(c) Analysis of the Contents of the Rigveda-Pratisakhya, by Mangala Deva Sastri.
(d) Narayana's Ganita Kaumudi, by Padmakara Dvivedi.
(e) Food and drink in the Ramayanic Age, by Manmathanath Roy.
(f) Satkaryavada:—Causality in Sankhya, by Gopinath Kaviraj.
(g) Discinline by Consequences, by G. L. Singha.
(h) History of the origin and expansion of the Aryans, by A C. Ganguly.
(i) Punishments in ancient Indian Schools, by G. L. Singha. Rs. 5-0

Vol. V—
(a) Ancient Home of the Aryans and their migration to India by A. C. Ganguly.
(b) A Satrap Coin, by shyamlal Mehr.
(c) An Estimate of the civilisation of tbe Vanaras as depicted in the Ramayana, by Manmathanatha Roy.
(d) A Comparison of the Contents of the Rigveda, Vajasaneya, Taittiriya and Atharveda Pratisakhyas, by Mangala Deva Sastri.
(e) Formal Training and the Ancient Indian Thought by G. L. Sinha.

(f) History and Bibliography of Nyaya Vaisesika Literature by Gopinath Kavira .

(g) A Descriptive Index to the names in Ramayana, by Manmatha Nath Roy.

(h) Notes and Quaries, [1] Virgin Worship, by Gopinatha Kaviraj, Rs. 5-0

Vol. VI—

(a) Index to Sabara's Bhasya, by the late Col. G. A. Jacob.

(b) Some Aspects of the History and Doctrines of the Nathas. by Gopinath Kaviraj.

(c) An Index etc. to the Ramayana, by Manmatha nath Roy.

(d) Studies in Hindu Law, by M. M. Ganganatha Jha.

(e) The Mimamsa manuscripts in the Govt. Sanskrit Library (Benares), by Gopinatha Kaviraj.

(f) Notes and Queries, by Gopinatha Kaviraj. Rs 5-0

Vol. VII—

(a) Bhamaha and his Kavyalankara, by Batuknath Sarma and Baladeva Upadhyaya.

(b) Some variants in the readings of the Vaisesika Sutras, by Gopinatha Kaviraj.

(c) History and Bibliography of Nyaya Vaisesika Literature,by Gopinath Kaviraj.

(d) An attempt to arrive at the correct meaning of Some obscrue Vedic words, by Sitaram Joshi.

(e) A comparison of the contents of the RigVeda, Vajasaneya, Taittiriya, and AtharvaVeda (Chaturadhyayika) Pratisakhyas, by Mangal Deva Shastri.

(f) An Iudex to the Ramayana, by Manmatha Nath Roy.

(g) An Index to Sabara's Bhasya, by the late Col. J. A. Jacob.

(h) Gleanings from the Tantras, by Gopinath Kaviraj.

(i) The date of Madhusudana Sarasvati, by Gopinatha Kaviraj.

(j) Descriptive notes on Sanskrit Manuscripts, by Gopinatha Kaviraj.

(k) A Note on the meaning of the word Parardha, by Umesa Misra. Rs. 5-0

Vol. VIII—

(a) Indian Philosophy, by Taraknath Sanyal.

(b) An Index to the Ramayana, by Manmatha Nath Roy.

(c) Index to Sabara's Bhasya, by the late Col. J. A. Jacob.

(d) Hari Svami, the Commentator of Sataptha Brahmana and the date of Skanda Svami, the Commentator of the Rigveda, by Mangala Deva Sastri.

(e) Mysticism in Veda, by Gopinath Kaviraj.

(f) The Devadasi : a brief history of the Institution, by Manmathanath Roy.

Vol. IX.—( In progress )

(a) The Life of a Yogin, by Gopinath Kaviraj.

(b) On the Antiquity of the Indian Art canons, by Haridas Mitra.

(c) Prachya Vargi Karna Padhati, by Satish Chandra Guha.

[d] An Index to the Ramayana, by Manmath Nath Roy.

# THE PRINCESS OF WALES SARASVATI BHAVAN STUDIES

( SANSKRIT )

## SARASVATALOKA

Edited by

GOPINATH KAVIRAJ, M.A.

Kirana 1—( In progress ):

(a) Mangalam etc., by Narayana Sastri Khiste.

(b) Mimansaka mata samgraha, by Haranchandra Bhattacharya.

(c) S'rimad Acharya Mandana Mis'ra, by Chinna Swami Sastri

(d) Bhagavato Buddhasya Charitam Upadesas cha: by Gopinath Kaviraj.

Kirana I—( Supplement )

Sanskrita Kavi Parichaya (Bharavi) by Nanda Kishore Sharma.

Kirana II - ( In progress ):

(a) Sarada Prasadanam by Narayan Sastri Khiste.

( b ) Chudamani Darsanam by Sasadhara Tarkachudamani.

To be had of

*The Superintendent*

GOVERNMENT PRESS, U. P.

ALLAHABAD.

